**अह पंचकलाणं आइलहुअस्स णामाइँ ।[१]**

**सुणरिंद[२] अहिअ[३] कुंजरु[४]**
**गअवरु[५] दंताइ दंति[६] अह मेहो[७] ।**
**एराबइ[८] ताराबइ**
**गअणं झंपं[९] तलंपेण[१०] ॥ २८ ॥ गाहा ।**

२७। अथ सर्व्वलघुनामानि ॥ प्रथमम् ईदृशो विप्रः, द्वितीये पञ्चशरः जातिशिखराभ्यां सहेत्यर्थः। द्विजवरः परमोपायो भवति चतुष्केण लघुकेन ॥ ईदृश इति विप्र इति यथा प्रथम-नाम तथा द्वितीये पञ्चशर इत्यर्थः। (C)

२७। चतुर्लघोर्नामान्याह ॥ पढ ॥ प्रथमं विप्र एतादृशो द्वितीयः पंचशरो जातिः शिखरैः। द्विजवरः परम उपायो भवति चतुष्केण लघुकेन ॥ २७। (G)

२८। सुनरेन्द्रः अहितः कुञ्जरगज[वर]दन्तौ दन्ती अथ मेघः। ऐरावतस्तारापतिर्गगनं झम्पस्तुउप्पेन। कुञ्जरगज[वर]दन्ताविव्य-नेन कुञ्जरदन्तो गजवरदन्तश्चेत्युक्तं भवति। तुउप्पेन तुउप्पशब्देन सह, तुउप्पशब्दो झम्पपर्यायः। (C)

२८। १ प्रत्येकं पंचकलानां नामानि। (A). पंचकलानां प्रत्येकं नामानि (D), पंचकलाणं आइलहुअस्स णामाइँ (C) २ सुणरेंद (A, B & C). ३ अहुअ (B). ४ कुंजर (A, B & C). ५ गअवर (A, B & C). ६ दंता दन्ति (A), दिग्गाइ दन्ति (B), दिग्गाइ दन्ति (C), दन्ताइ दंति (D), दंताइ दन्तौ (F). ७ घमेहो (F). ८ एराबअ (F). ९ ऊपं (F). १० तलंपेहि (A), तुलप्पेण (B & C), तलेपेण (F).

अह मज्झलहुअस्स।[१]

पक्खि बिराड[२] मइंदह[३]
वीणा[४] अहि जक्ख अमिअ[५] जोहलअं।
सुप्पस[६] पसगासण[७]
गरुड[८] विआणेहु[९] मज्झ[१०] लहुएण॥ २९॥ उग्गाहा।

२८। अथ पंचकलस्याष्टौ भेदास्तत्र प्रथमभेदस्यादिलघुद्विगुरुरूपस्य नामान्याह॥ सुण॥ सुनरेंद्रोऽधिक-कुंजर-गजवरदंता इति दंतौ च मेघः। ऐराव[त]स्तारापतिर्गगनं उपम् एतत्प्रकारेण॥ (G).

२९। पक्षिविडालमृगेन्द्रहरिणा अहियक्षः अमृतं योहल[यो]कः। सुपर्णः पक्षगामनो गरुडो विजानीहि मध्यलघुकेन॥ अहियक्ष-इति नामद्वयम् इति कश्चित्। योऽयशब्दोऽप्यत्र वर्त्तत इति बोध्यं। मध्यलघुकेन प्रयुक्तस्य पञ्चकलस्यैतानि नामानीत्यर्थः। अत्र च सुपर्णेति पवनाशनेति केचित्पठन्ति। तत्र विषमे जगणेऽपि मगणभङ्गः [?] समाधेयो भवति। (C).

२९। मध्यलघोः पंचकलस्य नामान्याह॥ पक्खि॥ पक्षी

२९। १ अह मज्झ गुरुअस्स [?] (B). मध्यलघोर्नामानि (D). २ बिराल (B & C). ३ मइंद (C). मइ (D). मइंदो (F). ४ वरीणा (B & C), वषा (D). ५ आमिअ (B). अमिअ (C). कमल (F). ६ सुपस (B, C & D), सुप्पसु (F). ७ पसगासणं (A). पवणासणं (B & C), पसगासणु (F). ८ गुरुअ (B), गरुल (C). गरुडो (F). ९ विआणह (C), विजाणह (F). १० मज्झ (D)

बहु विविह पहरणेहिं[१]
पंचक्कलश्रो[२] गणो होइ ।
गश्र रह तुरंग पाइक्क[३]
एहु[४] णामेण जाण[५] चउमत्ता[६] ॥ ३० ॥ विग्गाहा[७] ।

---

विराड् मृगेंद्रो वीणा अहिर्यच: अमलं जोहलं । सुपर्णः पन्नगाशनो गरुडो विजानीत मध्यलघुकेन ॥ २९ ॥ (G).

३०। अथ सामान्यतः पञ्चचतुष्कलयोर्नामानि बहुविविहे-त्यादि । बहुविधप्रहरणैः पञ्चकलो गणो भवति । गज-रथ-तुरङ्ग-पादाता एतन्नाम्ना भवति [जानीहि] चतुर्मात्रिकं ॥ बहूनि यानि प्रहरणानि विविधानि अवान्तरभेदयुक्तानि तैस्तदाचकशब्दैः पञ्चकलो गणो भवति ॥ (C).

३०। * * * अथ चतुष्कलस्य सामान्यानि नामान्याह, गअ रहेति । गजः रथः तुरगः पद[दा]तिः, एतैर्नामभिः जानीहि चतुर्मात्रिकाम् ॥ (E).

३०। पंचकलस्य सामान्यनामान्याहार्धेन ॥ बहु ॥ बहुविविध-प्रहरणैः पंचकलो गणो भवति । अथ सिंहावलोकितन्यायेन

३०। १ पहरणेहिं (A & B), पहरणे (D). २ पंचकलश्रो (D), पंचचकलश्रो (F). ३ पाइक्क (D), पायक्क (F). ४ एह (D, E & F). ५ णोर (A), जाए (D), जाणे (F). ६ चउमत्तो (F). Here follows in MS. (C) the following: जह सव्वं सच्चलपआ[व]त्ता जा[वा]न एदं पूर्व[आ]र्धेन [व] । सव्वत्त चतुष्कलानां ना[वा]न एदं परार्धेन ॥ ७ अन्यत्रविपुलोद्गीति । Vide Ghosha's Compendium. pp. 7-11.—Ed.

तालंक[1] हार णेउर
केउरश्रो होंति[2] गुरुभेश्रा ।
सर मेरु दंड काहल
लहुभेश्रा होंति[3] एत्ताइ[4] ॥ ३१ ॥ गाहू[5] ।

चतुष्कलनामान्याह अर्धेन । गजो रथस्तुरंगः पावक एभिर्नामभिर्ज्ञेयश्चतुर्मात्रः ॥ ३० । (G).

३१ । गुरुलघुनामान्याह द्वाभ्यां [श्लोकार्द्धाभ्यां] । ताड़ङ्को हारो नूपुरः केयूरकं भवन्ति गुरुभेदाः । शरो मेरुदण्डः काहलो लघुभेदा भवन्ति एते ॥ (C).

३१ । अथैकगुरोर्नामान्याह तालंकेति । ताटंका हारा नूपुरं केयूरम् एतानि गुरुभेदाः गुरोर्नामानीति यावत्, होंति — भवंति । अथैकलघोर्नामान्याह, सरेति । सरः मेरुः दंडः काहलः, एत्ताइ — एतानि, लहुभेश्रा — लघुभेदा लघोर्नामानि, होंति — भवंति । (E)

३१ । गुरुनामान्याह । ताटंकं हारो नूपुरं केयूरं भवंति गुरुभेदाः । लघुनामान्याह सार्धेन । शर ॥ शरमेरुदंडः काहलं लघुभेदा भवंत्येतावंतः ॥ ३१ ॥ (G)

३१ । १ ताडंक (F). २ होंति (A & D), होन्ति (B), हन्ति (C). ३ होंति (A & D), होन्ति (B & C). ४ एत्ताइँ (D & F). ५ Here follows in (C) पूर्व्व[म]वे गुरवस्य ना[मा]म एवं । परस्तुतेष लघवस्य ना[मा]नं ॥

संख[1] फुल्लं[2] काहल[3]
रवं असेसेहिँ[4] होंति[5] कलअलअं[6] ।
रूअं णाणा कुसुमं
रस गंधं[7] सद्द[8] परसाणं[9] ॥ ३२ ॥ गाहा ।

३२ । शंखः काहलः अशेषरववाचकाः कलकलादयः, रूपं नानाकुसुमं रस-गंध-शब्द-स्पर्शाः एतेऽपि लघुसंज्ञाः । (A).

३२ । शङ्खः स्फुटकाहलः रवोऽशेषैर्भवन्ति कलकलकः । रूपं नाना कुसुमं रसो गन्धः शब्दप्रमाणं ॥ एते शब्दा गुरु[?]भेदा गुरु[?]वाचकाः, एवमग्रेऽपि, रवशब्दोऽशेषैर्नामभिः सह भवन्ति लघुवाचकाः शङ्खादयः शब्दाः । कलअलओ इत्यत्र सुपसिद्ध इति कश्चित्पाठः प्रमाणमेतत् ॥ (C).

३२ । शंखः पुष्पं काहलं रवः कनकं लता रूपं नाना कुसुमं पुष्पजातीनां यावंति नामानि तानि सर्वाणीत्यर्थः । रसः गंधः शब्दः एतैः अशेषा लघुभेदा भवंतीत्यनुकर्षः इति प्रमाणं निश्चयः । (E).

३२ । शंखः पुष्पकुलं काहलं रवः अशेषैर्भवति कलकलः । रूपं नाना कुसुमं रसो गंधः शब्दः स्पर्शः ॥ ३२ । (G).

३२ । १ सङ्ख (B), संख (C), संक (F) २ फुल (A), फुल्ल (B, C & F). ३ कहारं (A), काहालं (B & C), काहलं (E). ४ असेसेहि (A), असेसेहिँ (B), असेसेहिं (C), असेसेहि (D & E). ५ होइ (A), होंति (B), होन्ति (C) ६ कलअलअ (A), करअलअं (D), कलअ लआ (E), कलअलअं (F). ७ गंध (A & E). ८ सह (C), सद्दं (F). ९ परसेण (A), परसाणु (C), परसाणं (D), परिसाण (F).

अह वस गणा ।[१]

मो तिगुरू[२] णो तिलहू
लहुगुरुआई[३] जभा[४] ज मज्झगुरू[५] ।
मज्झलहू[६] रो सो उण
अंतगुरू[७] तो बि अंतलहुएण[८] ॥ ३३ ॥ उग्गाहा ।

३३ । मस्त्रिगुरुः ऽऽऽ, नस्त्रिलघुः ।।।, लघुगुर्व्वादी यभौ ।ऽऽ, ऽ॥, जो मध्यगुरुः ।ऽ।, मध्यलघू रः ऽ।ऽ, स पुनरन्तगुरुः ।।ऽ, तोऽपि अन्तलघुकेन ऽऽ।, एवमेकगुरुगं ए[क]लघुर्लं इत्यपि बोध्यम् । (C).

३३ । अथ वर्णवृत्तोपयोगिनो मगणादीनष्टौ गणान्नामलक्षणाभ्यामुद्दिशति मोति इति । तिगुरु — त्रिगुरुः गुरुत्रयस्वरूपो यो मगणः ऽऽऽ, तिलहु — त्रिलघुः लघुत्रयस्वरूप इति यावत् णो — नगणः ।।।, आदिलघुगुरू यभौ, तेन आदौ यस्य लघुः स यगणः आदौ यस्य गुरुः स भगण इत्यर्थः । मध्यगुरुः — यस्य मध्ये गुरुः स जगणः । मध्यलघुः — यस्य मध्ये लघुः ऽ।ऽ स रो — रगणः । अंतगुरुः — यस्य अंते गुरुः स पुनः सो — सगणः । अंतलघुना उपलक्षितः तो — तगणः, यस्यांते लघुः स तगण इत्यर्थः । (E).

३३ । १ अथ वर्णगणाः । (A & F). अथ वर्णोद्दिष्टानां गणाः ॥ (D). २ तिगुरु (C, D & E). ३ लहुगुरुआइ (B). लहुगुरुआई (C), लहुगुरुआइं (D), लहुगुरुआइ (E). ४ यभौ (C & E). जभउ (D). यभौ (F). ५ मज्झगुरु (D), मज्झगुरू (E). ६ मज्झलहू (E). ७ अंतगुरू (A), अंतगुरु (D), dropt in (C). ८ अंतलहुएण (B), अन्तलहुएण (C). अन्तलहुएण (D).

अह गणदेवता ।

पुहवी जल[1] सिहि[2] पवणो[3]
गअणं सूरो अ चंदमा[4] णाओ ।
गण अट्ठ इट्ठ[5] देओ[6]
जहसंखं[7] पिंगले कहिओ[8] ॥ ३४ ॥ गाहा ।

३३। अथ मादिगणस्वरूपमार्ययाह। मो तीति । मस्त्रिगुरुन-स्त्रिलघुर्भगुर्वादी यभौ जो मध्यगुरुः। मध्यलघू रः स पुनरंतगुरु-स्तोऽप्यंतलघुः ॥ ३३ ॥ (G).

३४। अथ गणानां देवतामाह। पृथिवी जलं शिखी वातो गगनं सूरश्चन्द्रमा नागः । गणानामिष्टदेवा यथासंख्यं पिङ्गलेन कथिताः॥ वक्ष्यमाणफलदातृत्वं देवतानामेव, अतो देवताकथनम् । (C).

३४। मनुष्यकवित्वे कविनायकयोर्देवताकवित्वे देवतानां दुष्ट-धर्मत्वात्कवेरेव कवित्वस्यादौ दुष्टगणपाते अनिष्टफलप्राप्तिरक्षार्थं शुभगणपाते शुभफलवृद्धये च तत्त[द्]गणदेवताः पूज्या इति मग-णाद्यष्टगणानां क्रमेण ता आह, पुहवीति । पुहवी — पृथिवी मगणस्य त्रिगुरोः १, जल — जलं नगणस्य त्रिलघोः २, सिहि — शिखी अग्निः यगणस्यादिलघोः ३, कालो भगणस्यादिगुरोः ४, गगनं मध्यगुरोर्जगणस्य ५, सूर्यस्य अंत[मध्य]लघोः रगणस्य ६, चंद्रमा मध्यलघोः [अंतगुरोः] सगणस्य ७, नागा अंतगुरोः[लघोः] तगणस्य ८,

३४। १ जलं (C). २ सिषि (B), सिखी (C). ३ वाओ (B & C), काओ (D), काओ (E), पवणो (F). ४ चन्द (A, B & C). ५ यह (A), इयइ (E). ६ देव (E & F). ७ संख्यं (B). ८ कथिओ (B).

मगण णगण दुइ[1] मित्त हो[2]
भगण[3] अगण[4] हो[5] भित्त ।
उआसीण[6] ज त दुअउ[7] गण
अवसिट्ठउ अरि णिच्च[8] ॥ ३५ ॥ दोहा ।

एते गणाष्टकेऽष्ट देवाः यथासंख्यं पूर्वोद्दिष्टक्रमेण पिंगलेन कथिताः । (E).

३४ । पृथिवी जलं शिखी पवनो गगनं सूर्यचंद्रमा नागः । गणाष्टकस्येष्टदेवता यथासंख्यं पिंगलेन कथिताः ॥ आर्या । (G).

३५ । अथ गणेषु मित्रादिक्रमाह । मगण-नगणौ मित्रे भवतः, यगण-भगणौ भृत्यौ । उदासीनौ ज-तौ द्वौ गणौ, अवशिष्टौ वैरिणौ नित्यम् ॥ अवशिष्टौ सगण-रगणौ । (C).

३५ । वक्ष्यमाणशुभाशुभफलोपोद्घातेन गणानां परस्परस्य मित्रादिभावं कथयति । मगण-नगणौ द्वौ गणौ ऽऽऽ, ।।। मित्रे मित्रसंज्ञाविति यावत् भवतः, भगण-यगणौ द्वौ गणौ ऽ।।, ।ऽऽ भृत्यौ भृत्यसंज्ञौ भवतः, ज-तौ जगण-तगणौ द्वौ उदासीनौ उदासीनसंज्ञौ, अवशिष्टौ रगण-सगणौ अरी शत्रुसंज्ञौ नित्यं भवत इति क्रियापदं द्विवचनांते सर्वत्र योज्यम् । (E)

In MS (G) the gloss is wanting.

३५ । १ दुइ (B & C). २ चोरँ (B), चोर (C & E). ३ जगण (A & B), यगण (C). ४ भगण (A, B & C), यगण (E & F). ५ चोर (B, E & F). ६ उदासीन (F). ७ उभउ (B). ८ णिहु (C).

अह गणफल ।

मगण रिद्धि[1] थिर कज्ज[2] अगण[3] सुह[4] संपअ[5] दिज्जइ
रगण मरण संपलइ[6] जगण खरकिरण[7] विसज्जइ[8] ।
तगण सुण्ण फल कहइ सगण सइदेसु[9]व्वासइ[10]
भगण रचइ[11] मंगल अ[12]णेक[13] कइ[14] पिंगल भासइ[15] ।
जत[16] कव्व गाह दोहइ[17] मुणहु
णगण होइ पढमक्खरइ[18] ।
तसु[19] रिद्धि[20] बुद्धि[21] सव्वउ[22] फुरइ
रण राउल दुत्तर तरइ ॥ ३६ ॥ छप्पअ ।

---

३६ । गणानां फलमाह । मगण ऋद्धिं स्थिरकार्य्यं सौख्यं ददातीत्यर्थः । यगणः सुखसम्पदं ददाति । रगणो मरणं सम्पादयति । जगणः खरकिरणं विसर्ज्जयति, खरकिरणशब्देन उद्वेगा-

---

३६ । १ रधि (B, C, E & F) २ कज्ज (A), कज्ज (B), left out in (C) from थिर to रिद्धि in the seventh line. ३ जगण (A & B), यगण (E & F). ४ सह (B). ५ संपरं (A). ६ संपलइ (E). ७ किरणि (D). ८ विसेसइ (F). ९ देसउ (B), देसउ (D), वासं (F) १० विसज्जइ (F). ११ चवइ (A & D), रचइ (E), कुणइ (F). १२ मंगलणं (A & F). १३ णेक (A), णंत (E), ण (F). १४ रच (B), कवि (D). १५ परिभासइ (F). In MSS. (E) and (F) there is a transposition in the second and third lines.—Ed. १६ जइ (A). १७ कव्वदोहगाहउ (A), कव्वगाहदोहा (D), कव्वगाहादोहइ (E), कव्वदोहइ (F). १८ पढमक्खरहि (A & B), पढमक्खरइ (D). १९ तसि (F). २० रधि (B & E). २१ सिद्धि (A). २२ सव्वइ (A), सव्वउ (C), सवइ (D), सव्व (E).

दिर्भक्ष्यते । तगणः शून्यफलं कथयति । सगणः स्वदेशादुद्वासयति । भगणो रचयति मङ्गलं, जानीहि कविपिङ्गलो भाषते । यावत् काव्यं गाथादोहादिकं जानीहि नगणः प्रथमाक्षरे तस्य ऋद्धिः बुद्धिः सर्व्वत्र स्फुरति, रणे राजकुले दुस्तरं तरति ॥ वर्णवृत्तेषु गणप्रतिनियमात् गाथादोहादावित्युक्तं, तत्र प्रथमो नगणश्चेद्भवेत् तदा ऋद्ध्यादिकं स्यादित्यर्थः । सर्व्वश्लोके तथाभावासम्भवे हि प्रथमश्लोकेऽवश्यं कार्य्यम् । (C).

२६ । अथ मगणाद्यष्टगणानां काव्यादौ पतने प्रत्येकं फलमाह मगणेति । कवित्वस्यादौ यदि मगणः पतति, तदा ऋद्धिः कार्यं स्थिरं ददातीत्याकर्षः । यदि यगणः पतति * * * तदा मरणं प्रयच्छति । यदि सगणः पतति, तदा सहवासान्निजदेशादुद्वासयति । यदि तगणः पतति, तदा शून्यं फलं कथयति । यदि जगणः पतति, तदा खरकिरणं संतापं विसर्जयति । भगणः अनेकानि मंगलानि कथयति । यावत्काव्यगाथादोहास्तत्र प्रथमाक्षरं प्रथमगणो यदि नगणो भवति, तदा तत्र ऋद्धिबुद्धयः सर्वाः स्फुरंति, रणे राजकुले दुस्तरं तरति इति मुणङ्ग जानीत इति कविपिंगलो भाषते । (E).

२६ । मगण ऋद्धिं स्थिरकार्यं यगणः सुखं संपत्तिं ददाति, रगणे मरणं संपतति, सगणः सहवासं विसर्जयति, स्वदेशः सहवासः । तगणः शून्यफलं कथयति । जगणः खरकिरणं विशेषयति । भगणः करोति मंगलमनेकं सुकविः पिंगलः परिभाषते । यत्र काव्ये दोहादौ जानीत नगणो भवति प्रथमाक्षरे । तत्र ऋद्धिः बुद्धिः सर्वं स्फुरति, [रणं] राजकुलं दुस्तरं तरति ॥ (G).

अह दुगण विआरो ।[१]

मित्त मित्त दे[२] रिद्धि बुद्धि अरु मंगल दिज्जइ[३]
मित्त भिच्च थिर[४] कंध[५] जुज्झ[६] णिब्भअ[७] जअ[८] किज्जइ[९] ।
मित्त उआसे कज्ज बंध णहि[१०] पुणु[११] पुणु[१२] छिज्जइ[१३]
मित्त होइ जइ[१४] सत्तु गोत्त बंधव[१५] पीडिज्जइ[१६] ।
अरु भिच्च मित्त[१७] सब[१८] कज्ज[१९] हो[२०]
भिच्च भिच्च[२१] आअत्ति[२२] चल[२३] ।
सब[२४] भिच्च उआसे[२५] धणु[२६] णासइ[२७]
भिच्च बइरि[२८] हाकंद[२९] पल[३०] ॥ ३७ ॥ छप्पअ ।

३७ । अथ मित्रादियोगात्फलमाह । मित्रान्मित्रमृद्धिं बुद्धिम् अपरं मङ्गलं ददाति, मित्राद्भृत्यः स्थिरकन्दं युद्धे निर्भयं जयं

३७ । १ अथ द्विगणविचार । (A & D). २ देइ (A & D). ३ किज्जइ (A). ४ थिर (C). ५ कम्म (A & F), कम्म (B & C), कज्ज (D). ६ जुज्झ (C). ७ णिब्भअ (B & C). ८ जसु (A), ज (D). ९ दिज्जइ (A, B & C). १० बम्ब णहि (B), बम्ब णहि (C), बंध णहिं (D). बंध पड (E), णहि बंध (F). ११ पुण (B, D & E). १२ पुण (D & E). १३ किज्जइ (A, B, C & E). १४ जब (A). dropt in (C). १५ बंध (C). १६ पौडिज्जइ (B & C). १७ मित्ते (B, C & D). १८ सम (E), सबु (F). १९ कज्जा (C). २० होइ (D, E & F). २१ भिच्चे (D). २२ भिच्चाअत्ति (A). आअत्ति (E), आइत्ति (F). २३ चल (E). २४ सम्म (B & C), सब (D), सबु (F). २५ उवे (A). 24 & 25 transposed in (F). २६ धण (C), धन (D & F). २७ णसि (C). २८ बैरि (B & D), बैरि (C & E), बैरो (F). २९ हाकन्द (B). हाकन्द (C). ३० पलइ (B), पलक (C).

ददाति, मित्रादुदासीनः कार्य्यबन्धं नहि पुनः [पुनः] करोति, मित्राद्भवति यदि शत्रुः गोत्रबान्धवान् पीड़यति । अपरं भृत्यामित्रेण सर्वं कार्यं भवति, भृत्याद्भृत्येऽप्यायतिरुन्नति, भृत्यादुदासीनः [सर्व्वं] धनं नाशयति, भृत्यादैरिणाक्रन्दः फलति । (८).

२७ । अथ मनुष्यकवित्वे तदुक्तं फलं, पर्व्वतादिवर्णने क्वचिगतं, देवतावर्णने न क्वापि । तदुक्तमभियुक्तैः,— वर्ण्यते मनुजो यत्र फलं तद्गतमादिशेत् । अन्यथा तु कृते काव्ये कवेर्दोषावहं फलं ॥ देवता वर्ण्यते यत्र काव्ये क्वापि कवीश्वरैः । मित्राऽमित्रविचारो वा न तत्र फलकल्पनेति ॥ उपर्य्युक्तगणगुणानपवदन् द्विगणविचारमाह, मित्त मित्तेति । मित्रात् मित्रं यदि पतति तदेति शेषः सर्वत्र यथायथं योजनीयः, ऋद्धिं बुद्धिम् अपरं मंगलं ददाति, मित्राद्भृत्यो यदि पतति तदा युद्धे स्कन्धस्थैर्यं निर्भयं जयं करोति, मित्रादुदासीनो यदि पतति तदा कार्यबंधं कार्यप्रतिबंधं खलु पुनः पुनः करोति, मित्रात् यदि शत्रुः भवति तदा गोत्रबान्धवान् पीड़यति, अपरं भृत्यात् मित्रं यदि पतति तदा सर्वाणि कार्याणि भवंति, भृत्यात् भृत्यो यदि पतति तदा आयतिरुत्तरकालो वर्द्धते, भृत्यात् उदासीनो यदि पतति तदा धनं नश्यति, भृत्यात् वैरी यदि पतति तदा हाक्रंदः हाहाकारः पतति । (E

२७ । अथ द्विगणफलमाह ॥ मित्त ॥ मित्रगणान्मित्रगणश्चेत् ऋद्धिं बुद्धिमन्यन्मंगलं ददाति । मित्रात् भृत्यः स्थिरं कार्य्यं युद्धे निर्भयं जयं करोति । कज्जेति पाठे कार्यं । मित्रादुदासीने कार्यस्य नास्ति बंधः पुनः चीयते । मित्राद्भवति यदि शत्रुर्मित्र-

उआसीण[1] जइ मित्त कज्ज[2] किछु[3] ण[4] देखावइ
उआसीण जइ भिच्च सव्व आअत्ति[5] चलावइ[6] ।
उआसीण उआसे मंदभल[7] किछुअ[8] ण[9] देक्खिअ[10]
उआसीण[11] जइ सत्तु गोत्त वइरिउ[12] कइ[13] लेक्खिअ[14] ।
जइ सत्तु मित्त हो[15] सुम[16] फल[17]
सत्तु भिच्च हो[15] घरणि[18] णस[19] ।
पुणु[20] सत्तु उआसे धण[21] णसइ
सत्तु सत्तु णाअक्क[22] खस[23] ॥ ३८ ॥ छप्पअ ।

[गोत्र]बांधवान् पीडयति । अन्यत् भृत्यान्मित्रे सर्वं कार्यं भवति । भृत्याद्भृत्ये आयतिः चला । भृत्यादुदासे सर्वं धनं नश्यति । भृत्यावैरिणि आक्रंदः पतति ॥ ३७ ॥ (G)

३८ । उदासीनाद्यदि मित्रं किञ्चित्कार्य्यबन्धं दर्शयति । उदासीनाद्यदि भृत्यः सर्व्वामायतिमानयति । उदासीनादुदासीने भद्रं

३८ । १ उआसिण (E). २ कज्जु (F). ३ किच्छ (C), कुछ (F). ४ बंध (A, B & D), मंद (E & F). ५ आअत (C). ६ आलावइ (B), चलावइ (C), चलावेइ (F). ७ मंदफल (B & D), भव्वभ (C), मंदभलु (F). ८ किछु (B), किच्छ (C), किछुइ (E). ९ णवि (E & F). १० आविखा (D). ११ उआसी (D). १२ वविरिउ (B), वइरिउ (C), वैरीउ (E & F). १३ कवि (B), क (D). १४ माखिअ (D). १५ होइ (E). १६ सुह (A). १७ फला (C). १८ धरिणि (A & B). १९ णसइ (E). २० पुणि (D), पुण (E). २१ धण (B & C), धणु (E). २२ णाअक्क (C). २३ खस (B & C), खुस (E), ख (F).

फलं किमपि न दृश्यते। उदासीनाद्यदि शत्रुर्गोपवैरिक्षत्यं लिख्यते। यदि शत्रुतो मित्रं भवति शून्यफलं। शत्रुतो भृत्यो गृहिणीं नाश-यति। पुनः शत्रुत उदासीनो धनं नाशयति। शत्रुतः शत्रुर्नायकं खण्डयति। अयञ्च मित्रादियोगः श्लोकादिस्थलगतफलं भवति, तत्र यथोचितयोगो मात्रावृत्तेषु सम्भवति, तत्र च प्रतिश्लोकं तदसम्भवेऽपि प्रथमश्लोके यथोचितयोगः कार्यः, यथा पाके यन्ते पुलकितमित्यादौ समुचितयोगात् नैव छन्दसा ग्रन्थदेवतावादौ गुरुराजादिसमत्वञ्च प्रथ[म]श्लोकः पाद्यः, यथा कश्चित्कान्तेत्यादौ मित्राद्भृत्यगणः, यथा वा शिवः शक्तेत्यादौ भृत्याग्निमित्रगणः।

२८। उदासीनात् यदि मित्रं पतति तदा कार्यं किमपि अनिष्टं दर्शयति, उदासीनात् यदि भृत्यः पतति तदा सर्व्वामायतिं चालयति, उदासीनात् यदि उदासीनः पतति तदा अशुभफलं किमपि न दृश्यते, उदासीनात् यदि शत्रुः पतति तदा गोत्रमपि वैरिक्षतं ज्ञेयम्, यदि शत्रोर्मित्रं भवति तदा शून्यं फलं भवति किमपि फलं न भवतीत्यर्थः। यदि शत्रोर्भृत्यो भवति तदा गृहिणी नश्यति, पुनः शत्रोरनुदासीनो यदि पतति तदा धनं नश्यति, यदि शत्रोः शत्रुः पतति तदा नायकः स्खलति नश्य-तीत्यर्थः॥ (E).

२८। उदासीनाद्यदि मित्रं किंचिन्मंदं दर्शयति। उदासीना-द्यदि भृत्यः सर्वां आ[य]तीश्चालयति शंस[य]मायतिमानयति। उदासीनादुदासीने अशुभं किंचिन्नहि दृश्यते। उदासीनाद्यदि शत्रुर्गोत्रं वैरिवलक्ष्यते। यदि शत्रोर्मित्रं भवति शून्यफलं। शत्रो-

अह मत्ताणं उद्दिट्ठं ।[१]

पुब्ब[२] जुअल सरि अंका दिज्जसु

गुरु सिर अंके[३] सेस[४] मिटिज्जसु[५] ।

उबरल अंके[६] लेखिअ कहावहु[७]

ते परि[८] धुअ उद्दिट्ठां जाणहु[९] ॥ ३९ ॥ [अलिल्ला]

र्मृत्यो [यदि] भवति ग्टहिणी नश्यति । पुनः शत्रोरुदासीनः धनं नश्यति । शत्रोः शत्रौ नायकः क्षयति ॥ इदमन्यत्रोक्तम्—

वर्ण्यते नायको यत्र फलं तद्गतमादिशेत् ।

अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम् ॥

देवता वर्ण्यते यत्र काव्यं क्वापि कवीश्वरैः ।

मित्रामित्रविचारो वा न तत्र फलकल्पना ॥

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।

ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥ ३८ । (G).

३९ । अथ मात्राणामुद्दिष्टं । पूर्व्वयुगलसदृशानङ्कान् देहि, गुरुशिरोऽङ्कैः शेषं शोधय । उद्धृत्तमङ्कं लिखित्वानय, तेन पुनर्ध्रुवमुद्दिष्टं जानीहि ॥ एतादृशो गणोऽमुकप्रस्तारस्य कुत्र वर्त्तते इति प्रश्ने तत्कथनायोद्दिष्टमुच्यते । तत्र चायं प्रकारः— षट्कलप्रस्तारस्य

३९ । अथ मात्राणामुद्दिष्टं (A), अथ मत्तानामुद्दिष्टं (B), अथ मात्राणा उद्दिष्टं (D). २ पूर्ब्बं (B). पूब्ब (C), पुब (D). पूर्ब्बं (F). ३ अंक (A), अङ्क (B & C), अंकन्ह (E). ४ सेष (A). ५ मेटिज्जसु (A), मिटज्जसु (B & C). ६ अंक (A, B, C, D & E). ७ कहआव (A, B & C) कर आवहं (D), कर आवडु (E). ८ तहि पर (E). ९ जाण (A), जाणहं (D).

त्रिगुरुः कुत्र वर्त्तते इति प्रश्ने, गुरुत्रयं ऽऽऽ लिखित्वा तत्र पूर्व्व-युगलसदृशाङ्को देयः। तत्र च पूर्व्वाभावे कथं पूर्व्वयुगलसदृशत्वम्, अतः प्रथमतः कश्चिदङ्को देयः, स च प्रथमोपस्थितत्वादेकाङ्क एव, तस्य च वृद्ध्याकर्षणाद्युगलत्वं सम्पाद्य द्वयाङ्को लेख्यः, तत्र च गुरोर्द्विमात्रत्वादुपर्य्यधश्चाङ्को देयः, लघोरेकमात्रत्वादुपर्य्येव, तेन च [?] ततश्च एको द्वाविति मिलित्वा त्रयं द्वितीय-गुरो[रु]परि देयं, द्वयं त्रयमिति मिलित्वा पञ्चाङ्कस्तदधो देयः, तेन १, २, ३, ५, ततः पञ्च त्रयमिति मिलित्वा-ष्टाङ्कस्तृतीयगुरोरुपरि देयः, १, २, ३, ५, ८, पञ्चा-ष्टाविति मिलित्वा त्रयोदशाङ्कस्तदधो देयः। तथाच १, २, ३, ५, ८, १३ पूर्व्वयुगले सदृशाङ्कदानवृत्तं, ततश्च गुरुशिरःस्थिताङ्कानेकीकृत्य शेषाङ्कात्तेऽङ्का दूरीकरणीया भवन्ति। अ[त्र] गुरुशिरोऽङ्का एक-स्त्रयमष्टाविति मिलित्वा द्वादश, शेषाङ्कश्च त्रयोदश, इत्थं त्रयो-दशे द्वादशदूरीकरणे एकस्यावशिष्टत्वात् प्रथमत एव त्रिगुरुर्गण इति लभ्यते। इदञ्च बोध्यम् — अन्तिमो योऽङ्कः तावत्संख्यः प्रस्तारो भवति, तेन षट्कलस्य त्रयोदशभेदः प्रस्तार इति बोध्यम्। एवं सुख-बोधाय स्थलान्तरमपि दर्श्यते — षट्कलप्रस्तारे आदावन्ते च गुरुर्मध्ये लघुद्वयमेवं कुत्र वर्त्तते इति प्रश्ने, पूर्व्ववद्गुरोरुपरि एकाङ्कः १, द्वयाङ्कः २ अधः, तेन १, २. ततः प्रथम-लघोरुपरि त्रयाङ्कः ३, द्वितीयलघोरुपरि पञ्चाङ्कः ५, ततो गुरो-रुपरि अष्टाङ्कः ८, तदधस्त्रयोदशाङ्कः [१३], तथाच लिपिक्रमः १, २, ३, ५, ८, १३। प्रथमगुरोरुपरि एकाङ्कः चरमगुरोरुपरि अष्टाङ्कः

| | | |
|---|---|---|
| १ | | |
| ऽ | | |
| २ | | |

| | |
|---|---|
| १ | ३ |
| ऽ | ऽ |
| २ | ५ |

| | | |
|---|---|---|
| १ | ३ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | १३ |

| | | | |
|---|---|---|---|
| १ | ३ | ५ | ८ |
| ऽ | । | । | ऽ |
| २ | | | १३ |

लिखिला नव, शेषभूते षष्ठोद्दिष्टाङ्के नवाङ्क उने कृते चतुरङ्कस्तिष्ठति, तेन एतादृशचतुर्थस्थानमिति वक्तव्यम्। यदि तु षट्कलप्रस्तारे लघु-षट्कं कुत्रास्तीति प्रश्नस्तत्र पूर्ववदेकादिक्रमेणोद्दिष्टाङ्का देयाः, तत्र च गुरोरभावात् गुरूपर्यङ्काभावः, तेन शेषाङ्के किमपि कर्त्तनीयं नास्ति, ततः शेषाङ्क एवावशिष्यते। तथाच षट्कलप्रस्तारस्य त्रयोदशस्थाने लघुषट्कं पततीति वाच्यम्। (C).

| १ | २ | ३ | ५ | ८ | १३ |
|---|---|---|---|---|---|
| । | । | । | । | । | । |

२९। निर्दिष्टप्रस्तारक्रमस्थितिनिर्द्धारितसंख्याकगुरुलघुयुगलं रूपनिर्णीतस्वरूपे भेदे प्रथमलद्वितीयत्वादिधर्मनिर्द्धारणमुद्दिष्टं। तद्द्विविधं मात्रावर्णभेदात्। तत्र केनचित्कौतुकाद्वर्णोद्दिष्टे[?] पृष्टे तत्प्रकारमाह। पुव्व जुअलेति। पुव्व जुअल सरि अंका — पूर्व-युगलसदृशांकान्, अत्र पूर्वपदस्य पूर्वांकपरत्वात् पूर्वयुगलेत्यस्य पूर्वांकयुगलेत्यर्थः। एवं च पूर्वं यदंकयुगलं तत्सदृशं तत्तुल्यं तदैक्य-क्रियया यत्संपद्यते इति यावत् तमंकमित्यर्थः। दिज्जसु — दद्यस्व, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मकभेदस्वरूपं लिखित्वा तदक्षरो-परि पूर्वांकयुगलसदृशांकं यथाप्रकारसंख्यं क्रमेणोत्तरोत्तरं स्थापये-त्यर्थः। अत्र यतः पूर्वांक एव नास्ति त[तः] प्रथमातिक्रमे कारणा-भावात् प्रथमोऽङ्कः स्थाप्यः, यतश्च पूर्वम् अंकयुगलं नास्ति तत्र यएव पूर्वांको भवति तद्द्विगुणितांकः स्थाप्य इति गुरुपदेशोऽनु-संधेयः। ततः गुरु सिर अंकत्र — गुरुशिरोऽङ्कान् गुरोः शिरसि ये अंकास्तान्, सेस — शेषे सर्वांतिमे अंके, मिटिज्जसु — लोपय, गुरुशिरोऽङ्कबोधितसंख्यां सर्वांतिकांकबोधितसंख्यायामूनीकुरु इति भावः। एवं यति उवरल अंक — उर्वरितमंकं गुरुशिरोऽङ्क-

बोधितसंख्योपे सति सर्वान्तिमांकमध्ये उर्वरितो योऽंकस्तमित्यर्थः, सर्वान्तिमांकबोधितसंख्यामध्योर्वरितसंख्याबोधकमंकमिति यावत् । लेखिअकर — वम्रसंख्याः [?] परिधार्य्येति यावत्, आणकु — आनयस्व जानीहि इति यावत्, तहि पर — तदुपरि तेनेति यावत् मात्राणामिति शेषः, उद्दिट्ठा — उद्दिष्टम्, अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मे भेदे प्रथमत्वद्वितीयत्वादिधर्मनिर्द्धारणं, धुअ — ध्रुवं निश्चितं, आणकु — जानीहि । अत्र गुरुशिर इति शिरःपदोपादानात् गुरोरुपर्य्यधश्चांको देय इति सूच्यते, अन्यथा वर्णोद्दिष्टे लघूपरीतिवदत्रापि गुरोरुपरि इत्येव ब्रूयात् । लघोस्तु उपर्य्येवेति नियमो गुरूपदिष्टोऽनुसंधेयः । अयमर्थः — अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेदस्वरूपं विन्यस्य प्रथमाक्षरोपरि एकत्वसंख्याबोधकोऽंकः स्थाप्यः, द्वितीयाक्षरोपरि च पूर्वांकद्वयाभावात् पूर्वस्थैकांकद्वैगुण्यकल्पनानिःपन्नो द्वितीयोऽंकः स्थाप्यः, तृतीयस्थाने च तत्पूर्वद्वितीयैकेत्यंकद्वयैक्यक्रियानिःपन्नः तृतीयोऽंकः स्थाप्यश्चतुर्थस्थाने च तत्पूर्वतृतीयद्वितीयेत्यंकद्वयैक्यक्रियानिःपन्नः पंचमोऽंकः स्थाप्यः, पंचमस्थाने च तत्पूर्वपंचमतृतीयेत्यंकद्वयैक्यक्रियानिःपन्नोऽष्टमोऽंकः स्थाप्यः, षष्ठस्थाने च तत्पूर्वाष्टमपंचमेत्यंकद्वयैक्यक्रियानिःपन्नस्त्रयोदशोऽंकः स्थाप्यः । एवं षट्सु स्थानेषु षडंकाः यथाप्रस्तारसंख्यं षट्कलगणोद्दिष्टे स्थाप्याः । एवं पंचकलादावपि यथाप्रस्तारसंख्यमंकाः स्थाप्याः ।

| | | |
|---|---|---|
| १ | ३ | ८ |
| ऽ | ऽ | ऽ |
| २ | ५ | १३ |

एवं च त्रिगुरुः षट्कलस्य कतमो भेद इति पृष्टे, गुरुत्रयं लिखित्वा तत्र एकद्वित्रिपंचाष्टत्रयोदशेति

षड़ंकान् क्रमेण गुरूणामुपर्यधश्च संस्थाप्य गुरुशिरस्स्थैकतृतीयाष्टमेत्यंकत्रयबोधितद्वादशसंख्यायाः शेषांकत्रयोदशबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, एवं च त्रिगुरुः षट्कलस्य प्रथमो भेद इति

| | | | |
|---|---|---|---|
| १ | २ | ३ | ८ |
| । | । | ऽ | ऽ |
| | | ५ | १३ |

वाच्यम्। एवं यत्र लघुद्वयोत्तरं गुरुद्वयं पतति एतादृशः षट्कलस्य कतमो भेद इति पृष्टे, पूर्वोक्तरीत्या यथास्थानं षड़ंकान् संस्थाप्य गुरुशिरःस्थतृतीयाष्टमेत्यंकद्वयैक्यक्रियानिःपन्नैकादशांकबोधितसंख्यायास्त्रयोदशसंख्यामध्ये लोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम्। एवं यत्रादौ

| | | | |
|---|---|---|---|
| १ | २ | ५ | ८ |
| । | ऽ | । | ऽ |
| | २ | | १३ |

लघुगुरू ततोऽपि लघुगुरू एवंभूतः षट्कलस्य कतमो भेद इति पृष्टे, उक्तरीत्या उक्तस्थानेषु तत्षड़ंकस्थापने गुरुशिरःस्थद्वितीयाष्टमेत्यंकद्वयैक्यक्रियानिःपन्नदशांकबोधितसंख्यायास्त्रयोदशसंख्यामध्ये लोपे अवशिष्टा त्रित्वसंख्या, तथाचायं तृतीयो भेद इति वाच्यम्। एवमग्रेऽपि गुरुशिरोऽंकसंख्यायां त्रयोदशसंख्यामध्ये लुप्तोर्वरितसंख्या तत्तद्भेदे वाच्या। षड्लघुरूपे

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

गुरुशिरोऽंकाभावादार्थ्यसमाजसिद्धत्वादयस्त्रयोदशो भेदो बोध्यः।

एवं पंचकलप्रस्तारेऽपि अनिर्द्धारितप्रथमत्वद्वितीयत्वादिधर्मभेदं लिखित्वा तद्वर्णोपरि एकद्वित्रिपंचाष्टेत्यंकपंचकं यथाप्रस्तारसंख्यं यथाक्रममुत्तरोत्तरं स्थाप्यम्। एवं च यत्रादौ लघुस्ततो गुरुद्वयमीदृशः पंचकलस्य कतमो भेद इति पृष्टे, एकद्वित्रिपंचाष्टेत्यंकपंचके

| | | |
|---|---|---|
| १ | २ | ५ |
| । | ऽ | ऽ |
| | २ | ८ |

तथोक्तस्थाने यथाक्रममुत्तरोत्तरं संस्थापिते गुरुशिरःस्थद्वितीयपंचमेत्यंकद्वयैक्यक्रियानिःपन्नसप्तमांक-

बोधितसंख्यायाः सर्वांतिमाष्टमांकबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, एवं चायं प्रथमो भेद इति वाच्यम् । एवं यत्र प्रथमं गुरुलघू ततो गुरुरीदृशो भेदः पंचकलस्य कतम इति पृष्टे, एक-

१ २ ५
S I S
१ ८

द्वित्रिपंचाष्टेत्यंकपंचके यथास्थानं यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकपंचमेत्यंकद्वयमेव लभ्यं, लभ्य-षष्ठसंख्याया अष्टमसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं यत्र लघुचयांते गुरुरीदृशो

१ २ ३ ५
I I I S
८

भेदः कतम इति पृष्टे, पूर्वोक्तेऽङ्कपंचके तथैव स्थापिते गुरुशिरःस्थपंचमांकबोधितसंख्यायाः सर्वांतिमाष्टमांकबोधिताष्टमसंख्यामध्यलोपे उर्वरिता त्रित्वसंख्या, तथाचायं तृतीयो भेद इति वाच्यम् । एवमग्रेऽपि गुरुशिरोऽङ्कसंख्यायामष्टमसंख्याया लुप्तोर्वरितसंख्या तत्तद्भेदे वाच्या ।

एवं चतुःकले द्विगुरुः कतमो भेद इति पृष्टे, एकद्वित्रि-

१ ३
S S
२ ५

पंचेत्यंकचतुष्टये यथोक्तस्थाने यथाक्रममुत्तरोत्तरं स्थापिते गुरुशिरःस्थैकतृतीयेत्यंकद्वयबोधितचतुर्थसंख्यायाः सर्वांतिमपंचांकबोधितसंख्यामध्यलोपे उर्वरिता एकत्वसंख्या, तथाचायं प्रथमो भेद इति वाच्यम् । एवं चतुष्कले आदौ लघुद्वयं ततो

१ २ ३
I I S
५

गुरुः ईदृशः कतमो भेद इति पृष्टे, उक्तरीत्योक्तांके स्थापिते गुरुशिरःस्थतृतीयांकबोधितत्रित्वसंख्यायाः सर्वांतिमपंचमांकबोधितसंख्यामध्यलोपे उर्वरिता द्वित्वसंख्या, तथाचायं द्वितीयो भेद इति वाच्यम् । एवं त्रिकले एकद्वित्रीति अंकत्रयं, द्विकले एकद्वीत्यंकद्वयं संस्थाप्य वाच्यम् । (E).

Here four entire leaves are missing in M.S. (E).—Ed.

३९। अथ मात्रोद्दिष्टमाह पादाकुलकेन [?] पुब्वेति। पूर्वयुगलसदृशानंकान्देहि, गुरुशिरोऽंकं शेषे लोपय, उर्वरितांकं लिखित्वा कथय, एवंप्रकारेणोद्दिष्टं जानीत। उक्तार्थसमस्येयमेव। पूर्वं पूर्वांकयुगलं सर्वमात्रोपरि न्यसेत्। द्विमात्रस्य गुरोरूर्द्धं पूर्वं पश्चादधो लिखेत्। गुरूर्द्धांकसमाहारादुद्दिष्टं ज्ञायते ध्रुवं॥ इदं षट्कले द्वग्रमभेदे योज्यते। तत्र तावत् ॥ऽ॥ अयं भेदः कतिथ इति प्रश्नः। तत्र प्रथममात्रायाः पूर्वमंकाभावात्प्रथमशिरस्थोऽंको द्वितीयमात्रोपरि द्वयं २, तृतीयमात्रायां पूर्वांकद्वये एकद्विरूपं त्रयं लिखेत्। तृतीयस्थाने द्विमात्रस्य गुरोः सत्वात् द्वितीयोऽंकः पूर्वांकद्वयरूपः पंचात्मकोऽधस्ताल्लेख्यः, पंचममात्रोपरि अष्टौ षष्ठोपरि यथोद्दिष्टेति क्रमेण लिखेदेवं सर्वत्र। अथ गुरुशिरःस्थोऽंकस्थमंतिमयथोद्दिष्टांके लोपयेत्। एवं कृते शिष्टा इत्र, तत्संख्योऽयं भेद इति। एवमुदाहरणांतरेऽपि योज्यं। तद्यथा—

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ८ | १२ |
| । | । | ऽ | । | । |
| | | ५ | | |

अथास्मात्कवित्वात्किं फलं भविष्यतीत्युद्दिश्य मात्रोद्दिष्टमाह ॥ पुब्वेति ॥ अत्रेदमवधेयं,

मात्राभेदं समुत्पाद्य स्थानसंख्याक्तिं[?] चरेत् ।
यथा तथाद्यं भवति मंदेदाष्टयुतौ फलम् ॥
आदिशून्ये भवेद्धानिरंत्यशून्ये महद्भयम् ।
मध्यशून्ये भवेन्मृत्युः सर्वांके विजयो भवेत् ॥
तद्दृश्यतेऽष्टद्वितये न कार्यं सप्ताग्नितुर्यैर्भवतीह चर्चा ।
रवेः समुद्रैर्न च कार्यसिद्धिर्न चैकपंचस्मरितं ब्रुवंति ॥

इति केचिदाहुः ॥ (G).

आसां णट्ठं ।[1]

णट्ठे सव्व[2]कला कारिज्जसु[3]
पुव्व[4]जुअल सरि अंका[5] दिज्जसु ।
पुच्छल[6] अंकं[7] मिटावहु[8] सेस[9]
अवरउ[10] अंका[11] लुंपि[12] कहु सेस[13] ॥
अत्थ[14] अत्थ[14] पाविज्जइ[15] भाग
एहु[16] कहइ[17] फुर[18] पिंगल णाग ।
परमत्ता लेइ[19] गुरुता[20] जाइ
जत लेक्खहु[21] तत लेक्खहु[22] जाइ ॥ ४०[23] ॥

४० । अथ मात्रानष्टमाह णट्ठेत्यादि । नष्टे सर्व्वाः कलाः

---

४० । १ अथासां नष्टं (A), अथ मात्राणां नष्टं (D). २ सव्वें (B), सव (D). ३ करिज्जसु (B, C & D). ४ पूर्व्वं (B), dropt in (C). ५ सिर अंका (D). ६ पूछल (A), पुछल (D). ७ अंक (A & D), अङ्क (B & C). ८ मेटावहु (A), मेटावहि (B), मेटावइ (C), मेटावउ (D), मिटावहि (F). ९ सेस (A), सेसह (B & C), सेखा (D). १० अवरउ (A, D & F). ११ अंक (A, B, C & D). १२ लुम्पि (B & C), लोपि (D), लोपि (F). १३ सेसह (B & C). १४ अत्थ (A). १५ पविज्जइ (B), पाइज्जइ (D). १६ एव (A). १७ अवइ (B & C). १८ फुड (B), फुर (F). The quadrant runs thus in (C) and (D)—एड अवइ फुन पिंगल णाग (C), कवइ फुवइ फुनि पिंगल णाग (D). १९ जाइ (B & C), लै (F). २० गुरुता (B), गुरुता (C). २१ लेक्खहि (B), लेक्खउ (D & F). २२ Dropt in (C). २३ The name of the metre is not mentioned in any of the commentaries; neither does it agree with the definition of any metre described in the book.—Ed.

कुरुध्वं, पूर्व्वयुगलसदृशाङ्कान् देहि, प्रश्नाङ्केन शेषं लोपय, उद्दिष्ट-मङ्कं लोपयित्वा लिख, यत्र यः प्राप्यते भाग एतद्भणति स्फुटं पिंगलनागः। परमात्रा गृहीत्वा गुरुता याति, यावल्लिख्यते ताव-ल्लेखमायाति। अमुकप्रस्तारस्यामुकस्थाने कीदृशो गणस्तिष्ठतीति प्रश्ने, तत्कथनाय नष्टमिदमुच्यते। नष्टे ज्ञातव्ये इति। तथाचायं प्रकारः, षट्कलप्रस्तारस्य प्रथमस्थाने कीदृग्गणस्तिष्ठति इति प्रश्ने, सर्व्वाः कलाः कर्त्तव्या भवन्ति। सर्व्वकलाकरणे च षड्लघवः स्थाप-नीयाः, यथा ।।।।।।, तत्र च पूर्व्वयुगलसदृशाङ्कदानं पूर्व्ववत्तेन लिपिक्रमः १, २, ३, ५, ८, १३, अत्र च शेषाङ्के प्रश्नाङ्क[लो]पः कर्त्तव्यो भवति, शेषः चयोदशाङ्कः, तत्र प्रश्नाङ्कस्यैकस्य लोपात् द्वादशाङ्कोऽवशिष्टः, तल्लोपेन गुरुलघवो लेख्या भवन्ति। पुनः तल्लोपप्रका[र]श्चोच्यते द्वितीयश्लोकेन, तस्यायमर्थः प्रदर्श्यते। लोपा-वशिष्टो द्वादशाङ्कः तस्य भागः प्राप्यते यैर्यैरङ्कैः, सोऽङ्को निर्व्वहति, तेषां परमात्रया सह गुरुता कर्त्तव्या, तथाहि प्रकृते च प्रथमकलाया-मेकाङ्कस्तृतीयकलायां त्र्यङ्कः पञ्चकलायामष्टाङ्क इति मिलित्वा द्वादशाङ्क-निर्व्वाहस्तथाच एकाङ्कः प्रथमकलायां तिष्ठति, सापि परमात्रया सह गुरुतां गता, तथाच षट्कलप्रस्तारे त्रिगुरुगण इति लभ्यते। इदन्तु बोध्यं प्रकारद्वयेनापि यत्रोद्दिष्टाङ्को निर्वहति, तत्र परमात्रया सह गुरुता न सम्भवति, स एवाङ्को नान्यः। तथा हि षट्क[ल]प्रस्तारे पञ्चमस्थाने कीदृशो गण इति प्रश्ने, सर्व्वलघु-करणं, पूर्व्वयुगलसदृशाङ्कदानञ्च पूर्व्ववत्तेन १, २, ३, ५, ८, १३। अत्र च चयोदशाङ्के पञ्चमलोपेऽवशिष्टो भवति अष्टाङ्कः, स च पंच-

लघोरुपरि तिष्ठति, एकद्वित्रिपञ्चभिर्मिलिताभिः सम्भवति, तत्र पञ्चमलघोरुपरि स्थिताङ्क एव ग्रह्यते, अन्यथा एकाङ्कस्य परमात्रया सह गुरुतापादने द्वयाङ्कस्याधःस्थाङ्क एव नाप्नोति तस्य गुरुतापादकत्वाभावात् तस्योपादानमनर्थकमापद्येत, इत्यञ्च पञ्चमषष्ठकलाभ्यां मिलित्वा गुरुतापादने लघुचतुष्टयमेको गुरुश्च ।।।।ऽ पञ्चमस्थाने प[त]तीति वक्तव्यम् । षट्कलप्रस्तारस्य त्रयोदशस्थाने कीदृग्गण इति प्रश्ने, त्रयोदशाङ्कस्य त्रयोदशाङ्कलोपे न किञ्चिदवशिष्यते, तेन गुरुकरणाभावः, तथाच सर्व्वलघुरेव शिष्यते ।।।।।। (C).

४० । पाठ । नष्टे सर्वाः कलाः कुरु, पूर्वयुगलसदृशानंकान् देहि । पृष्टमंकं लोपय शेषे उर्वरितमंकं लुप्त्वा कथय लेख्ये ॥ यत्र यत्र प्राप्यते भाग एवं कथयति स्फुरं पिंगलनागः । परमात्रां गृहीत्वा गुरुतां याति, यावन्निष्यते तावल्लेख आयाति ॥ इदं षट्कले दशमो भेदः कीदृगिति प्रश्ने योज्यते । तत्र सर्वकलाः ।।।।।। पूर्ववदंकिताः, पृष्टांको दशमः शेषे त्रयोदशांके

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

उंमितः । शेषास्त्रयः । तत्रावशिष्टांकेषु मध्ये तृतीयः अंको लुप्तः । यत्रेति कृते तृतीया कला चतुर्थ्या सह गुरुतां याता ॥ऽ॥, अयं दशमो भेदो वक्तव्यः । प्रथमद्वितीयरूपांकस्य लोपो न संभवति । प्रथममात्राया अग्रिममात्रया सह गुरुताया असंभवात्, द्विरूपस्यांकस्यापि भागस्थानीयत्वात् ॥ (G).

N.B. In MS. (D) the slokas here numbered ३५ to ३८ precede those numbered ३२ to ३४. and ४० precedes ३९ । --Ed.

अह वणाणं उद्दिट्ठं (C) ।[१]

अक्खर[२] उप्परि[३] दुगुणा
अंका दिज्जहु[४] मुण[णे]हु[५] उद्दिट्ठा[६] ।
लहु उप्परि[३] जो अंको
तं दइ[७] एक्केण आणेहु ॥ ४१ ॥ [गाहा]

४१। वर्णोद्दिष्टमाह। अक्षरोपरि द्विगुणानङ्कान् देहि उद्दिष्टं। लघोरुपरि योऽङ्कस्तं दत्त्वा एकेन आनीहि ॥ एकेन सह दत्त्वेत्यनेन तत्राङ्के एकेन सह मिश्रणं कार्यमित्यर्थः। चतुरक्षरप्रस्तारे सर्व्वगुरुः कुत्र वर्त्तते ऽऽऽऽ इति प्रश्ने, अक्षरोपरि द्विगुणा द्विगुणा अङ्का-देयाः, तथाच १ २ ४ ८ / ऽ ऽ ऽ ऽ अत्र लघोरभावात् लघूपरिस्थिताङ्कस्य एकेन मिश्रणं [न] सम्भवति, किन्तु एकाङ्क एवावशिष्यते, तेन चतुरक्षरप्रस्तारस्य गुरुचतुष्कं प्रथमत एव पततीति वक्तव्यम्। अपरं दर्शयति, चतुरक्षरप्रस्तारस्याद्यन्तयोर्लघुद्वयं मध्यस्थाने गुरुद्वयं [कुत्र] पततीति १ २ ४ ८ / । ऽ ऽ । प्रश्ने, उक्तरीत्याक्षरं द्विगुणा अङ्का-देयास्तथाच तत्र लघूपरि एकाङ्कोऽष्टांकश्च इति मिलिता नव, तत्र चैकाङ्कयोजने कृते सति दशाङ्कः सम्भवति, तेन द[श]मस्थान-इति वक्तव्यम्। चतुरक्षरप्रस्तारे सर्व्वलघुः कुत्र वर्त्तते १ २ ४ ८ / । । । । इति प्रश्ने, द्विगुणा अङ्का देयाः, प्रथमलघोरुपरि एकाङ्कः, ततो

४१। १ अथ वर्णानामुद्दिष्टं (A), अथ वर्णानामुद्दिष्टं (B), अथ वर्णानां उद्दिष्टं (D), अथ वर्णोद्दिष्टम् (F). २ अक्षर (B & C). ३ उप्पर (A & D). ४ दिज्जहु (F). ५ मुणह (B), मुणह (C), मुणहं (D), मनमुणहु(F). ६ उद्दिट्ठ (A & F), उद्दिट्ठा (D). ७ देह (A & D), दवि (B). In (F), after अंको in the last half पेळ सह करवं आणेह।

आसां खट्टं।[१]

खट्टे अंके भाग[२] करिज्जसु
सम[३] भागह[४] तहि[५] लहुअ[६] मुणिज्जसु[७]।
विखम[८] एक दे[९] बंठण किज्जसु
पिंगल जंपइ गुरु आणिज्जसु ॥ ४२ ॥ [अलिल्ला]

द्वयाङ्कः, ततश्चतुरङ्कः, ततोऽष्टाङ्कः, एतेन सर्व्वाणि मिलित्वा षोड़श, षोड़शस्थाने पततीति वक्तव्यम्। (C).

४१। अथ वर्णोद्दिष्टमाह अक्ख॥ अक्षरोपरि द्विगुणानंकान्देहि, पश्चाज्जानीतोद्दिष्टं। लघूपरि योऽङ्कः पतति सैकं कृत्वा तं जानीत॥ उक्तं चान्यत्र। उद्दिष्टं द्विगुणानाद्यादुपर्यंकान् समालिखेत्। लघुस्था ये तु तत्रांकास्तैः सैकैर्मिश्रितैर्भवेत्॥ इदं चतुरक्षरे योज्यते॥ यथायं भेदः ।।ऽ। कतिथ इति प्रश्ने, द्विगुणांकदाने न्यासः १ २ ४ ८ / । । ऽ । अत्र लघुस्थांकाः एकद्व्यष्टरूपास्तेषां योगः ११ एकादश, सैकः १२ द्वादश, एतत्संख्योऽयं भेद इति स्पष्टम्॥ (G).

N.B. There is a process different from this in the Sanskrit work of Pingala, and its commentary by Halâyudha. Vide Society's Edition by Vishwanâtha Sâstrî. pp. 233–234. The same result may be analytically arrived at: vide Ghosha's Chhandah-sâra-sangraha, Introduction, p. xix. para 46—Ed.

४२। १ खट्टेणां नट्ठं (A), अथ वर्णानां नष्टं (D). २ भाय (E). ३ सरि (B, C & F). ४ भाअह (B & C), भाजे (D & F), भाअहं (E). ५ तै (A & D), तब (E). ६ लहु (B, C, D, E & F). ७ जाणिज्जइ (B & C), मुणिज्जइ (D & E). ८ विषम (D, E & F), विषम (C). ९ देइ (A, D & E), दइ (B & C).

४२ । वर्णं [नष्ट] माह । नष्टाङ्के भागं कुरुष्व समद्भागभागे तस्मिन् लघुमानयस्व । विषमे एकं दत्त्वा वण्टनं कुरुष्व पिंगलो जल्पति गुरुमानयस्व ॥ नष्टे अदृष्टस्थाने प्रश्नेऽङ्कस्य भागः कर्त्तव्यः । यत्र प्रश्नाङ्कः समो भवति तत्र लघुः स्थाप्यः, तदर्द्धस्यापि समत्वे पुनरपि तदर्द्धं कृत्वा लघुः स्थाप्यः । एवमग्रेऽपि । विषमप्रश्नाङ्के वा [तु] गुरुः स्थाप्यः, तत्राङ्के चैकं दत्त्वा भागः कार्य इति क्रमः । उदाहरणं यथा, चतुरक्षरप्रस्तारे कीदृक् प्रथमो गण इति प्रश्ने, प्रश्नाङ्क एकस्तस्य विषमत्वाद्गुरुः स्थाप्यः ऽ, तत्र चैकाङ्के पुनरेकयोजने द्व्याङ्को जातस्तदर्द्धश्चैकः सोऽपि विषमः तेन पुनरपि गुरुर्लेख्यः, एवमग्रेऽपि गुरुरेवायातीति चतुर्गुरुः ऽऽऽऽ प्रथमप्रस्तार इति वाच्यम् । एवं चतुरक्षरजाते [प्रस्तारे] दशमस्थाने कीदृगिति प्रश्ने, दशाङ्कस्य समत्वादादौ लघुः स्थाप्यः, तदर्द्धे च कृते पञ्चाङ्कः प्राप्तस्तस्य विषमत्वाद्गुरुः स्थाप्यः, तत्र च एकदाने षडङ्को भवति, तदर्द्धकरणे च त्र्याङ्को भवति, स च विषमो भवति इति पुनरपि गुरुः स्थाप्यः, त्र्याङ्के चैकयोजने चतुरङ्कस्तस्य च समत्वाल्लघुः स्थाप्यः ।ऽऽ।, इत्थं चतुरक्षरप्रस्तारे दशमस्थाने आद्यावन्ते लघुः मध्ये गुरुद्वयमस्तीति वक्तव्यम् । (C)

४२ । अथ वर्णवृत्तभेदेषु नष्टप्रकारमाह णट्ठेति । अंके समे विषमे वेत्यर्थः, भाग — भागं, अर्द्धांशमिति यावत् यथाप्रस्तारसंख्यमिति शेषः, करिज्जसु — कुरुष्व कल्पयेति यावत्, तत्र यः सम भाअहं — सम भागः समस्य भागः अर्द्धांश इत्यर्थः, तह — ततः, लहु — लघुं मुणिज्जसु — आनीहि क[य]येति यावत्,

विसम — विषमसंख्यांकस्य एक — एकम् एकसंख्याबोधकमंकमि-त्यर्थः, देह — दत्त्वा संयोज्येति यावत्, बंटण — बंटनं भाग-मर्द्धांशमिति यावत्, किज्जसु — कुरुष्व कल्पयेति यावत्, बंटन-मिति भागकल्पने द्वेष्टी, ततः गुरु आणिज्जसु — गुरुमानय कल्प-येति यावत् । एवंप्रकारेण वर्णवृत्तभेदानामिति शेषः, णट्ठे — नष्टं नष्टप्रकारमिति यावत्, पिंगल जंपइ — पिंगलो जल्पति कथयति ॥ समांकभागे कृते योऽङ्कः स लघुकल्पकः, विषमांकभागे योऽङ्कः स गुरुकल्पकः । विषमांकस्य भागस्तु विषमांकमेकेनांकेन संयोज्य कल्पनीय इति निर्गलितार्थः । अत्र यद्यपि एकांकेन योजितो विषमः समभावं प्राप्नोति तथापि तस्य भागः विषमांकभाग-एवेति, ततो लघुकल्पनभ्रान्तिर्न कर्त्तव्येति ध्येयम् । अयमर्थः —

एकाक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, एकांके विषमे एकांकयोजनेन कृतभागे एको गुरुः कल्प्यः । अनंतरं चाक्षरा-भावान्न कल्पना । एवं च एकाक्षरवृत्तस्य प्रथमो भेद एकगुरु-रिति वाच्यम् । एवमेकाक्षरवृत्तस्य द्वितीयो भेदः कीदृश इति पृष्टे * * * कल्पनीयः, अनंतरं चाक्षराभावान्न कल्पना, एकलघु-र्द्वितीयो भेद इति वाच्यम् ।

एवं द्व्यक्षरवृत्तस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टस्य एकांकस्य विषमस्य एकांकयोजनेन भागे एको गुरुः कल्पनीयः, पुनरपि भागलब्धस्यैकांकस्य विषमस्य भा[गे] द्वितीयो गुरुः कल्प्यः । अनंतरं चाक्षराभावान्न कल्पना, एवं द्विगुरुर्द्व्यक्षरवृत्तस्य प्रथमो भेद-इति वाच्यः । एवं द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टस्य

द्वितीयांकस्य समस्य भागे एको लघुः कल्पनीयस्ततो भागलब्ध-स्यैकांकस्य विषमत्वादेकेन योजितस्य भागे एको गुरुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च प्रथममेको लघुस्तत एको-गुरुरीदृशो द्व्यक्षरवृत्तस्य द्वितीयो भेदः। एवं द्व्यक्षरवृत्तस्य तृतीयो भेदः कीदृश इति पृष्टे, पृष्टांकस्य तृतीयस्य विषमत्वादेकांकयोज-नेन भागे प्रथममेको गुरुः कल्पनीयस्ततो भागलब्धस्य द्वितीयां-कस्य समत्वाद्भागे एको लघुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र क्रमेण गुरुलघू भवत ईदृशो द्व्यक्षरवृत्तस्य तृतीयो भेद इति वाच्यम्। एवं चतुर्थो भेदः कीदृश इति पृष्टे, पृष्टांकस्य चतुर्थस्य समत्वात्तद्भागे प्रथम एको लघुः कल्प्यः, ततो-भागलब्धस्य द्वितीयांकस्यापि समत्वात्तद्भागेऽपि पुनरप्येको लघुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र लघुद्वयं स द्व्यक्षरवृत्तस्य चतुर्थो भेद इति वाच्यम्।

एवं त्र्यक्षरस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टांकस्य एकस्य विषमत्वादेकांकेन योजितस्य भागे एको गुरुः प्रथमः कल्प्यः, ततो-भागलब्धस्यैकांकस्य विषमत्वादेकांकयोजनाद्वारद्वयं भागे गुरुद्वय-कल्पनम्, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र गुरुत्रय-मीदृशस्त्र्यक्षरवृत्तस्य प्रथमो भेद इति वाच्यम्। एवं त्र्यक्षरस्य द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टांकस्य द्वितीयस्य समत्वाद्भागे प्रथममेको लघुः कल्प्यस्ततो भागलब्धस्यैकांकस्य विषमत्वादेकांक-योजनाद्वारद्वयं भागे गुरुद्वयं कल्पनीयमनंतरं चाक्षराभावान्न कल्पना, एवं यत्र प्रथममेको लघुस्ततो गुरुद्वयमीदृशस्त्र्यक्षरस्य

द्वितीयो भेद इति वाच्यम् । एवं त्र्यक्षरस्य तृतीयो भेदः कीदृश इति [पृष्टे], पृष्टांकस्य तृतीयस्य विषमत्वादेकांकयोगेन भागकल्पने एकगुरुः कल्प्यस्ततो भागलब्धस्य द्वितीयांकस्य समत्वात्तद्भागे लघुः कल्प्यस्ततो भागलब्धस्य एकांकस्य विषमत्वादेकांकयोगेन तद्भागे गुरुः कल्प्यः, अनंतरं चाक्षराभावान्न कल्पना, एवं च यत्र प्रथममेको गुरुस्ततो लघुगुरू ईदृशस्त्र्यक्षरस्य तृतीयो भेद इति वाच्यम् । एवं त्र्यक्षरवृत्तस्य चतुर्थो भेदः कीदृश इति पृष्टे, पृष्टस्य चतुर्थांकस्य समत्वात्तद्भागे एको लघुः कल्प्यस्ततो भागलब्धस्य द्वितीयांकस्यापि समत्वात्तद्भागेऽपि लघुः कल्पनीयः, ततो भागलब्धस्यैकांकस्य विषमत्वादेकांकयोगेन तद्भागे गुरुः कल्पनीयस्ततश्चाक्षराभावान्न कल्पना, एवं च यत्र प्रथमं लघुद्वयं तत एको गुरुरीदृशस्त्र्यक्षरवृत्तस्य चतुर्थो भेदः इति वाच्यम् । एवमग्रेऽप्यूह्यम् ।

एवं चतुरक्षरस्य प्रथमो भेदः कीदृश इति पृष्टे, पृष्टांकस्यैकस्य विषमत्वादेकं दत्त्वा तद्भागे एको गुरुः कल्पनीयः, ततो भागलब्धस्यैकांकस्य वारत्रयमेकांकयोजनेन भागे गुरुत्रयं कल्पयित्वा चतुर्गुरुश्चतुरक्षर[स्य] प्रथमो भेद इति वाच्यम् । एवं चतुरक्षरस्य द्वितीयो भेदः कीदृश इति पृष्टे, पृष्टस्य द्वितीयांकस्य समत्वात्तद्भागे एको लघुः कल्पनीयस्ततो भागलब्धस्यैकस्य विषमत्वादेकांकं दत्त्वा वारत्रयं भागकल्पने गुरुकल्पने गुरुत्रयं कल्पनीयम्, एवं च यत्रादौ एको लघुस्ततो गुरुत्रयमीदृशश्चतुरक्षरस्य द्वितीयो भेद इति वाच्यम् । एवमग्रेऽप्यूह्यम् । (E).

४२ । षष्ठे । नष्टेऽङ्के भागं कुरु, समे भागे [तं] लघुं जानीहि ।

अह वसमेरु (B)।[१]

अक्खर[२] संखे[३] कोट्ठ करु
आइ अंत पढमंक[४]।
सिर दुइ अंके अवरु[५] भरु
सूई[६] मेरु णिसंक[७] ॥ ४३ ॥ दोहा।

---

विषमे एकं दत्त्वा भागं कुरु, पिंगलो जल्पति गुरुमानय॥ नष्टस्यांके समे लघुर्विषमे गुरुरित्यर्थः। इदं चतुरक्षरे योज्यते। अथ द्वादशो भेदः कीदृगिति प्रश्ने, द्वादशांकस्य समत्वादाद्यो-लघुः, तदर्द्धस्य षड्ंकस्यापि समत्वाद्द्वितीयोऽपि लघुः, तदर्द्धस्य त्र्यंकस्य विषमत्वाद्गुरुः, सैकस्य तदर्द्धस्य द्व्यंकस्य समत्वाल्लघुः, तद्यथा ।।ऽ।, अयं भेदो द्वादशसंख्य इत्यर्थः। एवं पंचाक्षरादावपि बोध्यम् ॥ ४२ ॥ (G).

४३। अथ वर्णमेरुः। अक्षरसंख्यायाः कोष्ठं कुरु, आद्यन्तेषु प्रथमोऽङ्कः। शिरोद्वयाङ्केनापरं बिभृहि सूचीमेरौ निःशङ्कम्॥ एकाक्षरमारभ्य यावदक्षरं छन्दसां चिकीर्षितं भवति तावती पंक्तिः कर्त्तव्या। तत्र चाद्यावन्ते चैकांकदानं कार्यं, तेन प्रथमपंक्तौ कोष्ठ-द्वयमेव। सूचीमेरुरिति समाख्यावलादादौ सूक्ष्मता, उत्तरोत्तरं

---

४३। १ अथ वर्णमेरुः (A & E). २ अक्खर (B), अक्ख्खर (D). ३ संखुच (B), संखे (C), संख (F). ४ पढमचंक (B & F), भरु after this (F). ५ अवर (D & E), आनउ before सूई (F). ६ सूई (D & F). ७ णिसंका (E), णीसंक (F).

वाधिक्यमवगम्यते। तेन द्वितीयपंक्तौ कोष्ठत्रयमेवमेकैककोष्ठवृद्ध्या लेख्यम्। तत्र चायमङ्कदानप्रकारः,—सर्व्वत्रैव पंक्तौ आदावन्ते च

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| एकवर्णमेरुपंक्तिः | १ | १ | २ | | | | | | | |
| द्विवर्णमेरुपंक्तिः | १ | २ | १ | ४ | | | | | | |
| त्रिवर्णमेरुपंक्तिः | १ | ३ | ३ | १ | ८ | | | | | |
| चतुर्वर्ण ,, | १ | ४ | ६ | ४ | १ | १६ | | | | |
| पंचवर्ण ,, | १ | ५ | १० | १० | ५ | १ | ३२ | | | |
| षड्वर्ण ,, | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ | | |
| सप्तवर्ण ,, | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | १२८ | |
| अष्टवर्ण ,, | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | २५६ |
| नववर्ण ,, | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ |

एकाङ्को देयः, रिक्तकोष्ठकानाञ्च उपरिस्थिताङ्कद्वयेन पूरणं कार्यं। तथाहि प्रथमकोष्ठे तावद्रिक्तकोष्ठाभावः। द्वितीयपंक्तौ मध्यगृहं रिक्तमस्ति, तच्च तदुपरिस्थिताङ्कद्वयेन पूरणीयमत्र च उपरि एकाङ्कद्वयसत्त्वात् मिलित्वा द्व्याङ्को निष्पद्यते, अतः स तत्र लेख्यः। तृतीयपंक्तौ रिक्तगृहद्वयं, तत्र च प्रथमगृहस्योपरि एकाङ्को द्व्याङ्कश्चेति मिलित्वा त्र्याङ्क इति स तत्र लेख्यः, द्वितीयस्योपरि [एकाङ्कः] द्व्याङ्कश्चेति मिलित्वा त्र्याङ्को जातः स तत्र लेख्यः, एवमग्रेऽपि।

अथ मेरोः प्रयोजनमुच्यते। प्रथमपंक्तावाद्यन्तयोरेकाङ्कसत्त्वाद्द्वयं निष्पन्नं, तेन एकाक्षरजातौ प्रस्तारद्वयमिति लभ्यते। तत्र प्रथममेकाङ्कसत्त्वात्सर्व्वगुरुरेकः, परतश्चैकाङ्कसत्त्वात्सर्व्वलघुरप्येकः। द्वितीयपंक्तौ च मिलित्वा चतुरङ्कसत्त्वाद् द्व्यक्षरजातौ प्रस्तारचतुष्टयम्, आदावेकाङ्कसत्त्वात्सर्व्वगुरुरेकः, द्विती[ये] द्व्याङ्कसत्त्वा-

द्देकगुरुद्वयम् अङ्के[न्नो] च एकसत्त्वात्सर्व्वलघुरेकः। एवं तृतीयपंक्तौ च मिलित्वा अष्टाङ्को निष्पन्नः, तेन त्र्यक्षरजातौ प्रस्ता[रा]ष्टकम्, एकः सर्व्वगुरुः, एकः सर्व्वलघुः, त्रिगुरुद्वयं, त्रिरेकगुरुः, एवमग्रेऽपि बोद्धव्यम् ॥ (C).

४२। अमुकवर्णवृत्तमात्रागणप्रस्तारयोरेतावद्गुरुलघुको भेदः कतिसंख्याक इति अनिर्दिष्टक्रमस्थितिनिर्द्धारितसंख्याकगुरुलघुयुक्तत्वरूपप्रस्तारनिर्णीतस्वरूपाऽनिर्द्धारितसंख्याकभेदनिष्ठायाः एको द्वावित्यादिपिंडीभूतैकत्वद्वित्वादिकायाः निखिलवर्णवृत्तमात्रागणभेदनिष्ठायाश्च पिंडीभूतद्विचतुरष्टषोड़शेत्यादिकायाः संख्यायानिर्द्धारककोष्ठस्थांकसमूहो वा मेरुः। अत्र निखिलभेदनिष्ठपिंडीभूतद्वित्वचतुष्ट्वादिसंख्यानिर्द्धारणं तत्तन्मेरुपंक्तिनिखिलकोष्ठवर्त्यंकयोजननिष्पन्नांकेन बोध्यमिति गुरूपदेशोऽनुसंधेयः। पूर्ववद्विविधे, तत्र वर्णमेरुप्रकारमाह। अक्खरसंखेति। अक्खर संखे—संख्याताक्षराणाम्। अत्राक्षरपदस्य चरणाक्षरपादत्वात्संख्यातचरणाक्षराणामित्यर्थः। संख्यातानि एकादिषड्विंशतिपर्यंतसंख्यायुक्तानि चरणाक्षराणि येषां तेषां वृत्तानामिति निर्गलितार्थः। कोट्ठ—कोष्ठानि गुरूपदेशादिति शेषः, करु—कुरु। एकाक्षरचरणवृत्तस्य कोष्ठद्वयं, द्व्यक्षरचरणवृत्तस्य कोष्ठत्रयं, त्र्यक्षरचरणवृत्तस्य कोष्ठ[चतुष्टयं], चतुरक्षरचरणवृत्तस्य कोष्ठपंचकमित्येवं गुरूपदेशादुत्तरोत्तरैकैकवृद्ध्या एकाक्षरमारभ्य षड्विंशत्यक्षरपर्यंतं कोष्ठानि कल्पयेति निर्गलितार्थः। तसु आइ अंत—आद्यंतयोः कोष्ठयोः, पढ़मंक—प्रथममंकमेकत्वसंख्याबोधकमंकमिति यावत्, देहीति शेषः। अवर—अपरं आद्य-

तांतरालस्थितमिति यावत् कोष्ठकं, सिर दुइ अंके — शिरोऽंकद्वयेन, अत्र द्वन्द्वभाषायां पूर्व्वनिपातानियमात्, भरु—पूरय पूरणीयकोष्ठ-शिरःस्थांकद्वययोजननिष्पन्नांकेनाद्यंतांतरालस्थितं कोष्ठं पूरणीय-मित्यर्थः। एवम्प्रकारेणेति शेषः, मेरु—मेरुः, णिसंक—निःशंकं निश्चयेनेति यावत्, सूई—सूच्यते निर्मीयते इति योजना।

अथैतन्निर्माणप्रकारो लिख्यते। प्रथमं वामदक्षिणयोरेकांगुल-मायतमूर्द्धाधोरेखाद्वयं विनिर्माय तत्पार्श्वयोः ऋजुरेखया मेल-नीयमेवमेकं दीर्घं कोष्ठं विधाय तत्र ऊर्द्धरेखामध्यदेशमारभ्याधो-रेखामध्यदेशपर्यंतमेकामृजुरेखां दत्त्वा कोष्ठद्वयं कल्पनीयं, तत्र तत्र प्रत्येकमेकैकोऽंको देयः, तत्र प्रथममिदं मेरुस्वरूपं प्रथमकोष्ठस्थै-कांकेन एकवर्णवृत्त एकगुरुरेको भेदः, द्वितीयकोष्ठस्थैकांकेन च एक-लघुरेको भेदः इति निर्द्धारितैकलसंख्याकगुरुलघुयुक्तस्वरूपनिर्णीत-स्वरूपैकवर्णभेदनिष्ठकलसंख्या प्रतीयते। कोष्ठद्वयस्थैकांकद्वयपरस्पर-योजननिःपन्नद्वितीयांकेन चैकवर्णवृत्तभेदस्य द्वित्वरूपा समस्ता संख्या प्रतीयते, इतीयं कोष्ठद्वयात्मिका प्रथमा एकवर्णमेरुपंक्तिः।

एवमेतत्पंक्त्यधोरेखां पार्श्वयोर्मनाग्वर्द्धयित्वा अंगुष्ठमात्रं मध्यदेशं त्यक्त्वा अधस्तादेका रेखा उपरितनरेखासमाना कार्या, पार्श्वयोश्च ऋजुरेखया मेलनं कार्यमेवमेकमायतं कोष्ठं विधाय तत्र उपरि-तनप्रथमकोष्ठस्याधोरेखामध्यदेशमारभ्याधस्तनरेखापर्यंतमेका ऋजु-रेखा देया, ततः द्वितीयकोष्ठाधोरेखामध्यमारभ्याधस्तनरेखापर्यंत-मेका ऋजुरेखा देया, एवं कोष्ठत्रयं संपाद्य प्रथमान्त्यकोष्ठयोः प्रत्येकमेकैकोऽंको देयः, अंतरालवर्त्ती च द्वितीयः कोष्ठः शिरः-

स्यैकांकद्वययोजननिःपन्नद्वितीयांकेन पूरणीयः, तत्र द्व्यक्षरवृत्तभेदेषु द्विगुरुरेको भेद इति निर्द्धारितद्विलसंख्याकगुरुयुक्तद्व्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रथमकोष्ठस्थैकांकेन प्रतीयते। ततो द्वितीयकोष्ठस्थद्वितीयांकेन द्व्यक्षरस्यैकगुर्वेकलघुयुक्तौ द्वौ भेदाविति निर्द्धारितैकलसंख्याकगुरुलघुयुक्तद्व्यक्षरभेदनिष्ठद्वित्वरूपसंख्या प्रतीयते। ततस्तृतीयकोष्ठस्थैकांकेन द्व्यक्षरस्य द्विलघुरेको भेद इति निर्द्धारितद्विलसंख्याकलघुयुक्तद्व्यक्षरभेदनिष्ठैकत्वरूपसंख्या प्रतीयते। कोष्ठत्रयस्थसमस्तांकयोजननिःपन्नचतुर्थांकेन च चतुष्टरूपा समस्तभेदसंख्या निश्चीयते, सेयं कोष्ठत्रययुक्ता द्व्यक्षरमेरुपङ्क्तिर्द्वितीया।

एवमेतत्पङ्क्त्यधोरेखां पार्श्वयोर्मनागवर्द्धयित्वैकांगुलमात्रमध्यदेशं त्यक्त्वोपरितनरेखासमानाधस्तात्रेखा कार्या, पार्श्वयोस्तु ऋजुरेखया मेलनं कार्यमेवमेकं दीर्घं कोष्ठं निर्माय तत्र उपरितनप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधोरेखापर्यंतमेका ऋजुरेखा देया, ततो द्वितीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यंतमेका ऋजुरेखा देया, ततस्तृतीयकोष्ठाधोरेखामध्यमारभ्याधोरेखापर्यंतमेका ऋजुरेखा देया, एवं कोष्ठचतुष्टयं संपाद्य तत्राद्यंतकोष्ठयोः प्रत्येकमेकैकोऽङ्को देयस्तदंतरालस्थद्वितीयकोष्ठस्य च तच्छिरःस्थैकद्वितीयेत्यंकद्वययोजननिःपन्नतृतीयांकेन पूरणं कार्यं, तृतीयकोष्ठस्य च तच्छिरःस्थद्वितीयैकेत्यंकद्वययोजननिःपन्नतृतीयांकेन पूरणं कार्यं, तत्र प्रथमकोष्ठस्थैकांकेन त्र्यक्षरस्य त्रिगुरुरेको भेद इति निर्द्धारितत्रित्वसंख्याकगुरुयुक्तत्र्यक्षरवृत्तभेदनिष्ठैकत्वरूपसंख्या प्रतीयते। द्वितीयकोष्ठस्थतृतीयांकेन च त्र्यक्षरस्य द्विगुर्वेकलघुयुक्तं भेदत्रय-

मिति निर्द्धारितद्विलैकलसंख्याकगुरुलघुयुक्ताक्षरभेदनिष्ठत्रिलरूपसंख्या निस्सीयते। एवं तृतीयकोष्ठस्थतृतीयांकेन [अ]क्षरस्यैकगुरुद्विलघुयुक्तं भेदत्रयमिति निर्द्धारितैकलद्विलसंख्याकगुरुलघुयुक्ताक्षरभेदनिष्ठक[त्रिल]रूपसंख्या निस्सीयते। एवं चतुर्थकोष्ठस्यैकांकेन अक्षरस्य त्रिलघुयुक्त एको भेद इति निर्द्धारितत्रिलसंख्याकलघुयुक्ताक्षरभेदनिष्ठैकलरूपसंख्या प्रतीयते। कोष्ठचतुष्टयस्थसर्वांकयोजननिष्पन्नाष्टमांकेन च अक्षरस्याष्टौ भेदा इति समस्ता अक्षरवृत्तभेदसंख्या निस्सीयते, सेयं तृतीया कोष्ठचतुष्टययुक्ता तृतीयाक्षरमेरुपंक्तिः।

एवं पूर्वोक्तरीत्यैकं दीर्घं कोष्ठं निर्माय तत्र कोष्ठपंचकं विधाय प्रथमांत्ययोः कोष्ठयोरेकैको देयः, अंतरालस्थस्य द्वितीयकोष्ठस्य शिरःस्थैकतृतीयेत्यंकद्वययोजननिःपन्नचतुर्थांकेन पूरणं विधेयं, तृतीयकोष्ठस्य च शिरःस्थतृतीयाङ्कद्वययोज[न]निःपन्नषष्ठांकेन पूरणं विधेयं, चतुर्थकोष्ठस्य च शिरःस्थतृतीयैकेत्यंकद्वययोजननिःपन्नचतुर्थांकेन पूरणं विधेयं, तत्र प्रथमकोष्ठस्यैकांकेन चतुरक्ष[र]वृत्तस्य चतुर्गुरुरेको भेद इति निर्द्धारितचतुष्टसंख्याकगुरुयुक्तचतुरक्षरवृत्तभेदनिष्ठैकलसंख्या प्रतीयते। द्वितीयकोष्ठस्थचतुर्थांकेन च चतुरक्षरस्य त्रिगुर्वेकल[ल]घुयुक्तं भेदचतुष्टयमिति निर्द्धारितत्रिलैकलसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठचतुष्टरूपसंख्या प्रतीयते। ततस्तृतीयकोष्ठस्थषष्ठांकेन चतुरक्षरस्य द्विगुरुद्विलघुयुक्ताः षड्भेदा इति निर्द्धारितद्विलसंख्याकगुरुलघुयुक्तचतुरक्षरभेदनिष्ठषट्संख्या प्रतीयते। ततः चतुर्थकोष्ठस्थचतुर्थांकेनैकगुरुत्रिलघुयुक्तं चतुरक्षरस्य भेद-

चतुष्टयमिति निर्द्धारितैकलचिलसंख्याकगुरुलघुयुक्तचतुरचरभेद-निष्ठचतुष्टच[रू]पसंख्या निश्चीयते। ततः पंचमकोष्ठस्थैकांकेन चतु-र्लघुयुक्तश्चतुरचरस्यैको भेद इति निर्द्धारितचतुष्टसंख्याकलघुयुक्त-चतुरचरभेदनिष्ठैकलरूपसंख्या निश्चीयते। कोष्ठपंचकनिष्ठसर्वांक-योजननिःपन्नषोडशांकेन च षोडशरूपा समस्ता चतुरचरभेदसंख्या प्रतीयते, सेयं पंचकोष्ठयुक्ता चतुर्थी चतुरचरमेरुपङ्क्तिः।

एवं पूर्वोक्तरीत्या एकं दीर्घं कोष्ठं विधाय तत्र कोष्ठषट्कं निर्माय प्रथमांत्यकोष्ठयोरेकैकोऽंको देयः, अंतरालस्थद्वितीय-कोष्ठस्य शिरःस्थैकचतुर्थेत्यंकद्वययोजननिःपन्नपंचमांकेन पूरणं विधेयं। ततस्तृतीयकोष्ठस्य शिर[:]स्थचतुर्थषष्ठेत्यंकद्वययोजननिःपन्नदशमांकेन पूरणं विधेयं। ततश्चतुर्थकोष्ठस्य शिरःस्थषष्ठचतुर्थेत्यंकद्वययोजन-निःपन्नदशमांकेन पूरणं विधेयं। ततः पंचमकोष्ठस्य शिरःस्थ-चतुर्थैकेत्यंकद्वययोजननिःपन्नपंचमांकेन पूरणं विधेयं। तत्र प्रथम-कोष्ठस्थैकांकेन पंचाचरवृत्तस्य पंचगुरुरेको भेद इति निर्द्धा-रितपंचलसंख्याकगुरुयुक्तपंचाचरभेदनिष्ठैकलसंख्या निश्चीयते। ततः द्वितीयकोष्ठस्थपंचमांकेन च पंचाचरवृत्तस्य चतुर्गुर्वेकलघुयुक्तं भेद-पंचकमिति निर्द्धारितचतुष्टैकलसंख्याकगुरुलघुयुक्तपंचाचरभेदनिष्ठ-पंचलसंख्या निश्चीयते। ततस्तृतीयकोष्ठस्थदशमांकेन पंचाचर-वृत्तस्य त्रिगुरुद्विलघुयुक्तं भेदद्शकमिति निर्द्धारितचिलद्विल-संख्याकगुरुलघुयुक्तपंचाचरभेदनिष्ठदशलसंख्या नौ[नि]श्चीयते। तत-श्चतुर्थकोष्ठस्थदशमांकेन पंचाचरवृत्तस्य द्विगुरुत्रिलघुयुक्तं भेद-दशकमिति निर्द्धारितद्विलचिलसंख्याकगुरुलघुयुक्तपंचाचरभेदनिष्ठ-

दृग्गलसंख्या निष्पीयते। ततः पंचमकोष्ठस्थपंचमांकेन पंचाचरवृत्तस्य एकगुरुचतुर्लघुयुक्तं भेदपंचकमिति निर्द्धारितैकलचतुष्टसंख्याकगुरु-लघुयुक्तपंचाचरभेदनिष्ठपंचलसंख्या निष्पीयते। ततः षष्ठकोष्ठ-स्थैकांकेन पंचाचरवृत्तस्य पंचलघुयुक्त एको भेद इति निर्द्धारित-पंचलसंख्याकलघुयुक्तभेदनिष्ठैकलसंख्या निष्पीयते। कोष्ठषट्कनिष्ठ-सर्वांकयोजननिःपन्नद्वात्रिंशत्तमांकेन च द्वात्रिंशद्रूपा समस्ता पंचा-चरवृत्तभेदसंख्या प्रतीयते। एवमन्येऽपि सुधीभिः स्वयमूह्यं, ग्रन्थ-विस्तरभयान्न लिख्यते ॥ (E).

४३। अथ कियंतः सर्वगुर्वेकगुरु-द्विगुरु त्रिगुर्वादयः, एवं कियंतः सर्वलघ्वेकलघु-द्विलघ्वादय इति ज्ञानार्थं मेरुमाह, अक्खर। अचरसंख्यया कोष्ठान् कुरु, आद्यमंत्यं च प्रथमांकेन पूरय। शीर्षद्वयांकेनापरं भर, जानीत सूचीमेरुं निःशंकम् ॥ आद्यं कोष्ठमिति शेषः, तथाच सर्वत्र आद्यांत्यकोष्ठयोरेक एव लेख्यः, शीर्षकोष्ठद्वयरूपांकेन रिक्तकोष्ठं पूरयेत्यर्थः। तथाच एकाचरादौ इष्टमेरुसंख्यया द्व्यादिकोष्ठानर्द्धान्तरितानेकैकवृद्ध्या लिखेत्। तत्र सर्वकोष्ठाद्यंतयोरेकं दत्त्वा पश्चादुपरितनं कोष्ठद्वयांकं ग्रंथस्था-वंधन्यायेनैकीकृत्यावशिष्टाः कोष्ठाः पूरणीयाः॥ तत्र एकाचर-प्रस्तारे एकः सर्वगुरुः, एकः सर्वलघुरिति भेदद्वयमेव सिद्धं, तस्य द्विभेदत्वात् । द्व्यचरप्रस्तारे एकः सर्वगुरुः, द्वौ एकगुरू, एकः सर्व-लघुरिति ॥ एवं त्र्यचरप्रस्तारे एकः सर्वगुरुः, त्रय एकगुरवः, त्रयो द्विगुरवः, एकः सर्वलघुरिति ॥ एवं सर्वत्र प्रस्तारे एकः सर्वलघुः, त्रय एकलघवः, त्रयो द्विलघवः, एकः सर्वगुरुरित्यादि सर्वत्र

## अह अख्ख पताका ।[1]

उद्दिट्ठा[2] सरि अंका दिज्जसु
पुव्व[3] अंक पर भरण करिज्जसु[4] ।
पाअल[5] अंक पढम[6] परिदिज्जसु[7]
पत्थर[8] संख[9] पताका किज्जसु[10] ॥ ४४[11] ॥ [अलिल्ला]

बोध्यम् । अर्चांकयोगेन संख्या भवति । यथा एकाक्षरे द्वौ २, द्व्यक्षरे चत्वारः ४, त्र्यक्षरेऽष्टौ ८, चतुरक्षरे षोडशेत्यादि ॥ अत्रेदमवधेयम् । अपचयमाना गुरवः पद्ये मेरौ तु यस्य दृश्यंते । सर्वत्राग्राभंगो विपरीते वांछितं लभते ॥ अत्र प्रस्ताराल्कियत्संख्योऽयं भेद इति ज्ञात्वा कियद्गुरुकोऽयमित्यवधार्य्य फलं वदेदिति ॥ ४४ ॥ (G).

४४ । अथ वर्णपताकामाह । उद्दिष्टसदृशानङ्कान देहि, पूर्व्वाङ्केन परभरणं कुरु । प्राप्ताङ्कः प्रथमपरतो दीयते, प्रस्ता[र]संख्यया पताका क्रियते ॥ अयमर्थः,— वर्णोद्दिष्टे यथा अङ्का दत्तास्तथैवाङ्का-देयाः, एतावान् विशेषः अ[त्रो]त्रोद्दिष्टप्रस्तारे उत्तरोत्तरद्विगुणा-अङ्का दीयन्ते, अत्र तूत्तरोत्तरद्विगुणाङ्कस्थापनमात्रं, तत्र चाङ्कस्य वामा गतिरिति न्यायेन चरमाङ्क एव पूर्व्वांकः प्रथमत एव स्थाप-नीयः, स एकगुरुकस्थानं, तेनाङ्केन सह तत्पराङ्कस्य भरणं — योजनं

४४ । १ अथ पताका (A), अथ वर्णपताका (D & E). २ उद्दिट्ठ (F). ३ पूर्वांके (B), पूर्व्व (C). ४ किज्जसु (F). ५ पाअल (B & C), पाअल (E). ६ पर (B & C). ७ लिज्जसु (D), तेज्जसु (E & F). ८ पत्थर (A), पत्थार (E & F). ९ संखे (A, B & C). १० करिज्जसु (B & C), लिज्जसु (F). ११ ४५ (F).

कार्य्यं, पूर्व्वाङ्क एवात्र पराङ्क उच्यते, अङ्कस्य वामा गतिरित्युक्तत्वात् । एवमपराङ्केण सह योजनं, ततस्तत्पराङ्केण प्राप्ताश्चाङ्का अधोऽधः स्थाप्याः, एवमेकगुरोर्द्वितीया पंक्तिः कार्य्या, तत्र च प्रथमलिखिताङ्कपृष्ठतो योऽङ्कः स उपरि लेख्यः, ततश्च उपरिस्थिताङ्केन सह योजयित्वाऽधो लेख्यः, पुनस्तत्पूर्व्वस्थिताङ्केन सह योजयित्वा । एवं द्विगुरुपंक्तिं समाप्य त्रिगु[रु]पंक्तिर्लेख्या, द्विगुरूपरिस्थिताङ्कपृष्ठस्थाङ्क उपरि स्थाप्यस्तत्पृष्ठस्थाङ्केन सह योजयित्वा तदधो लेख्यः, पुनः पराङ्केण योजयित्वा तदधो लेख्यः । एवमग्रेऽपि परतो दीयते इत्यस्याधो लिख्यत इत्यर्थः इति गुरूपदेशः । उत्तरोत्तरद्विगुणा अङ्काः कियद्दूरं देया इत्याकाङ्क्षायामुक्तं प्रस्तारसंख्यये-त्यादि, तेन यावदक्षरस्य प्रस्तारस्तावत्पर्य्यन्तं द्विगुणाङ्कदानं, तावत्पंक्तिपताका भवतीति बोध्यम् । यत्तु यावती प्रस्तारसंख्या तावदङ्का देया इत्यर्थः इति तन्न, पताकाया यावदङ्कासम्भवात्, तत एकन्यूनाङ्कस्यैव सम्भवात् ।

अथोदाहरणेन संदर्श्यते । चतुरक्षरप्रस्तारे एकगुर्वादयः कुत्र पतन्तीति प्रश्ने, चतुर्षु स्थानेषु उत्तरोत्तरद्विगुणा अङ्काः स्थाप्याः यथा १,२,४,८, तत्र चैकगुरुपंक्तौ प्रथमतोऽष्टाङ्कः स्थाप्यः, अष्टाङ्कचतुरङ्कयोजनाद्द्वादशाङ्कः स तदधः स्थाप्यः १२, द्वादशाङ्कद्वयङ्कयोजनाच्चतुर्दशाङ्कः स तदधो लेख्यः १४, चतुर्दशैकाङ्कयोजनात्पञ्चदशाङ्कः स तदधो लेख्यः १५, एवमेकगुरुकस्यैका पंक्तिः । अथ द्विगुरुकपंक्तौ अष्टाङ्कपृष्ठवर्त्ती

| १ | २ | ४ | ८ | |
|---|---|---|---|---|
| १ | २ | ४ | | १६ |
| | ३ | ६ | १२ | |
| | ५ | ७ | १४ | |
| | ९ | १० | १५ | |
| | | ११ | | |
| | | १३ | | |

चतुरङ्क उपरि लेख्यः, चतुरङ्के द्वयाङ्कयोजनात् षडङ्कः ६, स तदधो लेख्यः; षडङ्कैकाङ्कयोजनात् सप्ताङ्कः ७, स तदधो लेख्यः; ततः पूर्व्वाङ्केणापि सह योगं कृत्वा लेख्यं भवति, तत्र चतुरङ्कस्य पूर्व्वाङ्कोऽष्टाङ्कस्तेन चतुरङ्कयोगाद्द्वादशाङ्कः, स पूर्व्वलिखितत्वान्न लिख्यते, एवं चतुर्द्दशाङ्कपञ्चदशाङ्कावपि पूर्व्वलि[खि]तौ, तेनाष्टाङ्के द्वयांङ्कयोगाद्दशाङ्कः १०, स तदधो लेख्यः; ततो दशैकाङ्क-योगादेकादशाङ्कः [११], स तदधो लेख्यः; पुनश्चाष्टाङ्कचतुरङ्कैकाङ्क-योगात्त्रयोदशाङ्कः १३, स तदधो लेख्यः; इति द्विगुरुकपंक्तिः।

अथ द्वि[त्रिगु]रुकपंक्तिः, तत्र चतुरङ्कपृष्ठवर्त्ती द्वयाङ्क उपरि लेख्यः; द्वयाङ्कैकाङ्कयोगात्त्रयाङ्कः, स तदधो लेख्यः; ततश्चतुरङ्क-द्वयाङ्कयोगात् षड्ङ्कः, स पूर्व्वलिखितः, तेन चतुरङ्कैकाङ्कयोगात्प-ञ्चाङ्कः ५, स तदधो लेख्यः; ततश्चाष्टाङ्कचतुरङ्कयोगात् यो द्वा-दशा[ङ्को] जातः स पूर्व्वलिखित एव, तेनाष्टाङ्कैकाङ्कयोगान्नवाङ्कः ९, स तदधो लेख्यः इति त्रिगुरुकपंक्तिः।

अथ चतुर्गुरुकपंक्तौ द्वयाङ्कपृष्ठवर्त्ती एकाङ्कोऽपि लेख्यः १, ततश्चान्याङ्कयोगात् येऽङ्कास्ते पूर्व्वलि[खि]ता एव, तेन तदधो-ऽङ्कान्तरं न लिख्यते।

तेन चतुरक्षरप्रस्तारस्याष्टमद्वादशचतुर्द्दशपञ्चदशेषु एकगुरुः, च-तुर्थषष्ठसप्तमदशमैकादशत्रयोदशेषु द्विगुरुः। द्वितीय[तृ]तीयपञ्च-[म]नवमेषु त्रिगुरुः। प्रथमतश्चतुर्गुरुरिति ज्ञेयम्। षोड़शाङ्कस्य लिखनात् तत्र गुरुर्नास्ति, किन्तु सर्व्वलघुरिति ज्ञायते॥ (८).

४४। अमुकवर्णमात्राप्रस्तारयोरेतावद्गुरुलघुयुक्तो भेद एतावत्सं-

ख्यक इति मेरुपंक्तिवर्त्तितत्तत्कोष्ठस्थांकनिर्द्धारितस्वरूपसंख्याकानां भेदानां प्रथमद्वितीयादिप्रातिस्विकरूपस्य निर्द्धारणं तन्निर्द्धारकांकसमूहो वा पताका, सा द्विविधा वर्णपताका मात्रापताका चेति।

वर्णपताकानिर्माणप्रकारमाह उद्दिट्ठा सरि अंकेति। उद्दिट्ठा सरि—उद्दिष्टसदृशान् उद्दिष्टपदस्योद्दिष्टांकपरत्वादुद्दिष्टांकसदृशानित्यर्थः, अंक—अंकान्, दिज्जसु—देहि, प[पु]व्विमेकमंकं दत्वा उत्तरोत्तरं द्विगुणितान् द्विचतुरष्टादिकानंकान् यथाप्रस्तारसंख्यं स्थापयेदित्यर्थः, ततः पुब्ब अंक—पूर्वांकस्य, पर—परस्मिन्नुत्तरवर्त्तिनीति यावत् अंके इति शेषः, पत्थरसंख—प्रस्तारसंख्यं प्रस्तारस्य संख्या यस्यां क्रियायां तद्यथा स्यात्तथेत्यर्थः, भरण—योजनं करिज्जसु—कुरु। यस्य पूर्वांकस्य यत्परांकयोजने प्रस्तारसंख्याकोऽंको निष्पद्यते, तस्य पूर्वांकस्य तत्र परांके योजनं न कार्यमित्येको नियम इत्यर्थः। एवं कृते पाउल अंक पढम—अवहट्टभाषायां पूर्वनिपातानियमात् प्रथमप्राप्तमंकमित्यर्थः, परितेज्जसु—परित्यज। यस्य पूर्वांकस्य यत्परांकयोजने पूर्वप्राप्तोऽंको निष्पद्यते तस्य तत्र योजनं न कार्यमिति द्वितीयो नियम इत्यर्थः। एवं प्रकारेण वर्णानामिति शेषः, पताका किज्जसु—पताकां कुरु इति योजना।

अत्र यः पूर्वांकः यत्र परांके प्रथमं योज्यते तद्यो[यो]जननिःपन्ना अंकाः तत्परांकादधोऽधः स्थाप्या इति नियमो गुरूपदेशादवधारणीयः। पूर्वांकस्य सर्वपरांकयोजने येऽंका निःपद्यंते तैः कोष्ठपंक्तिर्बोध्या।

अथैतदनुसारेण चतुर्वर्णपताकालिखनप्रकार उच्यते । चतुर्वर्णपताकायामादौ एकं कोष्ठं कर्त्तव्यं, तत ऊर्द्धाधः कोष्ठचतुष्टयं कल्पनीयं, तत ऊर्द्धाधः कोष्ठषट्कं, तत ऊर्द्धाधः कोष्ठचतुष्टयं, ततएकः कोष्ठः । एवं परस्परसंश्लिष्टरेखं कोष्ठस्थानपंचकं विधाय, [य]चोपरितनप्रथमद्वितीयतृतीयचतुर्थपंचमकोष्ठेषु एकद्विचतुरष्टषोडशेति पंचांका यथाक्रमं स्थाप्याः, तत्र प्रथममेककोष्ठस्थानमेकांकयुक्तमिति सर्व्वापेक्षया प[पू]र्वं एकोऽंकः, स च उत्तरवर्त्तिषु द्वितीयचतुर्थाष्टमांकेषु योज्यमानः प्रथमं द्वितीयांके योज्यते इति तद्योजननिःपन्ना अंका द्वितीयांकादधोऽधः स्थाप्या इति एकांकद्वितीयांकयोजननिःपन्नस्तृतीयांको द्वितीयांकादधः स्थाप्यः, ततएकांकचतुर्थांकयोजननिःपन्नः पंचमांकस्तृतीयांकादधः स्थाप्यः, ततः एकाष्टमांकयोजननिःपन्नो नवमोऽंकः पंचमांकादधः स्थाप्यस्ततएकांकस्य षोडशांकयोजने सप्तदशोऽंकः प्रस्तारसंख्यातोऽधिकसंख्याको निःपद्यते इति तस्य तत्र योजनं न कार्यमेवं प्रथमांकस्य द्वितीयचतुर्थाष्टमांकेषु योजनं कृत्वा निःपन्नद्वितीयतृतीयपंचमनवमैश्चतुर्भिरंकैर्द्वितीयस्थानकोष्ठपंक्तिः कल्पनीया । एतत्कोष्ठपंक्तिस्था द्वितीयादयश्चत्वारोऽप्यंकाश्चतुर्थाष्टमांकपूर्ववर्त्तिन इति क्रमेण तयोर्योज्यमानाः प्रथमं चतुर्थांके योज्यंतेऽतस्तद्योजननिःपन्नांकाश्चतुर्थांकादधोऽधः स्थाप्या इति, द्वितीयचतुर्थांकयोजननिःपन्नः षष्ठोऽंकः चतुर्थांकादधः स्थाप्यस्ततस्तृतीयचतुर्थांकयोजननिःपन्नः सप्तमोऽंकः षष्ठांकादधः स्थाप्यः, ततः पंचमचतुर्थयोजने नवमांकः प्रथमप्राप्तो निःपद्यते इति तस्य तत्र योजनं न कार्यमिति,

पंचमाष्टमांकयोजननिःपन्नस्त्रयोदशांकः सप्तमांकादधः स्थाप्यः, एवं द्वितीयादिचतुर्णामंकानां चतुर्थांके योजनं कृत्वा द्वितीयाष्टमांकयोजननिःपन्नो दशमांकस्त्रयोदशांक[ा]दधः स्थाप्यस्ततः तृतीयाष्टमयोजननिःपन्न एकादशांको दशमांकादधः स्थाप्यः, ततः पंचमाष्टमयोजननिःपन्नस्त्रयोदशांकः प्रथमप्राप्तो निःपद्यते इति तयोर्योजनं न कार्यं, नवमाष्टमयोजननिःपन्नः सप्तदशो नवमषोडशयोजननिःपन्नः पंचविंशतितमश्चांकः प्रस्तारसंख्यातोऽधिकसंख्याको निःपद्यते इति तद्योजनं न कार्यम् । एवं द्वितीयाद्यंकानां चतुर्थाष्टमांकयोर्योजनं कृत्वा चतुर्थषष्ठसप्तमचयोदशदशमैकादशेति षडंकैः तृतीयस्थानकोष्ठपङ्क्तिः कल्पनीया, ततश्चतुर्थादयः षडंका अष्टमांकपूर्व[व]र्त्तिन इति तेषां तत्र योजने चतुर्थाष्टमयोजननिःपन्नो द्वादशांकोऽष्टमांकादधः स्थास्ततः षष्ठाष्टमांकयोजननिःपन्नश्चतुर्दशोऽंको द्वादशांकादधः स्थाप्यस्ततः सप्तमाष्टमयोजननिःपन्नः पंचदशोऽंकश्चतुर्दशांकादधः स्थाप्यस्ततस्त्रयोदशदशैकादशांकानामष्टमांकयोजने, अष्टमादीनां च षोडशांकयोजने प्रस्तारसंख्यातोऽधिकसंख्याका अंका निःपद्यंते अतस्तेषां तत्र योजनं न कार्यमेवं चतुर्थाष्टमांकयोर्योजनं कृत्वाष्टमद्वादशचतुर्दशपंचदशेति चतुर्भिरंकैश्चतुर्थस्थानकोष्ठपङ्क्तिः कल्पनीया । पंचमस्थानकोष्ठकं षोडशांकयुक्तं कल्पनीयम् । एवं चतुर्वर्णवृत्तपताकायां कोष्ठस्थानपंचकं कल्पनीयं, तत्स्वरूपं लिखित्वा प्रदर्श्यते — [ Vide figure p. 73—Ed.] एवं च चतुर्वर्णभेदपङ्क्तिवर्त्तिप्रथमकोष्ठस्थैकांकनिर्द्धारितचतुर्गुरुयुक्तस्वरूपैकसंख्याकस्य भेदः प्रथम इति [प्राति]स्विकं रूपं पताकाप्रथम-

कोष्ठस्थैकांकेन निर्द्धार्य्यते चतुर्गुरुयुक्त एको भेदः प्रथम इति। एवं चतुर्वर्णमेरुपंक्तिवर्त्तिद्वितीयकोष्ठस्थचतुर्थांकनिर्द्धारितैकलघुत्रिगुरुयुक्तत्वस्वरूपचतुष्टसंख्याकानां भेदानां द्वितीयतृतीयपंचमनवमेति प्रातिस्विकं रूपं चतुर्वर्णपताकाद्वितीयस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरंकैर्निर्द्धार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा द्वितीयतृतीयपंचमनवमरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तितृतीयकोष्ठस्थषष्ठांकनिर्द्धारितद्विगुरुद्विलघुयुक्तत्वस्वरूपषट्संख्याकानां भेदानां चतुर्थषष्ठसप्तमचयोदशदशमैकादशेति प्रातिस्विकं रूपं पताकातृतीयस्थानकोष्ठपङ्क्तिवर्त्तिभिः षड्भिरंकैर्निर्द्धार्य्यते द्विगुरुद्विलघुयुक्ताः षड्भेदाः चतुर्थषष्ठसप्तमचयोदशदशमैकादशरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तिचतुर्थकोष्ठस्थचतुर्थांकनिर्द्धारितैकगुरुत्रिलघुयुक्तत्वस्वरूपचतुष्टसंख्याकानां भेदानामष्टमद्वादशचतुर्दशपंचदशेति प्रातिस्विकं रूपं पताकाचतुर्थस्थानकोष्ठपङ्क्तिवर्त्तिभिश्चतुर्भिरंकैरवधार्य्यते एकलघुत्रिगुरुयुक्ताश्चत्वारो भेदा अष्टमद्वादशचतुर्दशपंचदशरूपा इति। एवं चतुर्वर्णमेरुपङ्क्तिवर्त्तिपंचमकोष्ठस्थैकांकनिर्द्धारितचतुर्लघुयुक्तत्वस्वरूपैकत्वसंख्याकस्य भेदस्य षोडश इति प्रातिस्विकं रूपं पताकापंचमकोष्ठस्थषोडशांकेन निर्द्धार्य्यते चतुर्लघुरेको भेदः षोडशेति। एवमन्यत्रापि पताका बोध्याः। ग्रंथविस्तरभयान्न लिख्यते ॥ (E).

४४। अथ वर्णपताका। पूर्वं मेरौ अमुकगुरुका अमुका भेदा भवंतीत्युक्तं, ते च भेदाः प्रस्तारे अमुकस्थानेषु तिष्ठंतीति ज्ञानार्थं पताकामाह ॥ उद्दिट्ठा। तत्र मेरौ यावती गुर्वाद्यंकसंख्या भवि-

ष्यति तावंत्येव कोष्ठकानि पताकायां लेखनीयानीति युक्ता विध्यति ॥ उद्दि ॥ उद्दिष्टसदृग्यानंकान्देहि, पूर्वांकेण परभरणं कुरु । प्राप्तमंकं प्रथमं परित्यज्य प्रस्तारसंख्यया पताकां सृजाप ॥ अयमर्थः । आदौ तावत् यत्संख्याकवर्णद्त्तस्य[?] पताका चिकीर्षिता तत्संख्याका उद्दिष्टवदुत्तरोत्तरं द्विगुणिता एकपंक्त्यंकाः स्थाप्याः, पश्चात्मेरुप्रस्तारांकसंख्यया पताकाकोष्ठा वर्द्धनीयाः ॥ ततः क्रमात्पूर्वाग्रिमकोष्ठस्थांकयोगस्तत्ले लेख्यः इति पताका पूर्यतां ॥ एतदुक्तं ॥

एको द्वावथ चत्वारः ततोऽष्टाविति वर्द्धनं ।
पूर्वं परेण संयुज्य तदधो लेखयेद्बुधः ॥
अंतिमांकावधिं नैव लंघयेदत्र कुत्रचित् ।
एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत् ॥

इति वर्द्धनं यावद्विकल्पं ॥ अत्रोदाहरणमेकाक्षरे १ । २ । अस्य द्विविकल्पत्वादेकस्थानस्य एकगुरुः, द्वितीयस्य एकलघुरित्येतावतैव सिद्धिः । सर्वत्राद्यांतांकौ सर्वगुरुलघुवाचकौ बोध्यौ ॥ द्व्यक्षरे यथा,

|१|२|४|
|३|

अत्रैकांकद्व्यंकयोर्योगे त्र्यंको द्व्यंकाधो लेख्यः ॥ तस्य चतुर्विकल्पत्वात् तावतैव सिद्धिः । आद्यस्थान एव सर्वगुरुः, द्वितीयद्विपंक्तिस्थौ द्वित्र्यंकौ एकगुर्व्वेकलघू, चतुर्थोऽंकः सर्वलघुरिति ॥ चतुरक्षरे यथा ॥ [Vide figure p. 73—Ed.] अत्रैको द्वाभ्यां सह त्रयं द्व्यंकाधः, एकश्चतुर्भिः सह पंच त्र्यंकाधः, एकाष्टयोगे नव पंचाधः, द्विचतुर्योगे षट् चतुरधः, द्व्यष्टयोगे दश ष[ड्]धः, द्विषोडशयोगे न संभवति, त्रिचतुर्योगे सप्त दशाधः, पंचचतुर्योगे नव एकत्र लिखितत्वान्न लेख्यः, त्र्यष्टयोगे एकादश

अह मत्ता मेरु।[1]

दुइ दुइ कोट्ठा सरि लिहहु[2]
पढम अंक[3] तसु अंत।
तसु आइहि पुण[4] एक्क[5] सउ[6]
पढमे[7] बेवि मिलंत॥ ४५॥ दोहा।

सिर अंके तसु सिरपर
अंके[8] उबरल कोट्ठ[9] पुरह[10] णिसंके[11]।
मत्ता मेरु अंक संचारि बुज्झह[12]
बुज्झह[12] जण दुइ[13] चारि ॥४६॥ [सिंहिणी ?]

सप्ताधः, त्रिषोड़शयोगो न, पंचाष्टयोगे त्रयोदश एकादशाधः, चतुरष्टयोगे द्वादशाष्टाधः, चतुःषोड़शयोगो न, षड़ष्टयोगे चतुर्दश द्वादशाधः, दशाष्टयोगो न, सप्ताष्टयोगे पंचदश चतुर्दशाधः। अत्राद्यः सर्वगुरुः, द्वितीयपंक्त्यंका एकलघुस्थानानि, तृतीयपंक्तौ द्विलघुस्थानानीत्यादि ज्ञेयं। यथा आद्यस्थाने सर्वगुरुः, द्वित्रिपंचनवस्थाने[षु] एकलघवस्त्रिगुरवो वा, चतुःषट्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विलघवो द्विगुरवो वा, अष्टद्वादशचतुर्दशपंचदशस्थानेषु त्रिलघव-एकगुरवो वा, षोड़शस्थाने सर्वलघुरित्येवं सर्वत्र ज्ञेयम्॥ (G).

४५–४६। १ अथ मत्ता मेरु (C). अथ मात्रामेरुः (A, D, E & F). २ लिखेछ (D), लेखउ (F). ३ पढमहु (C). ४ पुण (A), पुणि (D), dropt in (F). ५ ऐक (C), एक (D). ६ सउ (C), सरि (D). ७ पिढमे (E), dropt in (F). ८ अंको (E). ९ कोट्टा (B), कोट्ठ (E), कोठक (F). १० पूरह (D), पूरउ (E & F). ११ णिसंके (B), णिसंके (C), णीसंके (D & E), णीसंक (F). १२ बुज्झह (D & E), बुज्झ (F). १३ दुअ (E).

४५-४६। अथ मात्रामेरुः। द्वयं द्वयं कोष्ठं समं लिख, प्रथमो-ऽङ्कस्तस्यान्ते। तस्यादौ पुनरेकं दत्त्वा [प्रथमं] द्वावपि मिलितौ॥ शिरोऽङ्के तस्य शिर उपर्यङ्केण कोष्ठं पूरय निःशङ्कम्। मात्रामेरोरङ्कं संचार्य बुध्यन्तां [बुध्यन्तां] जना द्विपलाराः॥ मेरोस्तु प्रयोजनं द्विकलादौ प्रस्तारसंख्याज्ञानं सर्वगुर्वादिज्ञानञ्च। तथाहि यदि पृच्छ्यते द्विकलस्य कियान् प्रस्तारः सर्व्वगुरुः, सर्व्वलघुर्वा कियान्, एवं त्रिकलस्य कियान् प्रस्तारः सर्वगुरुः, सर्वलघुर्वा कियान् इत्येव-मादिप्रश्ने तज्ज्ञानं मेरोः प्रयोजनं, तत्र चायं प्रकारः। प्रथमतः कोष्ठद्वयं लेख्यं तदधः कोष्ठद्वयं लिखित्वा तदधः कोष्ठत्[र]यं पुनरपि कोष्ठत्रयमधो लेख्यं, ततः कोष्ठचतुष्टयं लिखित्वा तदधोऽपि कोष्ठ-चतुष्टयं लेख्यमेवं कोष्ठलिखनं कृत्वा तत्राङ्का देया भवन्ति। तत्र चायं प्रकारः। सर्व्वेषां कोष्ठानामन्ते प्रथमाङ्को देयः, प्रथमाङ्क-शब्देनैकाङ्क उच्यते। ततश्च समीकृतकोष्ठयुग्मकानामादिमकोष्ठे सर्वत्रैकाङ्को देयस्तदधस्तनकोष्ठादौ च द्व्याद्यङ्कः। तत्रेयं युक्तिः। उपरिस्थिताङ्क एकस्तत्परतश्चैकः, इत्यधस्ताद्द्व्याङ्को लिखितः। एवं द्वितीयकोष्ठयुग्मस्यादिमकोष्ठकादावेकाङ्कोऽस्ति तदुपरि द्व्याङ्क-इति मिलित्वा त्र्याङ्कोऽधस्ताल्लेख्यः। एवं तृतीयकोष्ठयुग्मकस्याद्यावे-काङ्कस्तदुपरि च त्र्याङ्क इति मिलित्वा चतुरङ्कोऽधस्ताल्लेख्य इति। प्रथमे द्वयोर्मिलनार्थमत्र प्रथमशब्देन द्वितीयकोष्ठकादिमस्थ-मुच्यते। अथावशिष्टप्रचरणानां[स्थानां]। तत्र च प्राथमिककोष्ठ-युग्मके पूरणीयमेव नास्ति, द्वितीयकोष्ठ[युग्म]स्य मध्यस्थं पूरणीयं, तत्रायं प्रकारः, शून्यस्थस्योपरिस्थितो द्व्याङ्कस्तदुपरिस्थितद्विती-

यगृहे चैकाङ्क इति मिलित्वा त्रयं, तेन मध्यमकोष्ठे त्रयाङ्को लेख्यः। तदधोगृहं रिक्तमस्ति, तदुपरिस्थितस्य त्र्याङ्कस्य तदुपरि-द्वितीयगृहस्थितैकाङ्कयोजनात् चतुरङ्को जातः, स तदधो लेख्यः। तृतीयकोष्ठयुग्मप्रथमपंक्तौ मध्यमकोष्ठद्वयं रिक्तमस्ति, तत्र चैकस्योपरि त्रयाङ्को द्वितीयगृहे च त्रयाङ्कस्तयोर्मिलनाच्च षड्ङ्कः, स तत्र लेख्यः; तदपरकोष्ठस्योपरि चतुरङ्कस्तदुपरिस्थितद्वितीयगृहे चैकाङ्क इति मिलित्वा पञ्चाङ्कः, स तत्र लेख्यः। तदधस्य कोष्ठ-द्वयं रिक्तमस्ति, तत्रादिगृहस्योपरि षड्ङ्कस्तदुपरिस्थितद्वितीय-गृहे च चतुरङ्क इति मिलित्वा दशाङ्कस्तत्र लेख्यः; तदपरकोष्ठस्य उपरि पञ्चाङ्कस्तदुपरिस्थितद्वितीयगृहे चैकाङ्क इति मिलित्वा षड्ङ्कः, स तत्र लेख्यः इति शिर अङ्केत्यादेरर्थः।

अथ प्रश्नस्योत्तरदानं प्रकटीक्रियते। तत्र द्विकलस्य कियान् प्रस्तार इति प्रश्ने, प्रथमगृहे एकाङ्कः परगृहे चैकाङ्क इति मिलित्वा द्वयं, तेन द्विकलस्य प्रस्तारद्वयमिति वाच्यम्। द्विकले सर्वगुरुः कियानिति प्रश्ने, प्रथम एकाङ्कसत्त्वात्सर्वगुरुरेक इति वाच्यमन्ते चैकाङ्कसत्त्वात्सर्वलघुरेक इति वाच्यम्। त्रिकले कियान् प्रस्तार इति प्रश्ने, प्रथमगृहे द्वयाङ्कः परगृहे चैकाङ्क इति मिलित्वा त्रयमिति। त्रिकले एकगुरुः कियानिति प्रश्ने, प्रथमतो द्वयाङ्कसत्त्वादेकगुरुद्वयमिति वाच्यम्। त्रिकले सर्व्वलघुः कियानिति प्रश्ने, अन्ते एकाङ्कसत्त्वात्सर्व्वलघुरेक इति वाच्यम्। सर्व्वलघुकथनमेवं बोध्यम्। एवं चतुष्कले कियान् प्रस्तार इति प्रश्ने, तृतीयकोष्ठके एकत्रयमेक इति मिलित्वा पञ्चाङ्कसत्त्वात्प्रस्ता[र]पञ्चकमिति

वाच्यम् । चतुष्कले सर्व्वगुरुः कियानिति प्रश्ने, प्रथमत एकाङ्क-सत्त्वादेक इति वाच्यम् । चतुष्कले एकगुरुः कियानिति प्रश्ने, परगृहे त्रयाङ्कसत्त्वादेकगुरुत्रयमिति वाच्यम् । एवं पञ्चकलो-[ले] कियान् प्रस्तार इति प्रश्ने, चतुर्थकोष्ठे मिलिताऽष्टाङ्क-सत्त्वादष्टाविति वाच्यम् । तत्र च प्रथमतस्त्रयाङ्कसत्त्वाद्द्विगुरुत्रय-मिति वाच्यम् । परगृहे चतुरङ्कसत्त्वादेकगुरुकचतुष्टयमिति वाच्यम् । एवं षट्कले मिलिता त्रयोदशाङ्कसत्त्वात् त्रयोदश प्रस्तारा-इति वाच्यम् । प्रथमत एकाङ्कसत्त्वादेकसर्व्वगुरुरिति वाच्यम् । परगृहे ष[ड़]ङ्कसत्त्वाद्द्विगुरुषट्कं, ततश्च पञ्चाङ्कसत्त्वादेकगुरुपञ्चक-मेवमग्रेऽपि बोध्यम् । एवमसंख्यातमानेतुं शक्यते इति सप्तकलोऽपि लिखितः । (C). [Vide figure p. 88. Ed.]

४५-४६ । अथ मात्रामेरुप्रकारमाह दुइ दुइ कोट्ठेति । दुइ दुइ — द्वयोर्द्वयोः कलयोरिति शेषः, कोट्ठा — कोष्ठकानि, सरि — सदृशानि समसंख्याकानीति यावत्, लिहहु — लिखत । एककलप्रस्ताराभावात् द्विकलमारभ्य मेरूत्पत्तिः, एवं च द्वितीय-तृतीयेति द्वयोः कलयोः प्रत्येकं कोष्ठद्वयम् ऊर्द्ध्वाधःस्थित्या पर-स्परसंश्लिष्टं, चतुर्थपंचमेति द्वयोः कलयोः प्रत्येकं कोष्ठत्रयमूर्द्ध्वाधः-स्थित्या परस्परसंश्लिष्टं, षष्ठसप्तमेति द्वयोः कलयोरूर्द्ध्वाधःस्थित्या परस्परसंसक्तं प्रत्येकं कोष्ठचतुष्टयमित्यादिरीत्या द्वयोर्द्वयो कलयोः समसंख्याकान्यूर्द्ध्वाधःस्थित्या परस्परसंसक्तानि कोष्ठकानि उत्तरो-त्तरं वर्द्धितानि गुरूपदेशात् कल्पनी[नी]यानीति निर्गलितार्थः । अत्र कोष्ठसादृश्यं समसंख्याकत्वमेव । तसु — तेषु कोष्ठेषु, अंत —

अंतिमे कोष्ठे इत्यर्थः, पढम[अं]क — प्रथमोऽंकः स्थाप्य इति शेषः, तसु आइथि — तेष्वाद्येषु कोष्ठेषु मध्ये [पुनः] विषमे प्रथमतृतीय-पंचमसप्तमादिकोष्ठेषु, एक्क — एकः अंकः स्थाप्य इत्यनुषंगः। क्वचिद्वि-षमे इत्यस्य स्थाने पढमे इति पाठः, तत्र समादित्यध्याहृत्य योज्यम्, एवं च समात्प्रथमे पूर्ववर्त्तिनि विषमे इति, स एवार्थः, यतः समात्पूर्ववर्त्ती विषम एवेति, सउ — समेषु द्वितीयचतुर्थषष्ठाष्ट-मादिषु कोष्ठेषु, बेबि मिलंत — द्वौ मिलितौ पूर्वांकाविति शेषः, स्थापयेत्यनुषंगः। आद्या ये विषमाः कोष्ठास्तेष्वेकांको देयः, ये समास्तेषु पूर्ववर्त्त्यंकद्वययोजननिःपन्नोऽंको देय इत्यर्थः। ततः उबरल कोट्ठ — उर्वरितानि आद्यंतांतरालस्थितानि कोष्ठकानीत्यर्थः। सिर अंके तसु सिरपर अंके — शिरोऽंकाः तच्छिरउपर्यंकाभ्यां, णीसंक-[के] — निःशंकं यथा स्यात्, पूरहि[ऊ] — पूरय, एवं अंक संचारी-[रि] — अंकान् संचार्य संस्थाप्य, जण दुइ चारि — जना द्विचत्वारः, मत्ता मेरु — मात्रामेरुं जाणऊ [बुज्झऊ] बुध्यध्वम् इति योजना।

अथैतन्निर्माणप्रकारो लिख्यते। एककलप्रस्ताराभावात् द्वि-कलमारभ्य मेरुप्रवृत्तिः। एवं च प्रथमं वामदक्षिणयोरि[रे]कांगुल-मात्रदीर्घं मध्ये रेखाभूतमूर्द्ध्वमधश्च द्व्यंगुलमात्रमंतरं विसृज्यो-र्द्ध्वाधो रेखाद्वयं कार्यं, ततस्तत्पार्श्वद्वयमेकैकम् ऋजुरेखया कार्यम्, एवं दीर्घकोष्ठद्वयं विधाय तत्र प्रथमरेखामध्यदेशमारभ्याधस्तन-तृतीयरेखामध्यदेशपर्यंतम् एकाम् ऋजुरेखां दत्त्वा प्रथमस्थाने ऊर्द्ध्वाधःस्थिता परस्परसंलग्नं कोष्ठक[च]तुष्टयं कार्यं, तत्रांतिम-कोष्ठयोः प्रत्येकमंको देयः, आद्ये उपरितने प्रथमे च विषमता-

द्वेको देयः, तदधस्तने च द्वितीयत्वात् समे उपरितनकोष्ठद्वयस्यैकांकद्वयरूपपूर्वांकद्वययोजननिःपन्नद्वितीयांकेन पूरणं विधेयम् । एवं चोपरितनकोष्ठद्वयं द्विकलमेरुपङ्क्तिः, तत्र प्रथमकोष्ठस्यैकांकेन द्विकलस्यैकगुरुरूप एको भेद इति, द्वितीयकोष्ठस्यैकांकेन च द्विलघुरेको भेद इति प्रतीयते । कोष्ठद्वयस्यैकांकद्वययोजननिःपन्नद्वितीयांकेन च द्विकलस्य भेदद्वयमिति द्विकलगणभेदपिंडीभूता समस्ता द्वित्वसंख्या प्रतीयते । एवमधस्त[न]कोष्ठद्वयं त्रिमात्रमेरुपङ्क्तिः, तत्र प्रथमकोष्ठस्थद्वितीयांकेन त्रिकलप्रस्तारे एकगुरुयुक्तं भेदद्वयं, द्वितीयकोष्ठस्थैकांकेन च त्रिलघुयुक्त एको भेद इति प्रतीयते । कोष्ठद्वयस्थद्वितीयैकेत्यंकद्वययोजननिःपन्नतृतीयांकेन च त्रिकलस्य समस्तास्त्रयो भेदा इति पिंडीभूता समस्ता त्रित्वरूपा त्रिकलगणभेदसंख्या प्रतीयते । ततोऽधस्तनीं तृतीयां रेखामाद्यंतपार्श्वयोर्मनागवर्द्धयित्वाऽधोऽध एकैकमंगुलमंतरं विसृज्य तत्परिमाणं रेखाद्वयं कार्यम्, ऋजुरेखया तत्पार्श्वद्वयमेलनं च कार्यम् । एवं त्रिकलमेरुपङ्क्तिसंसृष्टं तदधःस्थं दीर्घं कोष्ठद्वयं कार्यं, तत्रोपरितनत्रिकलमेरुपङ्क्तिप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनांतिमरेखापर्यंतम् एका ऋजुरेखा कार्या, एवं तत्पङ्क्तिद्वितीयकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनांतिमरेखापर्यंतमेका ऋजुरेखा कार्या, एवं द्विती[य]स्थमेरूर्द्ध्वापेक्षया अधःस्थित्या परस्प[र]संलग्नं कोष्ठषट्कं कार्यं, तत्रोपरितनकोष्ठमयात्मिका सर्वापेक्षया तृतीया चतुःकलमेरुपङ्क्तिः, तत्र सर्वापेक्षया तृतीयत्वाद्विषमे प्रथमकोष्ठे सर्वांतिमे च तृतीये एकोऽंको देयः, द्वितीये च त्रिरोऽंकान्त्रिरोऽंक-

द्वितीयैकेत्यंकद्वययोजननि:पन्नतृतीयांकेन पूरणं विधेयम्; ए[त]द्-धस्तनी च कोष्ठत्रयात्मिका चतुर्थी पंचकलमेरुपङ्क्ति:, तत्र प्रथम-कोष्ठे सर्वापेक्षया चतुर्थत्वात्समे एकद्वयेतिपूर्वांकद्वययोजननि:पन्न-तृतीयांकेन पूरणं कार्यं, तदग्रिमे च द्वितीयकोष्ठे शिरोऽंक-तच्छिरोऽंकतृतीयैकेत्यंकद्वययोजननि:पन्नचतुर्थांकेन पूरणं कार्यम्। तदग्रिमे च तृतीयकोष्ठे सर्वांतिमे एकोऽंको देय:, तत्रोपरितन-कोष्ठरूपात्मकचतु:कलमेरुपङ्क्तिप्रथमकोष्ठस्थैकांकेन चतु:कलप्रस्तारे द्विगुरुरेको भेद इति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थतृतीयांकेन तत्र प्रस्तारे एकगुरुयुक्तं भेदत्रयमिति प्रतीयते। अंतिमतृतीय-कोष्ठस्थैकांकेन च तत्र प्रस्तारे चि[चतु:]लघुयुक्त एको भेद इति प्रतीयते। एकतृतीयैकेतिकोष्ठत्रयस्थसमस्तांकयोजननि:पन्नपंचमांकेन चि[चतु:]कलस्य पंच भेदा इति समस्ता पिंडीभूता प्रस्तारसंख्या प्रतीये[यते]। एवमेतदधस्तनकोष्ठत्रयात्मकपंचकलप्रस्तारे द्विगुरुयुक्तं भेदत्रयमिति प्रतीयते। तदग्रिमद्वितीयकोष्ठस्थचतुर्थांकेन च तत्र प्रस्तारे एक[गुरु]युक्तं भेदचतुष्टयमिति प्रतीयते। तदग्रिमतृतीय-कोष्ठस्थैकांकेन च तत्र प्रस्तारे पंचलघुयुक्त एको भेद इति प्रतीयते। कोष्ठत्रयस्थत्रिचतुरेकेत्यंकत्रययोजननि:पन्नाष्टमांकेन च पंचकलस्याष्टौ भेदा इति समस्ता पिंडीभूताऽष्टत्वरूपा पंचकल-[प्र]स्तारसंख्या प्रतीयते।

एवं पूर्ववदेतत्कोष्ठद्वयादधस्ताद्दीर्घं कोष्ठद्वयं निर्माय उपरि-तनपंचकलमेरुपङ्क्तिप्रथमकोष्ठाधोरेखामध्यदेशमारभ्याधस्तनद्वितीय-कोष्ठाधोरेखापर्यंतमृजुरेखा देया, तत उपरितनद्वितीयकोष्ठाधो-

रेखामध्यदेशमारभ्याधस्तनद्वितीयकोष्ठाधोरेखापर्यंतमृजुरेखा देया, तत उपरितनतृतीयकोष्ठाधोरेखामध्य[देश]मारभ्याधस्तनकोष्ठाधोरेखापर्यंतमृजुरेखा देया, एवं तृतीयस्थाने ऊर्द्ध्वाधःस्थित्या परस्परसंसक्तं कोष्ठाष्टकं कार्यं, तत्रोपरितनं कोष्ठचतुष्टयं षट्कलमेरुपङ्क्तिः। तत्र प्रथमकोष्ठे सर्वापेक्षया पंचमत्वादिचमे सर्वांतिमे चतुर्थे च एकोऽंको देयः। द्वितीयकोष्ठे च शिरोऽंकतच्छिरोऽंकतृतीयांकद्वययोजननिःपन्नषष्ठांकेन पूरणं कार्यम्। तदग्रि[पि]मे च तृतीयकोष्ठे शिरोऽंकतच्छिरोऽंकचतुर्थैकेत्यंकद्वययोजननिःपन्नपंचमांकेन पूरणं विधेयम्। सर्वांतिमे च चतुर्थे कोष्ठे एकांकेन पूरणं विधेयम्। एवं चात्र प्रथमकोष्ठस्थैकांकेन षट्कलप्रस्तारे त्रिगुरुयुक्त एको भेद इति प्रतीये[यते]। तदग्रिमद्वितीयकोष्ठस्थषष्ठांकेन च त[च] प्रस्तारे द्विगुरुयुक्ताः षड्भेदा इति प्रतीयते। तदग्रिमतृतीयकोष्ठस्थपंचमांकेन च तत्र प्रस्तारे एकगुरुयुक्ताः पंच भेदा इति प्रतीयते। तदग्रिमचतुर्थकोष्ठस्थैकांकेन च षड्लघुयुक्त एको भेद इति प्रतीयते। कोष्ठचतुष्टयस्थांकचतुष्टययोजननिःपन्न[च]तुर्दशांकेन च समस्ता पिंडीभूता षट्कलप्रस्तारे संख्या चतुर्दशरूपा प्रतीयते। तत्र प्रथमकोष्ठे च सर्वापेक्षया षष्ठत्वात्सप्तमे एकतृतीयेति-पूर्वांकद्वययोजननिःपन्नचतुर्थांकेन पूरणं कार्यम्। तदग्रिमे द्वितीयकोष्ठे शिरोऽंकतच्छिरोऽंकषष्ठचतुर्थेत्यंकद्वययोजननिःपन्नदशमांकेन पूरणं कार्यम्। तदग्रिमतृतीयकोष्ठे च शिरोऽंक[तच्छिरोऽंक]-पंचमैकेत्यंकद्वययोजननिःपन्नषष्ठांकेन पूरणं कार्यम्। अधस्तनं कोष्ठचतुष्टयं च सप्तकलचतुर्थांकेन सप्तकलप्रस्तारे त्रिगुरुयुक्तं भेद-

चतुष्टयमिति प्रतीयते । तदग्रिमद्वितीयकोष्ठस्थदशमांकेन च तत्र प्रस्तारे द्विगुरुयुक्ता दश भेदा इति प्रतीयते । तदग्रिमतृतीयकोष्ठस्थषष्ठांकेन च तत्र प्रस्तारे एकगुरुयुक्ताः षड्भेदा इति प्रतीयते । तदग्रिमचतुर्थकोष्ठस्थैकांकेन च तत्र प्रस्तारे सप्तलघुयुक्त एको भेद इति प्रतीयते । कोष्ठचतुष्टयस्थांकचतुष्टययोजननिःपन्नैकविंशतितमांकेन च समस्ता पिंडीभूता एकविंशतिरूपा सप्तकल[मे]रुपङ्क्तिः । एवमग्रेऽपि मेरुकल्पना यथेच्छं विधेया । अस्माभिस्तु ग्रन्थविस्तरभयात्प्रयोजनाभावाच्च न लिखिता ।

अथ द्विकलमारभ्य सप्तकलपर्यंतं मात्रामेरुस्वरूपं लिख्यते ॥ (E).

मात्रामेरुः ।

| | | | | |
|---|---|---|---|---|
| १ | १ | २ | | |
| २ | १ | ३ | | |
| १ | ३ | १ | ५ | |
| ३ | ४ | १ | ८ | |
| १ | ६ | ५ | १ | १३ |
| ४ | १० | ६ | १ | २१ |

४५-४६ । अथ सर्वलघ्वेकगुरुद्विगुर्वादिज्ञानार्थं मात्रामेरुमाह । दुइ । द्वौ द्वौ कोष्ठौ सदृशौ कुरु, प्रथममंकं तेषामंते । तस्मादौ पुनरेकं स्थाप्यं समे द्वौ मिलंतौ ॥ समे कोष्ठे त्रिकोष्ठादिपंक्तेर्द्वितीयचतुर्थादौ कोष्ठे मिलितौ द्वावूर्द्धांकौ कुरु इत्यर्थः ॥ रिक्तकोष्ठपूरणोपायमाह । सिर । शिरोऽंकेण तस्य शिरःपरांकेण च उर्वरितं कोष्ठं पूरय निःशंकं मात्रामेरौ अंकसंचारं बुध्यंते बुध्यंते जना विचतुराः ॥ अथ अंकमेरौ त्रिकोष्ठकद्विपंक्तौ प्रथमपंक्तिस्थं रिक्तं कोष्ठं तिर्यक् तदुपरितनकोष्ठद्वयस्थांकद्वयमेकीकृत्य पूरणीयं, द्वितीयपंक्तिस्थं रिक्तं कोष्ठं तूपरितनस्यैव कोष्ठद्वयस्थांकमेकीकृत्य पूरणीयमित्यर्थः ॥ एवमग्रेऽपि । अन्यं च । कोष्ठमेकं लिखेदादौ तदधः पंक्तियुग्मके । द्वौ द्वौ च

अह मत्ता पताका ।[1]

(क) उद्दिट्ठा[2] सरि अंका थप्पहु[3]
बामावत्ते[4] पर ले[5] लुप्पहु[6]।
(ख) एक्क लोपे एक्क[7] गुरु आणहु[8]
दुइ[9] तिण्णि[10] लोपे दुइ तिण्णि जाणहु[11] ॥ ४७ ॥

अलिल्ला।

(ग) मत्त पताका पिंगल गाव[12]
जो पारइ[13] सो परहि[14] मिलाव[15] । ४८[16] ॥

---

तदधस्तौस्तौनेवंरूपेण वर्धनम् ॥ अंत्यकोष्ठेषु सर्वेषु प्रथमांकं समालिखेत् । आद्यकोष्ठे द्विपंक्त्यादौ एवमेकांतरं लिखेत् ॥ आदावेकं ततो द्वौ च, पुनश्चैकं ततस्त्रयम् । तिर्यक्समोर्द्ध्वकोष्ठांके रिक्तं कोष्ठं प्रपूरयेत् । विवेकेनांकसंचारे मात्रामेरुः स्फुटो भवेत् ॥ लेखनपंक्त्याः प्रकारस्तु द्विधा ॥ स यथा, एकं कोष्ठमादौ कृत्वा ततो द्विकोष्ठद्विलेखनपंक्त्यादि लिखेत् ॥ द्विकोष्ठादारभ्यैव वा लिखेदिति ॥ (G).

---

(क) Not found in MSS. B & C ; (ख) found in all ; (ग) not found in MS. F. There is a transposition of these Slokas in MS. D ; thus the Slokas ४५, ४६, ४७ and ४८ precede ४१, ४२, ४३ and ४४, the next two Slokas ४९ and ५० are also transposed in the same.—Ed.

४७—४८। १ अथ मात्रापताका (A & D), अथ मत्तामेरु (B). २ उद्दिट्ठा (A), उद्दिट्ठा (D), उद्दिट्ठ (F). ३ थ (D), दिज्जहु (A). ४ बामापत्ते (A), बामावर्त्ते (D). ५ लेइ (A & D), लै (E). ६ लोपिज्जहु (A), लघुक (E). ७ एक (A). ८ आनहु (A), आनहु (B, C & E). ९ दु (D). १० तिन (B), तिण (C), तिण (D), तिणि (F). ११ मानहु (A), जानहु (B), जानहु (C), जाउ (E). १२ गावै (D). १३ पावहु (A), पावइ (E). जाने (D). १४ परहु (B & C) १५ कुम्भाव (E). कुम्भामेर (D) १६ ४६ (A).

४७-४८ । अथ मात्रापताकामाह ॥ एकलोपे एकगुरुमानय, द्विलोपे द्वौन् आनीहि । मात्रापताकां पिंगलो गायति, यः प्राप्यते स परतो मिल्यते ॥ प्राप्यते अवशिष्यते, मिल्यते लिख्यते । अत्र षट्कलप्रस्तारे एकगुरुः कुत्र द्विगुरुः कुत्रेति ज्ञानं प्रयोजनं, तच्च चैकलोपादिना तज्ज्ञानमित्युक्तं, तच्चाङ्कदानमन्तरेण [न] सम्भवत्येव अतस्तत्राङ्कादयः कथमित्याकांक्षाया दर्शनादुद्दिष्टसङ्ख्याङ्कदानं सिद्ध्यति, तच्च पूर्व्वं सिद्धं, यथा १, २, ३, ५, ८, १३, तत्र शेषाङ्के पूर्व्वपूर्व्वाङ्कलोपः कार्य्यो भवति, अत्र त्रयोदशाङ्के शेषभूते तत्पूर्व्वस्य अष्टाङ्कलोपे पञ्चाङ्को निष्पद्यते स लेख्यः, तस्मिन्नेव त्रयोदशाङ्के तत्पूर्व्वस्य च पञ्चाङ्कस्य लोपे अष्टाङ्कोऽवशिष्यते स त[द]धस्ताल्लेख्यः, एवं तत्र त्रयाङ्कलोपे दशाङ्कोऽवशिष्यते स तदधो लेख्यः, एवं दयाङ्कलोपे एकादशाङ्कः स तदधो लेख्यः, एवमेकाङ्कलोपे द्वादशाङ्कः स तदधो लेख्यः, इत्येकलोपादेकगुरुकपङ्क्तिः । अथ द्वयलोपे द्विगुरुरानीयते,—तत्र त्रयोदशाङ्के तत्पूर्वाङ्कद्वयलोपेन द्विगुरुर्द्वयः, तत्र यद्यष्टौ पञ्चेत्यनयोर्लोपः क्रियते तदा शून्यमेवेत्यतोऽष्टौ त्रयमित्यनयोर्लोपेन दयाङ्कः प्राप्यते स च द्वितीयपङ्क्तेरुपरि स्थाप्यः, ततश्चाष्टौ दयमित्यनयोर्लोपे त्रयाङ्कोऽवशिष्यते स दयाङ्कस्याधस्ताल्लेख्यः, ततश्चाष्टावेक इत्यनयोर्लोपे चतुरङ्कोऽवशिष्यते स तदधो लेख्यः, ततश्च पञ्च त्रयमित्यनयोर्लोपे पञ्चाङ्कः प्राप्यते स च पूर्व्वपङ्क्तिपतितत्वात्पुनर्न लिख्यते, तेन पञ्च दयमित्यनयोर्लोपे षडङ्कोऽवशिष्यते स तदधो लेख्यः, ततश्च पञ्चैक इत्यनयोर्लोपे सप्ताङ्कोऽवशिष्यते स तदधो लेख्यः,

ततश्च त्रयं द्वयमित्यनयोर्लोपे अष्टाङ्कः प्राप्यते स च प्रथमपङ्क्ति-पतितत्वात् [न] लिख्यते, तेन त्रयमेक इत्यनयोर्लोपे नवाङ्कः प्राप्यते स तदधो लेख्यः, इति [द्वि]गुरुपङ्क्तिः।

अथ त्रयलोपेन त्रिगुरुक आनेयो भवति,—तत्राष्टौ पञ्च त्रय-मिति मिलित्वा षोड़शाङ्कः, अष्टौ पञ्च द्वयमिति मिलित्वा पञ्चदशाङ्कः, अष्टौ पञ्च एक इति मिलित्वा चतुर्द्दशाङ्कः, एतेषां त्रयोदशाङ्के लोपो न सम्भवति, एवमष्टौ त्रयं द्वय[मि]ति मिलित्वा त्रयोदशाङ्कः, तस्य लोपश्चेत् क्रियते तदा शून्यमाया-त्यतस्तदपि व्यर्थं, पञ्च त्रयं द्वयमित्येषां लोपे त्र्याङ्कोऽवशिष्यते स च पूर्वलिखितत्वान्न लिख्यते, पञ्च द्वयमेक इत्येतेषां लोपे पञ्चाङ्कः प्राप्यते सोऽपि पूर्व्वलिखितस्तेनाष्टौ त्रयमेक इत्येतेषां लोपे एकाङ्कोऽवशिष्यते स तृतीयपङ्क्तौ लेख्यः। तथाच पञ्चमाष्टमदशमै-कादशद्वादशस्थाने[षु] षट्कलप्रस्तारस्यैकगुरुकः पततीति, एवं द्वितीय-तृतीयचतुर्थषष्ठसप्तमनवमस्थाने[षु] द्विगुरुः पततीति, प्रथमस्थाने च त्रिगुरुः पततीति ज्ञेयम्, अत्र च त्रयोदशाङ्कस्य लिखितत्वात्तत्र गुरुर्नास्तीति ज्ञायते, [ते]न त्रयोदशाङ्कः सर्व्वलघुरिति।

अत्र च पञ्चमादिस्थानेष्वेकैकगुरुकः पततीत्युक्तं, स कीदृश-इति प्रश्ने, सर्व्वाः कलाः कृत्वा उद्दिष्टवदङ्का देयाः, यथा १, २, ३, ५, ८, १३, ततश्च यदङ्कलोपेन पञ्चाङ्कः तदीया मात्रा परमात्रया सह गुरुतां प्रापणीया भवति, प्रकृते च अष्टाङ्क-लोपात्पञ्चाङ्कः प्राप्तः, स चाष्टाङ्कः पञ्चम्यां कलायामस्ति, तेन पञ्चमी कला षट्कलया ।।।।।। गुरुतां प्राप्ता, तेन ।।।।ऽ एता-

दृश इति वक्तव्यम्। एवमष्टमस्थाने कीदृगिति प्रश्ने, पञ्चाङ्क-लोपादष्टाङ्कः प्राप्तः, पञ्चाङ्कस्तु चतुर्थ्यां कलायामस्ति, तेन चतुर्थी कला पञ्चम्या कलया सह गुरुतां प्राप्ता, तेन ।।।ऽ। एतादृश इति वाच्यम्। एवमग्रेऽपि। एवं द्वितीयस्थाने द्विगुरुकः कीदृगिति प्रश्नेऽष्टाङ्कत्रयाङ्कलोपाद्द्वयाङ्को लब्धः, त्रयाङ्कस्तृतीयकलायामष्टाङ्कश्च पञ्चम्यां कलायामतस्तृतीया कला [चतुर्थीं कला]मादाय पञ्चमी कला षष्ठीं कलामादाय गुरुतां प्राप्ता, तेन ।।ऽऽ एतादृगिति वक्तव्यम्, एवमग्रेऽपि। अङ्कस्य वामगतित्वाद्वंक्रमेण गणना कार्य्या। अत्र च पञ्चमादिस्थानेषु एकैकगुरुकः पततीति उक्तं, स कीदृश-इति प्रश्ने मात्रानष्टप्रकारं कृत्वा ज्ञातव्य इति संक्षेपः॥ (C).

४७—४८। अथ मात्रापताकानिर्माणप्रकारमाह, उद्दिट्ठा सरि अंका इति। उद्दिट्ठा सरि अंका—अत्र उद्दिष्टपदस्योद्दिष्टांक-परत्वादुद्दिष्टांकसदृशानंकानेकद्वित्रिपंचाष्टत्रयोदशादिरूपानित्यर्थः; थप्पहु—क्रमेणोत्तरोत्तरं स्थापयत तान् इति शेषः। वामावत्ते—वामावर्त्तेन प्रतिलोमविधिना सर्वांतिमांकाव्यवहित[त]पूर्वांकमारभ्येति यावत्। लेइ—गृहीत्वा, पर—परस्मिन्, सर्वांतिमांके, लुप्पहु—लोपयत न्यूनतां नयत सर्वांतिमेऽके तदव्यवहितपूर्वांकमारभ्य पूर्व-पूर्वांकाः क्रमेण लोप्याः, तत्र एक लोपे—एकलोपे, अत्र एकपदस्यैकांकपरत्वादेकांकलोपे इत्यर्थः, एक गुरु आणहु—एकगुरुं आनीत। दुत्तिण्णिलोपे—द्वित्राणामंकानां लोपे, दुत्तिणि—द्वित्रान्

षट्कलपताका

| | | | |
|---|---|---|---|
| १ | २ | ५ | १३ |
| | ३ | ८ | |
| | ४ | १० | |
| | ६ | ११ | |
| | ७ | १२ | |
| | ९ | | |

गुरून् आणड—आनीत। एकैकपूर्वांकलोपे येऽंका अवशिष्यंते ते एकगुरुयुक्तभेदज्ञापकाः, पूर्व्वांकद्वयलोपे येऽंका अवशिष्यंते ते गुरुद्वययुक्तभेदज्ञापकाः, पूर्वांकत्रयलोपे येऽवशिष्यंते ते गुरुत्रय-युक्तभेदज्ञापका इति निर्गलितार्थः। एवं प्रकारेण पिंगल णाग—पिंगलो नागः मत्त पताका—मात्रापताकां गावइ—गायति कथय-तीत्यर्थः। जो पावइ—यः प्राप्नोति गुरूपदेशाज्जानाति, सो परहि बुझावइ—सः परं बोधयति इति योजना। अत्र [?] एकत्वसंख्या-विशिष्टौ द्वित्वसंख्याविशिष्टौ च, पूर्वांकः प्रथमं सर्वांतिमांके लुप्यते तद्व्यवहितपूर्वांकमारभ्यतेऽवशिष्टांकाः क्रमेणाधोऽधः स्थाप्या इति, यदंकद्वयलोपे अन्योऽवशिष्यते पूर्वप्राप्तो वाऽंकः प्राप्यते तदंकद्वय-लोपो न कार्यं इति नियमत्रयं गुरूपदेशादध्यवसेयम्।

अथ षट्कलपताकास्वरू[प]लिखनप्रकारतो वामदक्षिणयोरंगुल-पंचकपरिमाणमूर्द्धाध ऋजुरेखाद्वयमर्द्धांगुलमधिकं वा मध्यदेशे-ऽंतरं विसृज्य कर्त्तव्यं, ततो ऋजुरेखया तत्पार्श्वमेलनं विधेयमेवमेकं दीर्घं कोष्ठं विधाय तत्रैकांगुलपरिमितमंतरं त्यक्त्वोर्द्धरेखामारभ्या-धोरेखापर्यंतं पंच ऋजुरेखाः क्रमेण दत्त्वा कोष्ठषट्कमुत्तरोत्तरं परस्परसंश्लिष्टं विधेयं, तत्रोद्दिष्टांकषट्का एकद्वित्रिपंचाऽष्टत्रयोद-शेति षड्ंकाः क्रमेण स्थाप्याः। ततो द्वितीयांककोष्ठादधोऽर्द्धांगुल-मितानि परस्परसंश्लिष्टानि पंच कोष्ठकानि कार्याणि, ततः पंच-मांककोष्ठादधोऽधस्तादृग्गमेव कोष्ठचतुष्टयं कार्यं, ततः सर्वांतिम-त्रयोदशांकमध्ये तद्व्य[व]हिताष्टांकलोपे उर्वरितं पंचमांकं तत्र चतुर्थकोष्ठे विन्यस्तमेवास्तीति तदन्यत्र लेख्यमिति संप्रदायः। ततः

सर्वांतिमत्रयोदशांकमध्ये क्रमप्राप्तपंचमांकलोपे उर्वरितमष्टमांकं पंचमांकको[को]ष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्तच्च क्रमप्राप्ततृतीयांकलोपे उर्वरितं दशमांकमष्टमांककोष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्तच्च क्रमप्राप्तद्वितीयांकलोपे उर्वरितमेकादशांकं दशमांककोष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्तच्च क्रमप्राप्तैकांकलोपे उर्वरितं द्वादशांकमेकादशांककोष्ठादधस्तनकोष्ठे स्थाप्यं, सेयमेकांकलोपनिःपन्ना पंचकोष्ठात्मिका षट्कलमेरुपङ्क्तितृतीयकोष्ठस्थपंचमांकनिर्द्धारितैकगुरुयुक्तकलस्वरूपपंचलसंख्याकानां षट्कलगणभेदानां पंचमाष्टमदशमैकादशद्वादशेतिप्रातिस्विकरूपज्ञापिका षट्कलपताकापङ्क्तिः । ततो द्व्यंकलोपेऽष्टमपंचमांकयोस्त्रयोदशांकमध्ये लोपः शून्यशेषत्वान्न कार्य इति, सर्वांतिमत्रयोदशांकमध्ये अष्टमतृतीयेत्यंकद्वयलोपे उर्वरितं द्वितीयमंकं तद्द्वितीयकोष्ठेऽस्त्येव ततस्त्रयोदशमध्ये अष्टमद्वितीयेत्यंकद्वयलोपे उर्वरितं तृतीयांकं द्वितीयांककोष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्त्रयोदशमध्ये अष्टमैकेत्यंकद्वयलोपे उर्वरितं चतुर्थमंकं तृतीयांककोष्ठादधस्तनकोष्ठे स्थाप्यं, ततस्त्रयोदशमध्ये पंचमतृतीयेत्यंकद्वयलोपे प्रथमप्राप्तः पंचमांकोऽवशिष्यते इति पंचमतृतीयांकयोर्लोपं त्यक्त्वा पंचमद्वितीययोर्लोपे अवशिष्टः षष्ठांकश्चतुर्थांककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तच्च पंचमैकेत्यंकद्वयलोपे अवशिष्टः सप्तमोऽङ्कः षष्ठांककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तच्च पंचमैकेत्यंकलोपे अवशिष्टः सप्तमोऽङ्कः षष्ठांककोष्ठादधस्तनकोष्ठे स्थाप्यः, ततस्तच्च तृतीयद्वितीयेत्यंकद्वयलोपे अवशिष्टोऽष्टमोऽङ्कः प्रथमप्राप्तोऽवशिष्यते इति तयोस्तच्च लोपं त्यक्त्वा तृतीयैकेत्यंकद्वयलोपे

अत्रशिष्टो नवमोऽंकः सप्तमांककोष्ठादधस्तनकोष्ठे स्थाप्यः, शेषमंकद्वयलोपनिःपन्ना षड्कलमेरुपङ्क्तिद्वितीयकोष्ठस्थषष्ठांकनिर्द्धा[रि]तद्विगुरुयुक्तत्वस्वरूपषट्संख्याकानां षड्कलभेदानां द्वितीयतृतीयच[तु]र्थषष्ठसप्तमनवमेतिप्रातिस्विकरूपज्ञापिका षड्कोष्ठात्मिका षड्कलपताकापङ्क्तिः। एवं तत्र प्रथमतृतीयाष्टेत्यंकत्रयलोपे उर्वरितएकोऽंकः, स च षड्कलमेरुप्रथमकोष्ठस्थैकांकनिर्द्धारितत्रिगुरुयुक्तत्वस्वरूपैकत्वसंख्याकस्य षड्कलभेदस्य त्रिगुरुयुक्तो भेदः प्रथम इति प्रातिस्विकरूपज्ञापकः प्रथमकोष्ठेऽस्त्येवेति सर्व्वमनवद्यम्। अथ षड्कलपताकास्वरूपं लिख्यते। (E). [Vide figure p. 92.—Ed.]

४७—४८। अथ सर्वलघ्वेकगुरुद्विगुर्वादयः कुत्र कुत्र स्थाने पतंतीति तज्ज्ञानार्थं मात्रापताकामाह॥ उद्दिट्ठ॥ उद्दिष्टसदृशानंकान् स्थापय, वामावर्तेन परस्मिन् गृहीत्वा लोपय। एकलोपे एकं गुरुं जानीत, द्वयोस्त्रयाणां लोपे द्वौ त्रीन् जानीत॥ अंत्यांके वामावर्तेन पूर्वांका लोप्याः, शेषांकाः क्रमेण स्थाप्याः, तावंत्येकगुरुस्थानानि।. एवं द्वयोः द्वयोः पूर्वांकयोर्योगं कृत्वा त्रयाणां त्रयाणां पूर्वांकाणां योगं कृत्वा लोपय॥ मेरुगतं यावत्संख्यं कार्यं, द्वित्र्यादिलोपे द्विगुरुत्रिगुर्वादिका भेदा बोध्याः। एवं सर्वशेषांत्यांकः सर्वलघुर्भेदो ज्ञेयः; एवमग्रेऽपि। एकत्र लिखितं प्राप्तः पुनरन्यत्र नो लिखेदित्यपि बोध्यम्।

इदं षड्कलप्रस्तारे योज्यते यथा, १, २, ३, ५, ८, १३, वामावर्तेनांत्यांकैः शोध्याः। यथा, शेषांके त्रयोदशसु मध्ये अष्टादिशोधने कृते शेषांकाः ५, ८, १०, ११, १२, इत्यमेकगुरुस्थानसंख्या॥ एवं

अह वित्तस्स लहुगुरु आणं ।[१]

पुच्छल[२] च्छंद[३] कला कइ[४] पुछल[२] अंक[५] मेटाव[६] ।

अवसिट्ठे[७] गुरु जाणिअहु[८] लहु जाणिव्वहु ताव[९] ॥ ४९ ॥

दोहा ॥

द्वयोर्लोपे द्विगुरुर्यथा । पंचाष्टयोस्त्रयोदशस्य न लोपः शून्यशेषत्वात् । त्र्यष्टलोपे शेषं २, षष्ठलोपे ३, एकाष्टलोपे ४, त्रिपंचलोपे न, तच्छेषस्य पंचरूपस्य पूर्वं गतत्वात् । द्विपंचलोपे ६, एकपंचलोपे ७, एकत्रिलोपे ८, एतावंति द्विगुरुस्थानानि ॥ त्रयाणामेकत्र्यष्टरूपाणां लोपेन १, इदं त्रिगुरुस्थ[ानम् ।] [Vide figure p. 92.—Ed.]

सप्तकले — एकः सर्वलघुः, षडेकगुरवो, दश द्विगुरवस्त्वारस्त्रि-गुरव इति मेरुगतभेदास्ते चैषु स्थानेषु वामावर्तेन सर्वलघ्वेकगुरु-द्विगुरुत्रिगुरुरूपा भेदा बोध्याः । विषमकले सर्वगुरुर्भेदो नास्त्येव ॥ एवमग्रेऽपि सर्वत्र बोध्यम् ॥ अष्टकला पताका । — अत्राष्टकले एकः सर्वलघुः, सप्त एकगुरवः, पंचदश द्विगुरवः, दश त्रिगुरवः, एकः सर्वगुरुरिति मेलितास्त्रयस्त्रिंशत् ॥ नवकला पताका । — अत्रैकः सर्वलघुरष्टावेकगुरव एकविंशतिर्द्विगुरवो विंशतिस्त्रिगुरवः, पंच चतुर्गुरव इति सर्वे पंचपंचाशद्भेदा मेरुस्था बोध्याः ॥ (G)

[The figures for seven, eight, and nine kalás are similar in shape to the figure given in p. 92. The ingenious reader may make them for himself if he likes.—Ed.]

४९ । १ अथ वृत्तस्य लघुगुरुज्ञान (A). २ पूछल (A), पुछल (E & F). ३ छंद (A, E & F). ४ कलां एवं करि (E). ५ अंक (E & F). ६ मिटाव (F). ७ अवसिट्ठ (F). ८ जाणिअव (A). जाणिअ (F). ९ जाणिअ उताव (A, E & F).

४८। इदानीं मात्रावृत्तेर्वा वर्णवृत्तेर्वा कियन्तो गुरवः कियन्तो लघव इति ज्ञानार्थमाह पुच्छलेति। पृष्टच्छन्दः कलाः कृत्वा पृष्टवर्णान् लोपय। अवशिष्टं गुरुं जानीहि लघवो यावन्तो तावन्त इति॥ गुरो[र]वशिष्टा यावन्तस्तावन्तो लघव इत्यर्थः। उदाहरणेनास्यार्थः स्पष्टीक्रियते। पढमं बारह मत्तेति — कियन्तो लघवः कियन्तो गुरव इति प्रश्ने, सर्व्वलघवः कर्त्तव्याः, तेन ५७ सप्तपंचाशत् कला भवन्ति, तत्र पृष्टच्छन्दसो वर्णाः कर्त्तनीया भवन्ति, ३७ सप्तत्रिंशद्वर्णा अत्र सन्ति, सप्तपंचाशदङ्के सप्तत्रिंशत्-कर्त्तने विंशत्यङ्कोऽवशिष्यते, तेन विंशतिर्गुरवोऽत्रेति ज्ञायते। गुरोश्च द्विकलत्वाद्विंशतिगुरुभिश्चत्वारिंशत् ४० कला गताः, ५७ सप्तपञ्चाशन्मध्ये ४० चत्वारिंशल्लोपे १७ सप्तदश अवशिष्टास्तेन सप्तदश लघव इति ज्ञायते। अथवा सर्व्वलघूकृताङ्के योऽङ्कः कर्त्तितः तथैव गुरोरङ्ककर्त्तनेनावशिष्टा लघवो ज्ञेयाः, यथात्र सप्तपञ्चाशदङ्के ३७ सप्तत्रिंशत्कर्त्तनेन विंशतिर्गुरवो ज्ञेयाः, सप्तत्रिंशदङ्के च विंशतिकर्त्तनेनावशिष्टाः सप्तदश लघवो ज्ञेयाः। एवं वर्णवृत्तेऽपि, यथा प्रमाणिकाच्छन्दसि सर्व्वलघूकरणेऽष्टचत्वारिंशत् ४८ कला भवन्ति, तत्र च श्लोके द्वात्रिंशद्वर्णा ३२ भवन्ति, अष्टचत्वारिंशदङ्के ४८ द्वात्रिंशल्लोपे ३२ षोडशलाभात् षोडशात्र गुरव इति ज्ञायते, अवशिष्टाश्च षोडश लघव इति ज्ञायते। (C).

४९। अथैतावत्संख्याककलाविशिष्टैतावत्संख्याकाक्षरचरणे वृत्ते कति गुरवः कति लघव इति कौतुकात्केनचित्पृष्टे तत्प्रकार-माह, पुच्छलेति। पुच्छल छंद कलां — पृष्टच्छंदःकलायाम्, तत्र

कलापदस्य कलासंख्यापरत्वात्पृ[ष्ट]च्छंद:कलासंख्यायामित्यर्थः। यस्य गुरुलघुजिज्ञासा तत्पृष्टं छंदस्तस्य या मात्रासंख्या तन्मध्ये इत्यर्थः। पुच्छल [अंक] छंद — पृष्टं छंदः, अत्रापि छंदःपदस्य छंदोऽक्षरसंख्यापरत्वात्पृष्टच्छंदोऽक्षरसंख्यामित्यर्थः। मेटाव — हीनां कुरु। एवं करि — [एवं] कृत्वा एवं कृते सतीत्यर्थः। अवसिट्ठउ — अवशिष्टा संख्येति शेषः, कलासंख्यामध्योर्वरिता संख्येत्यर्थः, गुरु जानिअहु — गुरोर्ज्ञातव्या, उताव — उर्वरिता गुरुसंख्यातिरिक्ता वृत्ताक्षरसंख्येति यावत्। लघु जाणिअ — लघोर्ज्ञातव्या। यथा अष्टादशकलाविशिष्टैकादशाक्षरचरणे वृत्ते कति गुरवो लघवश्चेति पृष्टे, अष्टादशरूपकलासंख्यामध्ये एकादशरूपाक्षरसंख्यालोपे उर्वरिता सप्तसंख्या, सा गुरुसंख्या ज्ञेया। एकादशाक्षरमध्ये यदि सप्त गुरवस्तदोर्वरिता चतुष्टसंख्या, सा लघोर्ज्ञातव्या, एवं चैतादृशचरणे वृत्ते सप्त गुरवश्चत्वारो लघव इत्युत्तरं देयमिदं च वृत्तमिंद्रवज्राख्यमेवमन्यत्राप्यूह्यम्। (E).

४९। अथ छन्दःसु गुरुलघुमात्रावर्णयत्ताज्ञानोपायमाह॥ पुच्छेति॥ पृष्टस्य छंदसः कलाः कुरु, पृष्टे वर्णान् लोपय। अवशिष्टा गुरवो ज्ञायंते, लघवो ज्ञातव्या उर्वरिताः॥ पृष्टे कलासंख्यायामित्यर्थः, वर्णादीनां तद्गतसंख्योच्यते॥ यथास्यैव छंदसः मात्रासंख्या ४८, वर्णसंख्यया ३५ ऊनिता जाता १३, एतावती गुरुसंख्या॥ इयमेव वर्णसंख्योनिता जाता २२ लघुसंख्या, इयमेव १३ गुरुद्विगुणसंख्यया २६ मिलिता जाता मात्रासंख्या ४८, इयमेव गुरुसंख्योनिता वर्णसंख्या ३५ इति॥ ४९ (G).

[Compare this with Pingala's Sanskrit aphorisms, and the learned commentary of Haláyudha thereon, also with a symbolical exposition of the same in Ghosha's छन्दःसारसंग्रहः p. 34, paras. 2, 3 and 4. —Ed.]

[Between ४९ and ५०, the following slokas are inserted in MS. (F). This is apparently a later addition, for their enumeration even is not subsequently adhered to.—Ed.]

मत्तासंख्ये कोठ कर पंती छक्क पयारि ।
तत्थ दुआदिक अंक धरु पढ़मह्नि पंति बिचारि ॥ ५० ।
आइ अंक परिछ्जि कङ सब्बह्नि पंती मझारि ।
पुब्ब जुअल सरि अंक धरु बीजी पंति बिचारि ॥ ५१ ।
पढ़म पंति ठिअ अंक करि बीजी पंति गुणेह्नि ।
जो जो अंका उव्वरइ ते तीय पंति भरेह्नि ॥ ५२ ।
बि पिट्ठइ भेअ जोअइ अंका लङआ कोट्ठा पूरइ अंका ।
पुआ लङआ हारा तेक्खइ पिंगल जंपे बणा दुअइ ॥ ५३ ।
क पंती पत्थार करिज्जसु अक्खरसंख कोट्ठ धरिज्जसु ।
पहिली पंति बल धरिज्जसु दुसरी पंति दूण करिज्जसु ॥ ५४ ।
अक्खर अंक गुणित करि लेह्नि चौ[च उ]थी पंति सोइ लिहि देइ ।
चौथी अट्ठा पंचम पंति सोइ कट्ठ मिलिङ णिभंत ॥ ५५ ।
पंचमी चौथी तिअह्नि मिलाउ पिंगल जंपइ अंक फलाउ ।
बिस भेअ मत्त कइ बणइ गुरु लङ एम मंपल इ ॥ ५६ ॥
अक्खर मक्कर जाणङ लोइ जे जाणे मण आणंद होइ ।
जो बुज्झइ सोइ पे बुज्झइ मक्कर जास हत्थि बि रुज्झइ ॥ ५७ ।

[The corresponding gloss in commentary (G) runs thus:—Ed.]

अथ प्रस्तारसंख्या ।

मात्रासंख्यान् कोष्ठान् कुरु पंक्तिषट्कं प्रस्तारय, तत्र द्व्यादिकानंकान् धारय प्रथमपंक्तिविचारः । द्व्यादिकोष्ठेषु द्व्याद्यंका लेख्या इति प्रथमपंक्तेर्विवेकः ॥ ५० ॥ आद्यंकपरित्यागं कथयतु सर्वासां पंक्तीनां मध्ये पूर्वयुगलसदृशानंकान् धारय, द्वितीयपंक्तिविचारः । उद्दिष्टवदंका लेख्या इति द्वितीयपंक्तिविचार इत्यर्थः ॥ ५१ ॥ प्रथमपंक्तिस्थितांकैः कृत्वा द्वितीयपंक्तिं गुणय । यो योऽंक उत्पद्यते तेन तृतीयपंक्तिं भरय ॥ ५२ ॥ अथ पंचमपंक्तिपूरणं, विधि । अर्थांकाद्धस्य व्यत्यासेन योजमाह्वौ पृष्ठांकौ भेदांकं च योजय । लघुकैः कोष्ठान् पूरय अंकैः । पृष्ठांकद्वयं भेदांके चैकीकृत्य पंचमपंक्तिकोष्ठाः पूरणीयाः, ते लघुसंख्याका भवंतीत्यर्थः । यथा । तत्र प्रथमे कोष्ठे पूर्वांकयोः पूर्वोर्द्धांकसंख्याप्रभेदांकस्य चाभावादेक एव ॥ द्वौ[द्वि]तीये कोष्ठे पूर्वांक एकस्तदूर्द्धसंख्याभेदांकश्चैकस्तयोर्योगे द्वयं ॥ तृतीये कोष्ठे पूर्वांकयुगलं १ । २ ऊर्द्धप्रभेदांकयोर्योगे पंच ५, तत्तृतीये लेख्याः ॥ चतुर्थकोष्ठे पूर्व्वांकयुगलं २, ५ पूर्वोर्द्धांकः कृतभेदांकस्य तद्योगे दश ॥ एवमग्रेऽपि । अथ षष्ठपंक्तिः पूर्या इति । पूर्व्वौ लघुकौ चारः, लघुद्वयं गुरुर्भवतीत्यर्थः, यथा प्रथमकोष्ठे लघुद्वयाभावाद्गुरुस्थाने शून्यं, द्वितीयकोष्ठे एक १ तृतीये द्वौ २ चतुर्थे ५ इत्यादि षष्ठपंक्तिपूरणं ॥ अथ चतुर्थपंक्तिः । शेखर । तथा पिंगलो जल्पति वर्णान्द्राभ्यां । गुरुलघुयोगे वर्णा भवंतीति चतुर्थपंक्तिपूरणम् । इति मात्रामर्कटी ॥ ५३ ॥

मात्रामर्कटीचक्रं यथा,—

| | | | | | | |
|---|---|---|---|---|---|---|
| वृत्त | १ | २ | ३ | ४ | ५ | ६ |
| प्रभेद | १ | २ | ३ | ५ | ८ | १३ |
| मात्रा | १ | ४ | ९ | २० | ४० | ७८ |
| वर्ण | १ | ३ | ७ | १५ | ३० | ५८ |
| लघु | १ | २ | ५ | १० | २० | ३८ |
| गुरु | ० | १ | २ | ५ | १० | २० |

वर्णमर्कटीचक्रं यथा,—

| | | | | | | |
|---|---|---|---|---|---|---|
| वृत्त | १ | २ | ३ | ४ | ५ | ६ |
| भेद | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्रा | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्ण | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु | १ | ४ | १२ | ३२ | ८० | १९२ |

अथ वर्णमर्कटी । क्व पंतौ । षट्पंक्तिं प्रस्तारं कुरु, अक्षर-संख्यान् कोष्ठान् धारय, प्रथमपंक्तौ वर्णान्धारय, द्वितीयपंक्तौ द्विगुणान् कुरु ॥ ऊर्द्धाधः षट्पंक्तयो लेख्यास्तिर्यग्वर्णसंख्याः कोष्ठाः कार्याः, तत्र प्रथमपंक्तौ वर्णांकाः, द्वितीयपंक्तौ उद्दिष्टवद्द्विगुणा-अंका लेख्याः ॥ ५४ ॥ अक्ष । अक्षरांकैर्गुणितां कृत्वा [जा]ता चतुर्थी पंक्तिस्तया[स्या] लेख्या । चतुर्थ्यर्धा पंचमी पंक्तिः, सैव षष्ठे मिलिता भिन्नयात् ॥ प्रथमपंक्त्यंकैर्द्वितीयपंक्त्यंकान् गुणयित्वा चतुर्थी पंक्ति-र्लेख्या, तदर्धं पंचमी, तथैव षष्ठी पंक्तिर्भवतीत्यर्थः ॥ ५५ ॥ पंच-मीति । पंचमीचतुर्थ्योस्तृतीयामेलने पिंगलो जल्पति अंकान् प्रस्ता-रय । चतुर्थीपंचमीपंक्तियोगेन तृतीया पंक्तिर्भवतीत्यर्थः । वृत्तानि भेदा मात्रा अन्यद्वर्णा गुरवो लघव एवं संपन्नं भवति ॥ ५६ ॥ अक्षरमर्कटीं जानंतु लोकाः य[ज्]ज्ञाने मनस आनंदो भवति । यो बुध्यते स एव बुध्यते, मर्कटीजाले हस्ती अपि बध्यते । दुर्ज्ञेयेति भावः ॥ ५७ ॥ (G).

[Both the figures run to inconvenient lengths in the commentary; the portions here reproduced will enable the reader to extend them as far as he would like. —Ed.]

अह सकल पत्थार संखा ।

छब्बीसा[1] सत्तसआ
तह[2] सत्तारह सहस्साइं[3] ।
बाआलीसं[4] लक्खं[5]
तेरह कोडी[6] समग्गाइं[7] ॥ ५०[8] ॥ गाह्र ।

५० । अत्र चैकाक्षरमारभ्य षड्विंशत्यवधिवर्णवृत्तानां प्रस्तारे कियती संख्येत्याह १३४२१७७२६ षड्विंशतिः सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारिंशल्लक्षास्त्रयोदशकोव्यः समग्राणि, अङ्कस्य वामा गतिरित्यङ्काः स्थाप्याः । (C).

५० । अथैकाक्षरमारभ्य षड्विंशत्यक्षरपर्यंतसमस्तवर्णवृत्तपिंडीभूतसंख्यामाह छब्बीसेति । षड्विंशतिः सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारिंशल्लक्षाणि त्रयोदशकोव्यः, एवं समग्राणि एकाक्षरादिषड्विंशत्यक्षरपर्यंतानीत्यर्थः वर्णवृत्तानि भवंतीति शेषः । मात्रावृत्तानामसंख्यातत्वात्तत्संख्या नोक्ता, वर्णवृत्तानां प्रत्येकसंख्या ग्रंथविस्तरभयादनतिप्रयोजनत्वाच्चास्माभिरत्र नोक्ता । (E).

५० । अथैकादिषड्विंशत्यंतानां वर्णवृत्तानां भेदैक्यसंख्यामाह, छब्बी । षड्विंशतिः सप्तशतानि तथा सप्तदशसहस्राणि द्विचत्वारिंशल्लक्षाणि त्रयोदशकोटयः समग्राणि । एतावंतः सर्वे भेदा इत्यर्थः ।

---

५० । १ छबिसा (C), छबीसा (D). २ तथा (A), तहं (D). ३ सहस्साइं (A & D), सहस्साइ (B & C). ४ बाआरीसं (A). ५ लक्खं (C), लक्खं (D). ६ कोडी (B, C & D). ७ समग्गाइ (C), समग्गाइ (D). ८ ४८ (A).

## अथ गाथाप्रकरणम्। (D).

होइ गाहू मत्त चउअस[1] गाहाइ[2] सत्तावणिअ[3],
तह[4] बिग्गाह[5] पलट्टि किज्जइ[6] उग्गाहउ[7] सट्ठिकल[8],
गाहिणीअ[9] बासट्ठि[10] किज्जइ[11]।
तह बि पलट्टइ[12] सिंहिणी[13] वे अग्गल[14] हो सट्ठि[15]।
सत्तरूअ[16] असोस[17] गुण[18] खंध[19] मत्त चउसट्ठि[20] ॥
५१[21] ॥ रड्डा।

---

द्व्यादिषड्विंशतिपर्यंतं पूर्वपूर्वद्विगुणांकानां योगे एतावंतो भेदा-इति ॥ (G).

५१। अथ गाथादीनां लक्षणं विवक्षुः तत्र मात्राविषमत्वमाह। भवति गाहूश्चतुःपञ्चाशन्मात्रा ५४, गाथा सप्तपञ्चाशन्मा[त्रा] ५७, तथा विगाथा वैपरीत्येन क्रियते,— गाथाद्वितीयार्द्धलक्षणं प्रथमार्द्धे, प्रथमार्द्धलक्षणं द्वितीयार्द्धे,— उद्गाथा षष्टिपरा ६०, गाहिन्यां द्विषष्टिः दी[क्रि]यतां ६२। तथैव परिवर्त्य सिंहिनी इयाग भवति

---

५१ १ चउचस्र (B), चउउच (C), चौवच (E & F). २ तव गाचा (A), तच गाचाए (E). ३ सत्तावचौ (A & D), सत्तावच (E), सत्तावचए (F). ४ वेहि (E). ५ विग्गाचउ (B & C). ६ किज्जउ (B & C), किज्जिचए (E). ७ उग्गाचाउ (D), उग्गाच (F). ८ सट्ठिपर (B & C), सट्ठिकला (F). ९ गाहि-णिच (E), गाचणिच (F). १० बासठि (E), बावट्ठि (F). ११ कव मगच (E). १२ पलटे (D), पलट्टिच (E), पलठइ (F). १३ सींघिचौ (A), सिंघिचौ (C), सिंघिचौ (D), सिंघिचा (E). १४ चग्गा (A & B), चग्ग (C). १५ चोइ (A & E). १६ सत्तरच (D & E), चोइ सारूच (F). १७ चसोच (C), चसोच (D). १८ गच (D), गुणं (E). १९ चन्द (B), चन्ध (C). २० चाउसट्ठि (D), चोसट्ठि (E & F). २१ ४९ (A), ५२ (F).

षष्टिमात्रा, [सप्त]रूपकाणि अन्योऽन्यगुणानि, खन्धके मात्रा चतुः-षष्टिः । परिवर्त्यते । पूर्व्वार्द्धपरार्द्धयोर्व्यत्यासे गाथैव विग्गाथा[था] भवतीत्यर्थः, गाहिन्याः पूर्व्वार्द्धपरार्द्धयोर्व्यत्यासे सिंहिनी, तथापि द्विषष्टिमात्रा भवन्तीति स्पष्टार्थमाह, यथा स्कन्धिकेत्यर्थः । रूपकाणि छन्दांसि अन्योन्यगुणयुक्तानि, तेन सर्व्वाण्येव प्रथमतृतीयपादद्वादश-मात्रत्वादिद्वयगुणानीत्यर्थः ॥ (C)

५१ । अथ पुरस्ताद्वक्ष्यमाणानां गाहप्रभृतिसप्तमात्राच्छंदसां सामान्यतसरणचतुष्टयसमुदितां संख्यां रहात्नेनोद्दिशति, होइ गाह इति । गाहनामके छंदसीत्यर्थः, मत्त चौअण — मात्राश्चतुः-पञ्चाशत्, होइ — भवंति, तह गाहाइ सत्तवण्ण — तथा गाथायां सप्तपञ्चाशत् मात्राः भवंतीति पूर्वानुषंगः, तेहि — तां गाथां, पलट्टि — परावर्त्य, गाथायाः पूर्वार्द्धम् उत्तरार्द्धं कृत्वा उत्तरार्द्धं [च पूर्वार्द्धं] कृत्वेत्यर्थः, विग्गाह — विगाथा, किज्जिअइ — क्रियते । अत्र तेहि इत्येकारो ह्रस्वो बोध्यः एओ सुद्धा अ वण्ण मिलिआ वि लहु इत्युक्तत्वात् [Vide १म श्लोक p.7.—Ed ]. उग्गाहउ — उद्गाथा छट्ठिकला — षष्टिकला षष्टिः कला मात्रा यस्याः सेत्यर्थः, गाहि-णिअ — गाहिन्यां, बासट्ठि — द्विषष्टिः, मत्तइ — मात्राः कर — कुरु, तह वि पलट्टिअ — तद्विपरीतायां तस्याः गाहिन्याः विपरी-तायामित्यर्थः सिंहिणी — सिंहिन्यां, जे खग्गअ — स्कन्धिका, चट्ठि — षष्टिः मात्रा इत्यनुषंगः, होइ — भवंति, अत्र हो इत्योकारः पूर्वोक्तदिशा ह्रस्वो बोध्यः । अत्र क्वचित् तह गाहाइ सत्ता[वण्णा]-वणी इति, तह विग्गाह पलट्टि किज्जइ इति च पाठः, स रहा-

## अथ गाहू । (F)

पुव्वद्धे[1] उत्तद्धे सत्तग्गल[2] मत्त वीसाइँ[3] ।
छट्ठमगण पञ्चमअम्के[4] गाहू मेहव्व जुअलाइँ[5] ॥ ५२[6] ॥

गाहू ।

लक्षणविरुद्धत्वादुपेक्ष्यः । खंध — स्कंधके, मत्त चौ[चउ]सट्ठि — मात्राः चतुःषष्टिर्भवंतीत्यनुषंगः । एतानि मत्तरूअ — सप्तरूपकाणि छंदांसि, अण्णोसगुण — अन्योऽन्यगुणानि, अन्योऽन्यं गुणाः षष्ठजगणान्तलघ्वेक-लघु-पादांतगुर्वादयो येषां तादृशानीत्यर्थः, भवंतीत्यनुषंगः, इति योजना ॥ (E). [Vide Ghosha's Compendium. p. 7.—Ed.]

५१ । अथ मात्राजातीनां कासांचित्कलासंख्यामाह । बोह । भवंति गाहूमात्राः चतुःपंचाशत्, गाथायाः सप्तपंचाशदेव, तथा विग्गाहा परावर्त्य क्रियते, उद्गाथा षष्टिकला, गाहिन्यां द्वाषष्टिः क्रियंते । तथा विपरिवर्त्तते सिंहिनी, भवंति सप्त-रूपाणि छंदांसि अन्योऽन्यगुणाः स्कंधके मात्राः चतुःषष्टिः ॥ अन्योऽन्येति गु[ग]णेति पाठे सप्तगु[ग]णाः अन्योऽन्यसंवलिता-भवंतीत्यर्थः ॥ ५१ ॥ (G)

---

५२ । १ पुव्वेवे (B). पूव्वद्ध (C). पुव्वर्द्ध (E). २ सत्तग्गल (B & C), सत्तगल (D). ३ वीसाइ (B & F), dropt in (C). वीसाइ (D), वीसाइं (E). ४ पचमअम्के (B & C). पचमअ्के (F) ५ जुअलाइ (B), जुअलाइं (E), जुअलाइ (F). ६ ५० (A), ५१ (F).

५२। अथ गाह्लक्षणमाह। पूर्व्वार्द्धे उत्तरार्द्धे सप्तोत्तरविंश-मात्राः २७। षष्ठगणेत्यादिमध्ये गाह्ल मेरोरेव युगलं॥ तेन पूर्व्वार्द्धे एको लघुरेव षष्ठो गणः, एवमुत्रा[त्तरा]र्द्धेऽपि। प्रथमपादे द्वादश मात्रा द्वितीये पञ्चदशेति मिलित्वा सप्तविंशतिमात्राः पूर्व्वार्द्धे, एवमुत्तरार्द्धेऽपि, अ[य]ञ्च विशेषः पादमध्येस्थितषष्ठगणे मेरोरेव युगलं, मेरुपदेन लघुरुच्यते, मिलित्वा लघुयुगलं, तेन पूर्वार्द्धे एकलघुरेव षष्ठो गणः, एवमुत्तरार्द्धेऽपि। एतादृशलक्षणं यच सा गाह्लरित्यर्थः॥ (C).

५२। अथ गाह्लप्रभृतिसप्तछंदःसु सामान्यतो मात्रा उद्दिश्य विशेषतस्तानि लिलक्षयिषुः प्रथमं गाह्लं लक्षयति पुब्बद्धे इति। यत्र पुब्बद्धे उत्तद्धे—पूर्वार्द्धे उत्तरार्द्धे, पअमझे—पादयोर्मध्ये पूर्वार्द्धे प्रथमद्वितीयपादयोर्मध्ये, उत्तरार्द्धे तृतीयचतुर्थयोः पाद-योर्मध्ये इत्यर्थः। सत्तगला—सप्ताधिकाः, मत्त बीसाइं—मात्राः विंशतिः, सप्तविंशतिर्मात्रा इत्यर्थः, पतंतीति शेषः, छट्ठमगण—षष्ठो गणः, मेरुब्ब जुअलाइं—मेरोः युगलं, मेरुर्लघुस्तद्युगल-मित्यर्थः। पूर्वार्द्धे उत्तरार्द्धे च प्रत्येकं गुर्वंताः सप्तगणाः स्थाप्या-स्तत्र षष्ठस्थाने एको लघ्वात्मको गणः स्थाप्यः, अन्यत्र चतुर्मात्रक इत्यर्थः, एवं च षष्णां चतुर्मात्रकगणानां चतुर्विंशतिर्मात्राः, एका च मात्रा षष्ठस्थानस्थलघोर्मात्राद्वयं चांतस्थगुरोरेवमत्र सप्तविंशति-मात्राः पूर्वार्द्धे उत्तरार्द्धे च प्रत्येकं पतंति, तद्गाह्लनामकं छंद इति निर्गलितार्थः। (E).

जहा, चंदो चंदण[१] हारो तावअ[२] रूअं[३] पआसंति[४] ।
चंडेसरवर कित्ती[५] जाव ण अप्पं णिदंसेइ[६] ॥ ५३[७] ॥
गाहू ।

---

५२ । अथ गाहू ॥ पूर्वार्धे उत्तरार्धे सप्ताधिका मात्रा विंशतिः । षष्ठो गणः पदमध्ये गाहू मेरुः एव युगलाख्यः ॥ युगे द्वे ४ [?] द्वये । संपूर्णपद्यमध्ये षष्ठएव मेरुः कार्यो नान्यत्रेति भावः ॥ ५२ ॥ (G).

५३ । चन्द्रश्चन्दनं हारस्तावद्रूपं प्रकाशयन्ति । चण्डीश्वरवर-कीर्त्तिर्यावन्नात्मानं निदर्शयति ॥ तत्कीर्त्त्यैव तेषां निष्प्रभत्वमिति व्यज्यते । (C).

५३ । गाहूमुदाहरति, चंदो इति । चंद्रः चंदनं हारो मुक्ता-दाम, एते तावद् रूपं स्वकांतिं प्रकाशयंति । चंडेश्वरवरकीर्त्तिः जाव — यावत्, अप्पं — आत्मानं स्वं, न [ण] णिअंसेइ — न निदर्शयति प्रकटयति । (E)

५३ । यथा चंद्रश्चंदनं हारस्तावद्रूपं प्रकाशयति । चंडेश्वरस्य वरा कीर्त्तिर्यावदात्मानं न दर्शयति । ततोऽपि कीर्त्तिर्धवलेत्यर्थः । ५३ ॥ (G)

५३ । १ चंदो चंदण (B, A, C). २ तावच (A). ताव (D). ३ रूच (B). ४ पअसंति (D). पआसेइ (F). ५ किति (A). ६ जावण अप्पं णिदंसेइ (B), जाव अप्पं ण दंसेइ (D). जाव ण अप्पं णिअंसेइ (E). जाव अप्पाणं ण दंसेइ (F). ७ ५६ (F). ५९ (A).

## अथ गाहा । (F).

पढमं बारह मत्ता बीए अट्ठारहेहिँ[1] संजुत्ता ।
जह पढमं तह तीअं दहपंचविहूसिआ[2] गाहा ॥ ५४[3] ॥

---

५४ । गाथामाह । प्रथमे द्वादश मात्रा द्वितीयेऽष्टादशभिः संयुक्ता । यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा ॥ पञ्चदशेति — अर्थाच्चतुर्थचरणे पञ्चदशमात्राभूषिता भवतीत्यर्थः ॥ (C).

५४ । अथ गाथां लक्षयति पढममिति । यत्र पढमं — प्रथमाद्यचरणे इत्यर्थः, बारह मत्ता द्वादशमात्राः पतंतीति शेषः, या च बीए — द्वितीये चरणे इत्यर्थः, अट्ठारहेहिं — अष्टादशभिः मात्राभिरिति शेषः, संजुत्ता — संयुक्ता । यस्याश्च जह पढमं तह तीअं — यथा प्रथमस्तथा तृतीयः चरण इति शेषः, द्वादशमात्रायुक्त इत्यर्थः, या च चतुर्थे चरणे इति शेषः, दहपंचविहूसिआ — पंचदशभिर्मात्राभिरिति शेषः विभूषिता, सा गाहा गाथानामकं छंद इत्यर्थः । (E)

५४ । अथ गाथा ॥ पढ ॥ प्रथमो द्वादशमात्रो, द्वितीयोऽष्टादशभिः संयुक्तः । यथा प्रथमस्तथा तृतीयो दशपंचविभूषिता गाथा ॥ चरण इति शेषः ॥ चतुर्थः पंचदशमात्र इत्यर्थः ॥ [पथ्यार्येयं संस्कृते ॥ ५४ ॥ (G)

---

५४ । १ अट्ठारहहि (A), अट्ठारहेह (C), अट्ठारहेहि (D & E), अट्ठारहेहिं (F). २ विहूसिअ (D). ३ ५१ (A), ५७ (E & F).

जहा, जेण विणा ण जिविज्जइ[1]
अणुणिज्जइ सो कआवराहोवि[2]।
पत्ते वि णअरडाहे[3]
भण[4] कस्स ण वल्लहो[5] अग्गी[6] ॥ ५५[7] ॥ गाहा।

---

५५। येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि। प्राप्तेऽपि नगरदाहे भण कस[्य न] वल्लभोऽग्निः॥ नगरदाहकोऽप्यग्निरावश्यकत्वात् प्रिय एवेति॥ (C).

५५। गाथामुदाहरति जेणेति। येन [जेण] विणा ण जिविज्जइ—येन विना न जीव्यते सः कआवराहोवि—कृतापराधोऽपि, अणुणिज्जइ—अनुनीयते। एनमेवार्थमर्थान्तरन्यासेन द्रढयति पत्ते वीति। पत्ते वि प्राप्तेऽपि, णअरडाहे—नगरदाहे, अग्गी—अग्निः, कस्स ण वल्लहो—कस्य न वल्लभ इति भण—वद, अपि तु सर्वस्यापि वल्लभ इत्यर्थः। मानवतीं कांचिन्नायिकां प्रति सखीवाक्यमेतत्। अयं च वक्ष्यमाणभेदेषु चूर्णानामको [Vide sloka 60 P. 114] दशमो भेद इति बोध्यम्॥ (E)

५५। यथा॥ जेणेति॥ येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि। प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः॥ ५५॥ (G).

---

५५। १ जिवज्जइ (B & C). २ कअवराहो (D). ३ णअरडाहे (F). ४ भणि (E). ५ वल्लभो (B & C). ६ अग्गि (A). ७ ५२ (A), ५५ (E & F).

सत्तगणा दीहंता[1] जो णलहू[2] छट्ठ णेह जो विसमे[3] ।
तह गाहे विश्र अद्धे छट्ठं लहुअं विआणेहु ॥ ५६[4] ॥

५६ । इदानीं गाथायां विशेषान्तरमाह, सप्तगणा दीर्घान्ता यो- [जो] नलघुः षष्ठः, नेजाजा[नेह जो] विषमे । तथा गाथायां द्वितीयार्द्धे षष्ठं लघुकं विजानीहि ॥ अत्र चतुष्कलो गणः । पूर्व्वार्द्धे तादृशाः सप्तगणाः कार्य्याः, अन्ते दीर्घो गुरुः कार्य्यः, जगणो [न]लघुर्वा षष्ठोगणः कार्य्यः ॥ इह गाथायां विषमे एकादौ जगणो न देयः । (C).

५६ । अथ गाथायां मात्रानियममुक्त्वा गणनियममाह सत्तेति । गाहे — गाथायां, सत्तगणा दीहंता — सप्तगणाः दीर्घांताः दीर्घा-गुर्वादंताः भवंति । अत्र विशेषपरोऽपि दीर्घशब्दः सामान्यगुरुपरो ज्ञेयः, एवं च पूर्वार्द्धे उत्तरार्द्धे च गुर्व्वंताश्चतुर्मात्रिकाः सप्तगणाः कर्त्तव्या इत्यर्थः, इह इत्यग्रेतनस्यानुकर्षः, इह गाथायां छट्ठ — षष्ठः गणः, जो णलहु — जो जगणः गुरुमध्यः, नलघू लघुयुक्तो नगणो वा भवति, कर्त्तव्येषु गुर्व्वंतसप्तगणेषु षष्ठो जगणश्चतुष्कलः [?] नगणो वा देय इत्यर्थः । णेह जो विसमे — इह गाथायां विषमे [प्रथमे] तृतीये पंचमे सप्तमे च स्थाने इत्यर्थः, जो [जो] जगणो गुरुमध्यो न पततीत्यर्थः, तह — तथा, विश्र अद्धे — द्वितीयार्द्धे छट्ठं लहुअं विआणेहु — षष्ठं गणं लघुकम् एकलघुरूपं विजानीत, एवं च पूर्वं नलघुजगणयोरन्यतरदानं पूर्वा-

५६ । १ दीहन्ता (B & C). २ णलहु (E). ३ विसमे (B & C).
४ ५७ (A), ५९ (E & F).

सव्वाए गाहाए सत्तावसाइ[1] होंति[2] मत्ताइं[3] ।
पुव्वद्धम्मि[4] अ तीसा सत्ताईसा[5] परद्धम्मि[6] ॥ ५७[7] ॥ गाहा ।

र्द्धाभिप्रायेणेति प्रतीयते, तथा च मध्यलघु[गुरु]गणः लघुसंयुक्तो-नगणस्त्रिलघ्वात्मको वा लगणः पूर्वार्द्धे षष्ठे विधेयः, उत्तरार्द्धे च एकलघ्वात्मक एव षष्ठोगणो विधेय इति भावः । (E).

५६ । सत्तेति । सप्तगणा दीर्घांता जगणो नलघू षष्ठो नेह जो विषमे । तथा गाथायां द्वितीयार्द्धे षष्ठं लघुकं विजानीत ॥ प्रथमार्द्धे चिंश्नमात्राः तत्र षष्ठो जगणो नलघू वा कार्यो, विषमे स्थाने द्वितीयचतुर्थादौ [प्रथमतृतीयादौ] जगणो न कार्यः । द्वितीये षष्ठो लघुरेव कार्यः, शेषे पूर्वा[?] ॥ ५६ । (G).

५७ । पढमं बारह मत्तेत्यनेन उक्तमर्थं स्पष्टीकर्तुमाह । सर्व्वस्यां गाथायां सप्तपंचाशद्भवन्ति मात्राः । पूर्व्वार्द्धे च त्रिंशत् सप्तविंशतिः परार्द्धे । सप्तपञ्चाशतो विभागमाह पुव्वद्ध इत्यादिना । केचित्तु श्लोकोऽयं काल्पनिक इति मन्यन्ते, परे तु द्विपद्यपि गाथा भवतीति बोधयितुं पुनरिदमुक्तम् । (C).

५७ । अथ गाथायां वर्त्तमानचतुर्विंशतिविधायां समुदितमात्रानियममाह, सव्वाए इति । पुव्वद्धम्मि अ तीसा — पूर्वार्द्धे त्रिंशत् परार्द्धे उत्तरार्द्धे इत्यर्थः, सत्ताईसा — सप्तविंशतिः । एवं प्रकारेण

५७ । १ सत्तावण्णाइं (A & B), सत्तावण्णाई (D). २ होंति (D). ३ मत्ताए (C), मत्ताई (D). ४ पूर्व्वद्धम्मि (B), पुव्वद्धम्मि (C). ५ सत्ताइसा (A). ६ परद्धाए (A), पच्छद्धाए (B & C). ७ ५५ (A), ५० (E & F).

सत्ताईसा[1] हारा[2] सल्ला जस्सम्मि[3] तिण्णि[4] रेहाई[5] ।
सा गाहाणं गाहा आआ तीसक्खरा[6] लच्छी[7] ॥ ५८[8] ॥

सव्वाए गाहाए—सर्वस्यां गाथायां सत्तावणाइं—सप्तपंचाशत् मत्ताइं—मात्राः होंति—भवंतीत्यर्थः । पूर्वार्धे षष्ठे चतुर्मात्रिकस्य जगणस्य लघुचतुष्कगणस्य वा दानात्त्रिंशन्मात्राः पतंति, उत्तरार्द्धे च षष्ठस्थाने एकलघ्वात्मकस्यैव गणस्य दानात्तदपेक्षया मात्रात्रयं न्यूनं भवतीति सप्तविंशतिमात्राः पततीत्यर्थः । (E).

५७ । सव्वेति । सर्वस्या गाथायाः सप्तपंचाशद्भवंति मात्राः ॥ पूर्वार्द्धे च त्रिंशत् सप्तविंशतिः परार्द्धे च ॥ ५७ ॥ (G)

५८ । अथ गाथाभेदानाह । सप्तविंशतिर्हाराः शल्यानि यस्यां त्रीणि राजन्ते । सा गाथानां गाथा आयाता त्रिंशदक्षरा लक्ष्मीः ॥ हारा गुरवः, शल्यानि लघवः, देवानां देव इतिवद्गाथानां गाथेति प्रकर्षार्थमुच्यते ॥ (C).

५८ । अथानुपदमेव वक्ष्यमाणेषु भेदेषु प्रथमं भेदं लक्ष्मीनामकं लक्षयति सत्ताइसेति । जस्सम्मि—यस्यां, सल्ला—श्ला-[घ्या]घ्याः सत्ताइसा हाराः—सप्तविंशतिर्दीर्घाः गुरव इत्यर्थः, तिण्णि रेहाइं—तिस्रो रेखा लघवश्चेत्यर्थः, पततीति शेषः, सा गाहाणं—गाथानां मध्ये, आआ—आद्या प्रथमेति यावत्, तीसक्खरा—

५८ । १ सत्ताइसा (A & E). २ हाउ (E). ३ जस्सम (C). ४ तिण्णि (F). ५ रेहाइं (A & E), रेहेइं (B), रेहेइ (C), रेहोइं (F). ६ तीसक्खरा (A, B & D). ७ लच्छी (A, D & E). ८ ५९ (A), ५८ (E & F).

तीसक्खरा हि[1] लच्छी[2]
सव्वे[3] वंदंति[4] होइ[5] विक्खाआ[6]।
ह्रासइ[7] एक्कं एक्कं[8]
वंकं[9] ता कुणइ[10] णामाइं[11] ॥ ५६[12] ॥ [गाहा]

---

त्रिंशदक्षरा, लच्छी — लक्ष्मीः, गाहा — गाथा, सा लक्ष्मीनाम्नी गाथेत्यर्थः। अयमर्थः — पूर्वं गाथायाः प्रथमचरणे द्वादशमात्राद्दानमुक्तं, तासां च षड्गुरवो भवंति, द्वितीयचरणे अष्टादशमात्राद्दानमुक्तं, तत्र षष्ठस्थानपतितजगणाद्यंतस्थलघुद्वयवर्जनात्तासामष्टौ गुरवो भवंतीति पूर्वार्द्धे चतुर्दश गुरवः, एवं तृतीयेऽपि चरणे द्वादशमात्राद्दानस्योक्तत्वात्तासां षड्गुरवः [षड्गुरवः], चतुर्थे च पंचदशमात्राद्दानस्योक्तत्वात्तत्र षष्ठस्थानपतितैकलघ्वात्मकगणवर्जनात्तासां सप्त गुरवः, इति उत्तरार्द्धे त्रयोदश गुरवः, एवं पूर्वार्द्धोत्तरार्द्धयोस्संकलने सप्तविंशतिर्गुरवः, पूर्वार्द्धजगणाद्यंतस्थौ द्वौ लघू, उत्तरार्द्धे च षष्ठस्थैकलघुरेवं त्रयो लघवश्चेति त्रिंशदक्षराणि यत्र पतंति सा लक्ष्मीनाम्नी गाथेत्यर्थः। ५८। (E).

५८। अथ गाथाभेदेषु लक्ष्मीनाम्नीं गाथामाह ॥ सत्तेति ॥ सप्तविंशतिर्हाराः शाघ्या यस्यां त्रयः [तिस्रो] रेखाः। सा गाथानां

---

५६। १ तीसक्खरा हिं (D), तीसचरा हिं (E). २ लच्छी (A & D), लच्छी (E). ३ सेव्वे (E). ४ वचन्ति (C), वंदंति (E & F). ५ होअइ (F). ६ विक्खाआ (E). ७ ह्रोस्सइ (A), ह्रोसइ (B & C). ८ Once only in (F). ९ वंकं (A), वक्कंब (C). १० कुणउ (A). ११ णामाइ (B, C & D). १२ ५७ (A), ५८ (F).

लच्छी[१] रिद्धी[२] बुद्धी[३]
लज्जा[४] बिज्जा क्खमा[५] अ देहीआ[६]।
गोरी धाई[७] चुम्मा[८]
छाआ[९] कांती[१०] महामाई[११] ॥ ६०[१२] ॥ [लक्ष्मी]

गाथा आद्या चिंशदक्षरा लक्ष्मीः ॥ हारो गुरुः, रेखा लघुः॥ तत्र पूर्वार्द्धे चतुर्दश गुरवः षष्ठजगणस्थलघुद्वयं च, उत्तरार्द्धे चयोदश गुरवः षष्ठस्थैकलघुश्चेति सप्तविंशतिर्गुरवो लघुत्रयं चेति फलति त्रिंशदक्षरेति ॥ ५८ ॥ (G).

५९। चिंशदक्षरलक्ष्मीः सर्व्वे वदन्ति भवति विख्याता। ह्रसैकमेकं वक्रं तत्कुरुते नामानि ॥ कुरुते अर्थात् पिङ्गलः। (C).

५९। अथ लक्ष्मीनाम्नीं गाथां स्तौति तीसेति। विख्खाआ—विख्याता, ह्रासइ—ह्रसति, वंकं—वक्रं, गुरुरित्यर्थः। एकैकस्य गुरोर्ह्रासेन लघुद्वयवृद्धिर्बोद्धव्या, अन्यथा [सप्त]पंचाशन्मात्राणां नैयत्यं न स्यात्। तासां करोति नामानि, एकैकगुरोर्ह्रासे लघुद्वय-[यु]गस्य च वृद्धौ ये भेदास्तेषां नामानि करोतीत्यर्थः। (E).

५९। तीसेति॥ चिंशदक्षरैर्लक्ष्मीः सर्वे वदंति भवति विख्याता।

६०। १ ता लच्छी (A), ता लच्छी (B & C), लच्छी (D & F), लच्छी (E). २ रिद्धी (B, D, E & F). ३ Omitted in (C). ४ लज्जं (D). ५ खमा (A), खमचा (B & C), क्खमचा (E), क्खमचा (F). ६ देवी (B & C). ७ धाइ (B), दाइ (C), दाई (E). ८ चुचा (C). ९ च्छया (C). १० कन्ती (A & D), कन्तो (C) ११ माचामाईचा (A), महामाचा (B), माचामाचा (C). महामाईचा (E). १२ ५० (A). ६० (F).

किती[1] सिद्धी[2] माणी[3]
रामा[4] गाहिणि[5] विसाअ[6] वासीआ[7] ।
सोहा हरिणी[8] चक्की
सारसि[9] कुररी सिहीअ[10] हंसीआ[11] ॥ ६१[12] ॥
[उग्गाहा]

---

ह्रसत्येक एको गुरुस्तदा कुरुते नामानि ॥ अत्र सप्तविंशतिगुरूणां क्रमादेकैकह्रासे सप्तविंशति [?] नामानि भवंतीत्यर्थः ॥ ५९ ॥ (G).

As there must be at least one long syllable at the end of each half (गुर्वन्तेति), there cannot be more than 26 varieties in all. This has been fully discussed in commentary (E), vide p. 116.—Ed.

६० & ६१ । नामान्येवाह, ता लच्छी । लक्ष्मीर्ऋद्धिर्लज्जा विद्या क्षमा देवी । गौरी रात्रिः पूर्णा छाया कान्तिः महामाया ॥ कीर्त्तिः सिद्धा मनोरमा गाहिनी विश्वा वासिता । शोभा हरिणी चक्री सारसी कुररी सिंही हंसी मिलित्वा षड्विंशतिनामानि । (C).

६० & ६१ । लच्छीति । क्रमानुरोधात्पुनरुपात्तं । खमचा — क्षमा, देही — देवी, राई — रात्रिः, पुण्णा — पूर्णा, महामारी । मनोरमा विश्वावसिता । शोभा । तेन षड्विंशतिनामानि, भेदानामपि तावन्मात्रत्वात् । तथाहि, सप्तविंशतिरेव पथ्यायां गुरवो न त्वधिकाः, तत्रांतिमौ नियतौ, एवं चावशिष्टपंचविंशतिगुरूणां

---

६१ । १ किति (F). २ सिद्धा (B & C). ३ माणी (A), मणी (C), माणिणी (F). ४ रमा (B). ५ गाहिणी (B, C & E), गाहीणि (D). ६ वीसा (A, B, C & E), विस्सा (F). ७ वासिआ (C). ८ Omitted in (C). ९ सारसी (A). १० सिंही (A), मोही (B & C), सिंहीअ (D). ११ हंसि (B). १२ ५८ (A), ६२ (F).

भिद्यमानानां पंचविंशतिर्भेदाः, एकस्य सर्वगुरुक इति षड्विंशतिरेव भेदाः । एतेन पादांत्यस्य मात्रापूरणनिर्वाहाय गुरुत्वापादनेऽपि वस्तुगत्या लघुत्वादष्टाविंशतिर्भेदाः इत्यनुसंधाय मानिनी रमा विश्वा वशितेति अष्टाविंशतिनामानि वदन्तः परास्ताः ।

अत्र प्रथमो भेदो जगणमेवावलंब्य ततो द्वितीयादयश्चतुर्विंशतिर्भेदाः षष्ठे जगणनलघ्वात्मकगणान्यतरदानमवलंब्य बोध्याः, अंतस्तु षष्ठे नलघुमेवावलंब्येति हृदयम् । यत्तु माणी रामेति नामद्वयं विधाय एकगुरुपंचपंचाशल्लघ्वात्मकः सप्तविंशतितमो भेदः कैश्चित्स्वीकृतस्तदनवधानात् । तथाहि यदि षष्ठे जगणो दीयते तदा जगणमध्यस्य एको गुरुर्द्दलद्वयांतस्थं च गुरुद्वयमावश्यकमिति एको गुरुर्न संभवत्येव, यदि च षष्ठे नलघ्वात्मकगणो दीयते तदापि दलद्वयांतस्थगुरुद्वयस्यावश्यकत्वादेको गुरुर्न संभवत्येवेति षड्विंशतिरेव भेदा न सप्तविंशतिरिति सुधीभिर्विभावनीयम् । यदपि माणीरामेति एकं नाम विधाय गाहिनीति नाम लेखकप्रमादात्पतितमिति, तन्मध्याद्यास्त्रिगुर्व[क]पंचाशल्लघ्वात्मकांत्याः पंचविंशतिरेव भेदा नाम न च तु षड्विंशतिरिति,— तदप्यनवधाननिबंधनं, यतः षष्ठे नलघुरूपगणदानेनांत्ये चावश्यकगुरुद्वयदानेन निराबाधं संभवतो द्विगुरु चिपंचाशल्लघ्वात्मकस्य षड्विंशतितमस्य भेदस्य त्यागो नौचित्यमावहतीत्यलमतिविस्तरेणेत्यस्मत्तातचरणोपदिष्टः पंथाः सुधीभिर्विभावनीयः । (E).

६० & ६१ । अक्कीति ॥ लक्ष्मीः १, ऋद्धिः २, बुद्धिः ३, लज्जा ४, विद्या ५, क्षमा ६, देवी ७, गौरी ८, धात्री ९, चूर्णा १०, छाया ११,

पढमं चौ[1] हंसपश्रं
बीए सिंहस्स[2] विक्कमं जाश्रा[3]।
तीए गश्रवर[4] लुलिश्रं
श्रहिवर[5] लुलिश्रं[6] चउत्थए[7] गाहा॥ ६२[8]।

उग्गाहा।

---

कांतिः १२, महामाया १३, कीर्त्तिः १४, सिद्धिः १५, मानिनी १६, रामा १७, गाहिनी १८, विश्वा १९, वासिता २०, शोभा २१, हरिणी २२, चक्री २३, सारसी २४, कुररी २५, सिंही २६, हंसी २७ एतानि क्रमाद्गामानीत्यर्थः॥ ६१॥ (G).

६२। पाठे क्रमं दर्शयति। प्रथममेव हंसप्य[प]दं द्वितीये सिंहस्य विक्रमं जाता। तृतीये गजवरललितम्, अहिललितं चतुर्थके गाथा॥ [चौ]शब्द एवार्थे, गाथायाः प्रथमपादं प्राप्य हंसगमनवल्लितं पठत इत्यर्थः। एवमग्रेऽपि। (C).

६२। अथ गाथापठनप्रकारमाह पढममिति। अत्र चौश[ब्द]-स्त्वर्थः, तथाच पढमं चौ—प्रथमं तु, गाहा—गाथा, हंसवाश्रं [हंसपश्रं]—हंसपदं, जाश्रा—यथा मंथरमित्यर्थः, तथा मंथरइति शेषः सर्वत्र योज्यः, बीए—द्वितीये चरणे, सिंहस्स विक्कमं—सिंहस्य विक्रमो यथा, तीए—तृतीये चरणे, गश्रवरलुलिश्रं—

---

६२। १ चौ (F). २ सीहस्स (B & C), सिंह (F). ३ जातु (E). ४ गअवर (F). ५ अहिवलुलिअं (A, B, C, E & F). ६ ललिअं (C). ७ चउत्थं (A), चउत्थे (B), चउत्था (C), चतुत्था (F). ८ ६९ (A), ६१ (E & F).

एक्के जे कुलमंती[१]
बे णाअक्के[२] हि[३] होइ संगहिणी[४] ।
णाअक[५]हीणा रंडा
वेसा बहुणाअका होइ[६] ॥ ६३[७] ॥ गाहा ।

---

गजवरलुलितं गजेंद्रगमनमित्यर्थः यथा, चउत्थए—चतुर्थे चरणे, अहिलुलिअं—अहिलुलितं सर्पगतिविशेष इति यावत् यथा। (E).

६२। अथ पठनरीतिमाह ॥ पढेति ॥ प्रथमेऽंघ्रौ हंसपदं द्वितीये विं[हय] विक्रमं याता। तृतीये गजवरलुलितं, अहिलुलितं चतुर्थे गाथा ॥ हंसादिगमनवत् क्रमाच्चरणाः पठनीया-इत्यर्थः ॥ ६२ ॥ (G).

६३। गाथायां जगणात्प्रसं[शं]सामाह, एकस्मिन् जे कुलवती, द्वाभ्यां नायकाभ्यां भवति संग्रहीता। नायकहीना रण्डा, वेश्या ये [या] बहुनायका भवति ॥ नायको जगणः, संग्रहीता पुनर्भूः । इह कुलवतीवत् एकजगणवती गाथा प्रशंस्या इत्यर्थः । (C).

६३। अथ समस्थानेऽपि जगणदाने गाथायां गुणदोषावाह—एक्के जे इति। एक्के जे कुलवंती—एकस्मिन् जगणे सति कुलवती होइ—भवति गाथेति शेषः। यथोक्तषष्ठस्थानस्थजगणमात्रेण समीचीना गाथा भवतीति, तदतिरिक्तो जगणः समस्थानेऽपि न कर्त्तव्य इति भावः। बे णाअकेण—द्विनायकाभ्यां द्वाभ्यां जग-

---

६३। १ कुलवंती (E). २ णाए (A). ३ च (A), चौ (B), हिं (C), पिं (E). ४ संगहणी (A & E). ५ णाअक (E). ६ होई (F). ७ ६० (A), ६१ (E & F).

तेरह लहुआ विप्पी[1] एआईसेहि[2] खत्तिणी भणिआ।
सत्ताईसा[3] वेस्सी सेसा सा सुद्दिणी होइ[4] ॥ ६४[5] ॥ गाहा।

णाभ्यामिति यावत्, संगहणी—संग्रहिणी भवतीति पूर्वेणा-न्वयः, यथा द्वाभ्यां नायकाभ्यां परस्परं गृहीता कामिनी न सतां संमता तथेयमपीति, जगणद्वयमत्र न देयमी[मि]ति भावः। णाअकहीना[णा] रंडा—नायकेन जगणेन हीना रहिता, षष्ठे स्थाने नलघुयुक्तेत्यर्थः रंडेव रंडेत्यर्थः, तथाच यथा नायकेन हीना कामिनी न शोभते तथेयमपीति, बहुधा षष्ठो जगण एव देय इति भावः। बहुणाअका [का]—बहुनायका बहवो नायका-जगणा यस्याः सा तादृशीत्यर्थः, वेश्या होइ—भवति, तथाच यथा वेश्या सतामनादरणीया तथेयमपि[पी]ती[ति] बहवो जगणा न देया इति भावः। (E).

६३। विषमस्थाने जगणदोषमाह ॥ एक्के ॥ एकेन जगणेन कुलवती द्वाभ्यां नायकाभ्यां भवति संग्रहणी। नायकहीना रंडा वेश्या सा बहुनायका भवति ॥ जेन षष्ठस्थानस्थेनैवेत्यर्थः ॥ संग्रहणी व्यभिचारिणी ॥ तासां यथा सदोषत्वं तथेत्यर्थः ॥ ६३ ॥ (G).

६४। गाथाया जातिमाह। त्रयोदशलघुका विप्रा, एकविंशत्या [क्षत्रिया भणिता। सप्तविंशत्या] वेश्या शेषैः [सा] शूद्रा भवति ॥ एकविंशत्या सप्तविंशत्या इत्यत्र लघुभिरिति पूरणीयम्। (C).

६४। १ विप्पा (F). २ एआईसेहिं (C), एआरसेहिं (D & E), बीसेहि (F). ३ सत्ताईसे (A & E). ४ होई (F). ५ ६१ (A), ६४ (E & F).

जा पढम तीअ पंचम
सत्तम ठाणे[1] ण[2] होइ गुरुमज्झा ।
गुव्विणिए[3] गुणरहिआ
गाहा दोसं पआसेइ ॥ ६५[4] ॥ गाहा ।

६४ । अथ[च] वर्णभेदेन गा[गा]थाया जातिभेदमाह तेर-हेति । तेरह लहुआ — त्रयोदशलघुकाक्षराख्या गाथेत्यर्थः सर्वत्र योज्यं, विप्पी — विप्रा भवतीति शेषः, एआइसेहिं — एकचत्वा-रिंशद्भिरेकविंशद्भिर्वेत्यर्थः लघुभिरिति शेषः खत्तिणी — क्षत्रिया भणिता । सत्ताईसे — सप्तविंशतिभिर्लघुभिर्वेसी — वैश्या भणितेति पूर्वेणान्वयः, सेसा — शेषा, अनुक्तलघुसंख्याका सुद्दिणी होइ — शूद्रा भवतीत्यर्थः । (E).

६४ । प्रकारांतरेण भेदमाह ॥ तेरह ॥ त्रयोदशभिर्लघुभि-र्विप्रा एकविंशैः क्षत्रिया भणिता । सप्तविंशैर्वैश्या शेषैः सा शूद्रिणी भवति ॥ अथेदमवधेयम् ॥ श्रेष्ठायैया हीनवर्णं वर्णयेत्तस्तु मूढधीः । उभयोर्जायते नाशस्तृतीयः सुखमेधते ॥ ६४ ॥ (G).

६५ । विषमस्थजगणाया निन्दामाह । या गाथा प्रथमादि-स्थाने गुरुमध्ययुक्ता भवति, सा गुर्विणीत्युच्यते । अत गुणरहितत्वं सदोषत्वं प्रभुमित्रादियोगवदिति । (C).

६५ । १ ठाणे (A). २ Omitted in (C & F). ३ गुव्विणिआ (A), गुव्विणिअ (F). ४ ६२ (A), ६५ (E & F).

अथ बिग्गाहा। (D & F).

बिग्गाहा पढम दले
सत्ताईसाइँ[1] मत्ताइँ[2]।
पच्छिम[3] दले ण[4] तीसा
इअ[5] जंपिअ[6] पिंगलेण णाएण॥ ६६[7]॥

६५। अथ विषमस्थानस्थजगणदोषमाह, जा इति। जा पढम तीअ पंचम सत्तम ठाणे — या प्रथमे तृतीये पंचमे सप्तमे च स्थाने, ण — ननु निश्चयेनेति यावत्, गुरुमज्झा — गुरुमध्यो-जगणसंयुक्तेति यावत्, होइ — भवति, सा गाहा — गाथा गुण-रहिता, गुब्बिणिए — गुर्विणीव दोषं प्रकाशयति। तथाच विषमे गाथायां जगणो न देय इति भावः। (E).

६५। जा पेति॥ या प्रथम-तृतीय-पंचम-सप्तम-स्थाने[षु] भवति गुरुमध्या। गुर्विणीव गुणरहिता गाथा[या] दोषं प्रकाशयति॥ गुरुमध्यो जगणः॥ ६५॥ (G)

६६। विगाथा-प्रथमदले सप्तविंशतिमात्राः। पश्चिमदले त्रिंश-दिति जल्पितं पिंगलनागेन॥ प्रथमपादे मात्रा द्वादश द्वितीये पञ्चदश इति सप्तविंशतिस्तृतीये द्वादश चतुर्थे चाष्टादश इति

६६। १ सत्ताईसाइं (A & E), सत्ताइसाइ (C), सत्ताइसाइं (D). २ मत्ताइं (A & E), मत्ताइ (C), मत्ताइं (D). ३ पच्छिम (A & D), पच्छिम (C). ४ Omitted in (F). ५ इअ (E), ईस्म (F). ६ जंपिअं (A), जप्पिअ (B), जम्पिअ (C), जंपिअ (D). ७ ६२ (A), ६६ (E & F).

जहा, परिहर माणिणि माणं
पेक्खहि[१] कुसुमाइँ[२] णीवस्स[३] ।
तुम्ह[४] कए[५] खर[६]हिअओ[७]
गेह्णइ[८] गुडिआ[९] धणुंहि[१०] किल[११] कामो ॥ ६७[१२] ॥
विग्गाहा ।

चिंग्नत् । अत्र प्रथमार्द्धे एकलघुकः षष्ठो गणः, द्वितीयार्द्धे षष्ठो-जगणो नलघुर्वेति सप्त गणा दीर्घान्ता इति न व्यभिचरति, तेन पूर्वापरार्द्धव्यत्यासेन विगाथा भवतीति फलितार्थः । (C).

६६ । अथ विगाथां लक्षयति विग्गाहेति । विग्गाहा पढम दले — विगाथा-प्रथमदले पूर्वार्द्धे इति यावत्, सत्ताईसाइ मत्ताइं — सप्तविंशतिर्मात्राः भवंतीति शेषः, पच्छिमदले — पश्चिम-दले उत्तरार्द्धे इत्यर्थः, ण — ननु निश्चयेनेत्यर्थः, ति[ती]सा — त्रिंशन्मात्रा भवंतीति पूर्वेणान्वयः, इम — एवं पिंगलेन नागेन जंपिअ — जल्पितम् ॥ अयं भावः । पूर्वं विपरीतगाथा विगाथा भवतीत्युक्तं, तथाच गाथा[या] उत्तरार्द्धम् एव पूर्वार्द्धम् अत्र देयमित्युक्तं भवति, अतएव पूर्वार्द्धे सप्तविंशतिर्मात्रा उत्तरार्द्धे

६७। १ पेक्खह (B & C), पेक्खहिं (F). २ कुसुमाइ (B), कुसुमाई (D) कुसुमाइं (E & F). ३ णीपस्स (B), णिंवस्स (F) ४ तुज्झ (A & D), तुम (B), तुम (C), तुमं (E). ५ कए (C). ६ खर (A), खर (D). ७ हिअं (A & E), हिअ (D). ८ गेण्हइ (B), गेळइ (C), गेण्हइ (D). ९ गुडिआ (B), गुडिआ (C), गुडिआ (F). १० धणुंहि (A), धणुहिं (B), धणइं (C) धणुं (D), धणुहि (E). ११ कर (A), किर (D). १२ ६७ (A), ६० (E & F)

विंशन्मात्रा उक्ताः, एवं चात्रापि पूर्वार्द्धे षष्ठो गण एकलघ्वात्मको देय उत्तरार्द्धे च षष्ठो गणो जगणो नलघ्वात्मको वा देयः, विषमे च जगणो न देय एवेति सुधीभिर्बोध्यम्। (E).

६६। अथ विगाहामाह॥ विग्गेति॥ विग्गा[गा]थायाः प्रथमदले सप्तविंशतिर्मात्राः। पश्चिमदले विंशत् एवं जल्पितं पिंगलेन नागेन॥ ६६॥ (G).

६७। उदाहरति। परिहर मानिनि मानं प्रेक्ष[स्व] कुसुमानि नीपस्य। तव कृते खरहृदयो गृह्णाति गुटिकां धनुषि कामः॥ खरहृदयस्तीक्ष्णहृदयः कदम्बकुसुमव्याजेन गुटिकाः कामो धनुषि गृह्णाति॥ (C).

६७। विगाथामुदाहरति परिहरेति। णीवस्स—नीपस्य कदम्बस्य कुसुमानि पेक्खहि—प्रेक्षस्व। किं तावभे[ते]त्यत आह तुम्ह कए इति। खरहिअओ—कठिनहृदयो निर्दय इति यावत् कामो—कामः, धणुहि—धनुषि, गुडिआ—गुटिकां, यद्वा गुडिआधनूहि इत्येकं पदं, तस्य वटिकाधनुः गुटिकायुक्तं[क्तं] धनुरित्यर्थः। गुलेलेस इति लोके; गेण्ह[ण्ह]इ—गृह्णा[ह्णा]ति, अतो मानं परिहरेत्यर्थः॥ (E).

६७। यथा, परिहर मानिनि मानं प्रेक्षस्व कुसुमानि नीपस्य। युष्मत्कृते खरहृदयो गृह्णाति गुटिका धनुषि किल कामः॥ कदंबपुष्पगुटिकाः कामो धनुषि योजयतीत्यर्थः॥ किलेति निश्चये॥ ६७॥ (G).

अथोद्गाथा। (D), अथोग्गाहा। (F).

पुव्वद्धे[1] उत्तद्धे[2] मत्ता[3] तीसंति[4] सुहअ[5] संभणिआ।
सो[6] उग्गाहो[7] वुत्तो[8] पिंगल[9] कइ दिट्ठ सट्ठि मत्तंगो[10] ॥
६८[11] ॥

---

६८। उद्गाथामाह। पूर्वार्द्धे उत्तरार्द्धे मात्रास्त्रिंशदिति सुभग संभणिताः। स उद्गाथा उक्तः पिङ्गलकविदृष्टः षष्टिमात्राङ्गः॥ इयमेव गीतिरन्यैरुच्यते। [Vide Chhandah-sára-sangraha, p. 126.]
हे सुभग, त्रिंशदित्युक्ता मात्रा इत्यर्थः, षष्टिमात्रा अङ्गं यस्य। (C).

६८। उद्गाथां कथयति पुव्वद्धे इति। यत्र पु[व्व]द्धे उत्तद्धे— पूर्वार्द्धे उत्तरार्द्धे मत्ता तिसन्ति—मात्राः त्रिंशत् संभणिआ— संभणिताः, हे तु[सु]भग प्रिय। सो—तत् पिंगल कइ दि-ट्ठ[ट्ठ]—पिंगलकविना दृष्टं, सट्ठि मत्तंगो—षष्टिमात्रांगं षष्टि-मात्रात्मकशरीरमित्यर्थः, उग्गाहो वुत्तो—गुग्दा[उद्गा]थावृत्तम्। गाथापूर्वार्द्धं द्वयोरप्यर्थेऽपि देयमिति भावः। (E).

६८। अथोद्गाथामाह॥ पुव्वद्धेति॥ पूर्वार्द्धे उत्तरार्द्धे मात्राः त्रिंशत् सुभग संभणिताः। तदुद्गाथावृत्तं पिंगलकविदृष्टं षष्टि-मात्रकम्॥ इयं गीतिः संज्ञाते॥ ६८॥ (G).

---

६८। १ पूर्वाद्धे (C), पुव्वद्धे (E). २ उत्तराद्धे (C). ३ मा (D). ४ तिसन्ति (E). ५ सुभग (B & C). ६ सो (E). ७ उग्गाहा (C). ८ उत्तो (C). ९ पिंग (E). १० मत्तांगो (E) ११ ६५ (A), ६८ (E & F).

जहा, सोउण[1] जस्स[2] णामं
अंसू णअणाइँ[3] सुमुहि रुंधंती[4]।
भण वीर चेइवइणो[5]
पेक्खामि[6] मुहं[7] कहं[8] जहिच्छं[9] से[10] ॥ ६८[11] ॥
उग्गाहा।

---

६८। उदाहरति। श्रुत्वा यस्य नाम अश्रूणि नयने सुमुखि रुन्धन्ति। भण वीर-चेदिपतेः पश्यामि वदनं कथं यथेष्टं तस्य ॥ (C).

६८। उद्गाथामुदाहरति सोउणेति। हे सुमुहि—सुमुखि, जस्स णामं—यस्य नाम सोउण—श्रुत्वा अंसू—अश्रूणि कर्तृभूतानि णअणाइं—नयने कर्मणी रुंधेइ—रुंधंति, अतस्तस्य चेइवइणो—चेदिपतेः मुहं—मुखं जहिच्छं—यथेच्छं कहं—कथं, पेक्खामि—पश्यामि इति त्वं भण—कथय। (E).

६८। यथा ॥ सोउ। श्रुत्वा यस्य हि नामाश्रूणि नयने सुमुखि रुंधंति। भण वीर-चेदिपतेः प्रेक्षामि मुखं कुत्र यथेच्छम् ॥ अश्रूणीति कर्तृ। नयने इति कर्म। शिशुपाले मृते तज्जायाविलापः ॥ ६८ ॥ (G).

---

६८। १ सोऊण (B, D & F). २ जस्स वि (F). ३ णअणाइ (C), णअ-णाइं (A, D, E & F). ४ रुंधन्ति (A), रुज्झन्ति (C), रुअन्ति (D), रुंधेइ (E). ५ इयवइणो (D), चइवइरिं (F). ६ पेच्छिमो (A), पेक्खेमि (B), पेच्छमि (C), पेक्खामि (D). ७ वअणं (C), मुह (D). ८ कहिं (F). ९ जहिच्छं (B), जहिच्छं (E), जहिच्छं (F). १० वि (F). ११ ६९ (A), ६८ (E & F).

अथ गाहिणी सिंहिणी ।

पुव्वद्ध[1] तीस मत्ता
पिंगल[2] पभणेइ[3] मुद्धिणि[4] सुणेहि ।
उत्तद्धे बत्तीसा[5]
गाहिणि[6] विवरीअ[7] सिंहिणी[8] भणु[9] सच्चं[10] ॥ ७०[11] ॥

७० । अथ गाहिनीसिंहिन्यौ आह । पूर्व्वार्द्धे त्रिंशन्मात्राः पिंगलः प्रभणति मुग्धे शृणु । उत्तरार्द्धे [द्वा]त्रिंशद्गाहिनी विपरीतां सिंहिनीं भण सत्यं ॥ विपरीता — पूर्व्वार्द्धे द्वात्रिंशद् उत्तरार्द्धे त्रिंशन्मात्रा-यत्र सा सिंहिनी । यत्र द्वात्रिंशन्मात्रास्तत्राष्टौ गणाः कार्य्याः । (C).

७० । अथ गाहिनीं सिंहिनीं लक्षयति पुव्व इति । मुद्धिणि — हे मुग्धे यत्र पुव्वद्धे तीस मत्ता — पूर्वार्द्धे त्रिंशन्मात्रा भवंतीति शेषः, उत्तद्धे बत्तीसा — उत्तरार्द्धे द्वात्रिंशन्मात्रा भवंतीति पूर्वेणा-[न्व]यः, सा गाहिणि — गाहिणी[नी]ति पिंगल पभणेइ — पिंगलः प्रभणति त्वं सुणेहि — जानीहि, अत्र तामिति शेषः । तथाच तां गाहिनीं विवरीअ — परावर्त्य विपरीतां कृत्वेति यावत् सिंहिणी — सिंहिनीं सत्यं निस्संशयं भण — कथय ॥ अयं भावः, पूर्वं सामान्यतो गाहिन्यां द्विषष्टिमात्रा उक्तास्तत्र पूर्वार्द्धे कियत्य उत्तरार्द्धे कियत्य-इति शिष्यजिज्ञासायां पूर्वार्द्धे त्रिंशन्मात्रा उत्तरार्द्धे द्वात्रिंशन्मात्रा-

७० । १ पुव्वद्धे (B), पूर्व्वद्ध (C). २ पिंगलो (F) ३ पणेहि (B), पभणेहि (C), भणइ (F). ४ मुद्धिणि (B). ५ बत्तिसा (C). ६ गाहिणी (C). ७ विपरीअ (A). ८ सींहिणी (A), सीहिणी (B), सिंहिणी (C), सिंघिणी (D). ९ भण (E). १० सच्चं (F). ११ ६७ (A). ७० (E & F).

गाहिणी जहा,

मुंचहि सुंदरि पाअं[१]
अप्पहि[२] हसिऊण[३] सुमुहि खग्गं मे[४] ।
कप्पिअ[५] मेच्छ[६] सरीरं[७]
पेच्छइ[८] बअणाइं[९] तुमह[१०] धुअ हम्मीरो[११] ॥ ७१[१२] ॥
गाहिणी ।

---

इत्युक्तमेवं च पूर्वार्द्धं गाथाया इवाद्या अपि कर्त्तव्या उत्तरार्द्धं द्वात्रिंशन्मात्राया उक्तत्वात्तत्र षष्ठं जगणं कृत्वा चतुर्मात्रिका अष्टौ गणा वक्ष्यमाणस्कंधकवत्कर्त्तव्या इति गाहिनीव्यवस्था । सिंहिन्यां च षष्ठं जगणं दत्त्वाष्टौ चतुर्मात्रिका गणाः पूर्वार्द्धं देया उत्तरार्द्धं च गाथाप्रथमदलवद्विधेयमिति निर्णय इति सुधीभिर्ध्येयम् ॥ (E).

७० । पुब्बेति । पूर्वार्धे त्रिंशन्मात्राः पिंगलो भणति हे मुग्धे शृणु । उत्तरार्धे द्वात्रिंशद् गाहिनी, विपरीतां सिंहिनीं भणंति सर्वे ॥ विपरीतां—पूर्वार्धे द्वात्रिंशदुत्तरार्द्धे त्रिंशदितिस्वरूपामित्यर्थः ॥ ७० ॥ (G).

७१ । उदाहरति, मुञ्च सुन्दरी[रि] पादम्, अर्पय हसित्वा सुमुखी[खि] खड्गमम । कर्त्तितम्लेच्छशरीरो द्रक्ष्यति वदनानि

---

७१ । १ पाअं (B). २ अप्पहिं (D). ३ हँसिऊण (D), हसिऊणे (E), हसिऊण (F). ४ मे (C). ५ कप्पिअ (C) ६ मेछ (A, D & F). ७ सरीरो (C). ८ पेक्खिहि (A), पेक्खइ (E) ९ बअणाइं (A & F). १० तुम्ह (A & D), तुम्ह (B & F), तुम्हह (E) ११ हम्मीरो (B & C), हंमीरो (E). १२ ६८ (A), ७१ (E & F).

सिंहिणी जहा,

वरिसइ[1] कणअह[2] विट्टिं[3]
तप्पइ भुअणे[4] दिआणिसं[5] जग्गंतो।
णीसंक साहसंको
णिंदइ[6] इंदं च[7] सूरबिंबं च[7] ॥ ७२[8] ॥ सिंहिणी।

तव ध्रुवं हम्मीरः॥ युद्धोद्यतो हम्मीरः पदपतितां [पत्नीं] बोधयति। वदनानीत्यादराद्धक्तवचनम्। (C).

७१। तत्र गाहिनीमुदाहरति मुंचहीति। हे सुंदरि पाअं—पादं मुंचहि—मुंच हे सुमुखि हसिऊण—हसित्वा मे—मह्यं मम वा खग्गं—खड्गं अप्पहि—अर्पय, मेच्छसरीरं—म्लेच्छशरीरं, कप्पिअ—कर्त्तयित्वा हम्मीरो—हम्मीरः तुह—तव वअणाइ—वदनं पेक्खइ—प्रेक्षते। युद्धार्थं संनद्धस्य हम्मीरस्य खड्गानयनार्थमागतवतः प्रतिबंधं कुर्वाणां कांतां प्रत्येतदाक्तम्, एवं च म्लेच्छान्निर्जित्य मया अचतेनैव झटित्यागत्य भवत्या दर्शनं विधेयम्, म्लेच्छतो वंदीभीतिर्मम वा संग्रामे मरणशंका न विधेयेति भावः। (E).

७१। तत्र गाहिनी यथा॥ मुंच॥ मुंच सुंदरि पादौ अर्पय हसित्वा सुमुखि खड्गं मे। हत्वा [कर्त्तित्वा] म्लेच्छशरीरं पश्यति वदनानि युष्माकं ध्रुवं हम्मीरः। इति पत्नीं प्रति हम्मीरोक्तिः॥ ७१॥ (G).

७२। १ वरिसषि (B & C). २ कणअ (B). ३ दृट्ठि (B), दृट्ठी (F). ४ भुअणो (E), भुअणेषि (F). ५ दिवाणिसं (B, C & F). ६ णिंदेइ (F). ७ अ (D). ८ ६९ (A), ७१ (E & F).

अथ स्कंधकं । (D & F).

चउ[1]मत्ता अट्ठगणा
पुव्वद्धे[2] उत्तरद्ध[3] होइ[4] समरुआ[5] ।
सा[6] खंधआ विआणहु[7]
पिंगल पभणेइ[8] मुद्धि[9] बहुसंभेआ[10] ॥ ७३[11] ॥

७२ । सिंहिनीमाह ॥ वर्षति कनकवृष्टिं, तपति भुवनं दिवा-निशं जाग्रत् । निःशंक-साहसाङ्को निन्दति इन्द्रं सूरबिम्बञ्च ॥ इन्द्रस्य कनकवृष्ट्यभावात् सूर्यस्य च दिवानिशमनवस्थानादेतेना-स्याधिक्यम् ॥ (C).

७२ । अथ सिंहिनीमुदाहरति वरिसईति । णिसंक [णीसंक] — निश्शंकः जग्गंतो — जाग्रत् महाजागरूक इत्यर्थः, साहसंको — साहसांको विक्रमादित्यः, कण[अ]ह विट्ठिं — कनकस्य वृष्टिं वरि-सइ — वर्षति, अथच दिआणिसं — अहोरात्रं, भुवने जगति तवइ — तपति, अतः इंदं — इंद्रं च सूरबिंबं — सूर्यबिंबं च, णिंदइ — निंदति । इंद्रो जलं वर्षति महातापसेभ्यः साशंकश्च, सूर्यश्च दिवैव तपत्यजागरूकश्च, अयं तु कनकं वर्षति निश्शंकश्च, सर्वदा च तपति जागरूकश्चेति तौ निंदतीति भावः । (E).

७३ । १ चतु (B), चौ (E). २ पूव्वद्दे (B & C). ३ उत्तद्द (A & E), उत्तरद्दे (D). ४ विहोइ (A), हो (B & D), dropt in (C), वि होवि (E), वि च (F). ५ समरूवां (C & E), समरूवा (F). ६ सो (D & F). ७ विचाणह (A), विचाणेह (B), विचाणंऊ (D). ८ भणेइ (C & F), भणइं (D). ९ मुद्धिवि (F). १० संभेदाः (F). ११ ७० (A), ७१ (E & F).

७२। सिंहिनी यथा॥ करोति॥ वर्षति कनकस्य वृष्टिं तपति भुवनानि दिवानिशं जाग्रत्। निःशंकः साहसांको निंदतीन्द्रं च सूर्यबिंबं च॥ साहसांको विक्रमादित्यः॥ व्यतिरेकोऽलंकारः॥ ७२॥ (G).

७३। अथ खंधकमाह॥ चतुर्मात्रा अष्टौ गणाः पूर्वार्द्धे उत्तरार्द्धे भवन्ति समरूपाः। तां खन्धकां विजानीहि पिङ्गलः प्रभणति मुग्धे बहुसंभेदाम्॥ समरूपा अष्टौ गणा इत्यर्थः। तेन चतुर्मात्रगणाष्टकं पूर्व्वपरार्द्धयोः। उत्तरार्द्धे चैकलघुः षष्ठो गणोऽत्र न सम्भवति। किन्तु जगणश्चतुर्लघुर्व्वा गणः कार्य्यः, दीर्घान्तत्वं चरणान्तःपातिदीर्घो णे[मे]वेति बोध्यम्॥ (C).

७३। अथ स्कंधकं लक्षयति चौमत्तेति। पुव्वद्धे उत्तद्धे वि—पूर्वार्द्धे उत्तरार्द्धेऽपि, समरुआ—समरूपाः समं षष्ठजगणं तद्रूपं येषां तादृशा इत्यर्थः। यत्तु समं षष्ठजगण-नलघ्वन्यतरत्वमिति तन्न, अत्र नलघुदानासंभवात्। इदं चानुपदमेव व्यक्तीभविष्यति। चौमत्ता अट्ठ गणा—चतुर्मात्रिका अष्टौ गणाः होंति—भवंति, तत् बहुसंभेआ—बहुसंभेदकं बहवो वक्ष्यमाणाः सप्तविंशतिविधाभेदा यस्य तत्तादृशं खंधआ[आ]—स्कंधकं विआणहु—विजानीत इति पिंगल पभणेइ—पिंगलः प्रभणति, मुद्धि—हे मुग्धे। अत्र उत्तद्ध इति तकारः संयुक्तपरोऽपि लघुर्बोध्यः, कत्थवि संजुत्तपरो इत्युक्तेः (Vide ४र्थ श्लोकः p. 6.—Ed.), अन्यथाऽत्र षष्ठे पंचमात्रापत्त्या जगणासंभवाल्लक्षणं न संगच्छते, एतत्तत्त्वं पुनर्भेदप्रकारावसरेऽनुपदमेव विवेचयिष्यामः। (E).

जहा, जं जं आणेइ गिरिं

रइरह[१] चक्क परिहट्टण[२] सहं हणुआ[३]।

तं तं लीलाइ णलो

वामकरत्थंभिअं[४] रएइ[५] समुद्दे[६] ॥ ७४[७] ॥ [स्कंधकम्]

---

७३। अथ स्कंधकम् ॥ चउम। चतुर्मात्रा अष्टगणाः पूर्वार्द्धे उत्तरार्द्धेऽपि च समरूपाः। तं स्कंधकं विजानीत पिंगलो भणति बहवो भेदाः ॥ अन्येति शेषः ॥ दलद्वयेऽपि द्वात्रिंशन्मात्रा इत्यर्थः ॥ ७३ ॥ (G).

७४। यं यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनुमान्। तं तं लीलया नलो वामकरोत्तोलितं रचयति समुद्रे ॥ (C).

७४। स्कंधकमुदाहरति जं जमिति। हणुआ—हनुमान्, रविरहचक्कपरिघट्टणसह—रविरथचक्रपरिघर्षणसहं जं जं—यं यं गिरिं पर्वतं, आणेइ—आनयति, तं तं णलो—नलः वामकरत्थंभिअं—वामकरोत्तंभितं, लीलाइ—लीलया अनायासेन, समुद्दे—समुद्रे, रएइ—रचयति ॥ (E).

७४। यथा ॥ यं यमानयति गिरिं रविरथचक्रपरिघर्षणसहं हनूमान् ॥ तं तं लीलया नलो वामकरस्तंभितं रचयति समुद्रे ॥ ७४ ॥ (G).

---

७४। १ रविरह (B & C), रइरथ (F). २ परिघट्टण (D), परिघट्टण (E), परिघट्टण (F). ३ हणुमा (A, B & C). ४ करत्थंभिअं (A), करोत्थुभिअं (B), करत्थभिअं (C), करत्थंभि (D). ५ रचइ (D). ६ समुद्द (C). ७ ७९ (A), ७४ (E & F).

णंदउ[1] भद्दउ[2] सेस सरंग[3]
सिव बंभ[4] वारण[5] वरुण[6],
णीलु[7] मअण[8] तालंक[9] सेहर[10]
सरु[11] गअणु[12] सरहु[13] बिमइ[14],
खीर[15] णअरु णरु णिड्ढ[16] णेहलु[17] ।
मअगलु[18] भोअलु[19] सुद्ध सरि
कुंभ कलस ससि जाण[20] ।
सरहु[21] सेस ससहर[22] मुणहु
सत्ताइस[23] खंधाण ॥ ७५[24] ॥ राजसेना ।

---

७५ । अथ स्कन्धकभेदानाह ॥ नन्द भद्र शेष सारङ्ग शिव ब्रह्म वारण वरुण नील मदन तालङ्क शेखर [शर] गगन शरभ [विमति] क्षीर नगर·न[र] स्निग्ध स्नेहल मदकल भोल शुद्ध श्री कुम्भ कलश शशिनो जानीहि । सर्व्वस्य शेषैः शशधरं जानीहि अष्टाविंशतिं

---

७५ । १ णंद (B, C & F). २ भद (F). ३ सारंग (A, B & C), सारंच (F). ४ बम्ह (A), बम्भु (B), बमभ (C). ५ वारण (A & B), वारावा (D). ६ वरुणो (F). ७ णील (A), णीलर (E). ८ मअणु (B & C), मदण (F). ९ तलंक (E). १० सेहर (E & F). ११ सर (C). १२ गअ अअणु (F). १३ सरह (B), सरभ (C). १४ विमदि (A), विमई (D). १५ षीर (A), खीर (D), खीरस (F). १६ सिढ (F). १७ णेहल (A). १८ मअगलु (E), मदगलु (F). १९ भोअउ (B, C & D), लोअउ (E), भूअलु (F). २० जाम (E). २१ सरड (B), सरभ (F). २२ सिहर (E), ससधर (F). २३ अट्ठा-इस (A, B, C & D), भेआ सत्ताइस अट्ठाईस खंधाण (F). २४ ७२ (A), ७५ (E & F).

खञ्जकानाम्। एते च नन्दाद्याः शशिशेषा अष्टाविंशतिभेदा-भवन्ति, तस्यैव विवरणं सर्व्वशेष इति। (C).

७५। अथ पुरः सप्तविंशतिभेदानयनप्रकारं विवक्षुः स्कन्धकस्तेन प्रथमं तावन्नामानि संख्यां चाह। नंद इति। नंदः [१] भद्रः २ शेषः ३ सरंग—सारंगः ४ शिवः ५ ब्रह्मा ६ वारणः ७ वरुणः ८ णीलह—नीलः ९ मअणतलंक—मदनताडंकः १० शेखरः ११ शरः १२ गगनं १३ शरभः १४ विमतिः १५ क्षीरं १६ नगरं १७ नरः १८ स्निग्धः १९ स्नेहलः २० मदकलः २१ लोलः २२ शुद्धः २३ सरिः २४ कुम्भः २५ कलशः २६ शशी २७ इति हि शरभ-शेष-शशधराः प्राकृतकवयः खंधाण—स्कंधके, सत्ताइस—सप्तविंशतिः णाम—नामानि, मुण-इ—जानीत॥ क्वचित्तु णाम इत्यत्र जाण इति पाठस्तत्र विशेष-इत्यर्थस्तदा नामद्वैविध्यं परिहार्यम्। अत्र क्वचिदट्ठाइस खंधाण इति पाठः, स तु लेखकप्रमादाज्जातः, एतदनुरोधेन च मनंद-[मदन]स्ताटंक इति नामद्वयं विधाय त्रिगुर्वष्टपंचाशल्लघ्वात्मक-मष्टाविंशतिभेदं वदंति, तदपि भ्रमविलसितं, क[त]स्य गाथाभेद-त्वाद्यापि षष्ठो जगणो दलद्वये देयः, अंते च गुरुरेव स्थाप्य इति एकैको गुरुः [ज]गणस्य एकैकस्यांत्य इति मिलिता प्रतिभेदं दल-द्वये गुरुचतुष्टयमावश्यकम्, एवं च विंशद्गुरवश्चत्वारो लघवश्च यत्र पतंति स आद्यो भेदः, चत्वारो गुरवः षट्पंचाशल्लघवश्च यत्र पतंति स चरमो भेद इति त्रिगुरूणामसंभवात् सप्तविंशतिरेव भेदा न त्वष्टाविंशतिरिति, तांश्च भेदाननुपदमेव स्पष्टीकरिष्यामः। न चैतस्य गाथाभेदत्वे उत्तरार्द्धे षष्ठो गण एकलघ्वात्मक एव

स्यादिति वाच्यम्, उद्गाथावदत्रापि षष्ठे जगणस्थापने बाधका- भावात् । ननु तथापि तद्वदत्रापि षष्ठो गणो नलघ्वात्मक एव स्यादिति पादांतस्थगुरुयुगस्यैवा[व]श्यकत्वं न तु जगणांतर्गतस्येति प्रतिभेदं कथं गुरुचतुष्टयस्यावश्यकत्वमिति चेत्तन्न, द्विगुरुषष्टि- लघ्वात्मकैकोनचिंशत्तमभेदापत्ते-र्नलघुदानस्य सर्वथा निषेधात् । अतएव गाथाख्योदितसप्तगणदाननियमाद्य तद्भंगेऽपि यथा नापो[पि] विशेषलहानिस्तथांतिमगुरुद्वयस्यैवावश्यकत्वं न पादांत- स्थस्य, तथा च त्रिगुरुसत्त्वेऽपि तथाविधगुरुद्वयवत्त्वस्याबाधान्न त्रिगु- र्वष्टपंचाशल्लघ्वात्मके भेदे किंचिद्बाध[क]मस्तीत्यपास्तं द्विगुरुषष्टि- [ल]घ्वात्मकभेदापत्तेः उर्वरि[त]त्वात् । किं च गाहिनीसिंहिन्यो- रुत्तरार्द्धपूर्वार्धयोरिवात्रापि गुर्वंतसप्तगणनियमभंगेना[ने]ष्टं विशेष- त्वहानिर्भवति भवति च दलद्वयांतस्थगुरुद्वयनियमभंगे सर्वत्र उद्गा- थादौ दलद्वयांतस्थगुरुद्वयनियमदर्शनात्, एवं चैतस्यावश्यकत्वे त्रिगु- र्वष्टपंचाशल्लघ्वात्मको भेदः खपुष्पकल्प एवेति, न च तथापि, दल- द्वयेऽपि षष्ठो जगण एव न देयः किंतु एकत्र जगणः परत्र नलघुः एवं जगणस्य एको गुरुः पादांतस्थं गुरुद्वयमिति प्रतिभेदं गुरु- त्रयमावश्यकमित्थं च यत्र षड्लघवः एकोनत्रिंशद्गुरवश्च पतंति स आद्यो भेदः, यत्र च त्रयो गुरवोऽष्टपंचाशल्लघवश्च पतंति सोऽंतिम- स्येदिति तथाविधे भेदे न किं[चि]द्बाधकमस्त्यस्ति च तथाविधम् इति वाच्यम्, चौलुक्य कत्थवीति विरोधात्, उदाहरणे च दलद्वये- ऽपि जगणस्यैव दर्शनात्, पूर्वं समरूपाश्चतुर्मात्रिका अष्टौ गणा- देया इति लक्षणोक्तविरोधाच्च, यतः समरूपत्वं तेषां तदैव निर्व-

चउ[१] लहु कत्थवि[२] पसर जहिँ सो सहि णंदउ जाण।
गुरु टुट्टइ वेलहु चलइ[३] तं तं णाम विआण॥ ७६॥
दोहा।

---

इति यदि पूर्वार्द्धे यो गणः षष्ठः उत्तरार्द्धेऽपि स एव स्यादिति, पूर्वोक्तभेदापत्त्या चैकत्र तदावश्यकत्वेऽपरत्रापि तस्यैवोचितत्वात्, दीयतां वा षष्ठे जगणः अपरत्र चतुर्लघुः [लघवः] क्रियंतां च तेनैव प्रकारेण भेदास्तथापि भवदुक्तरीत्या प्रस्तारक्रियया चिगु-र्वष्टपंचाशल्लघ्वात्मको भेदः सप्तविंशतितम एवायाति न त्वष्टाविंशति-तम इत्यसम्मातचरणैरुपदिष्टः पंथाः सुधीभिर्विभावनीयः। (E).

७५। अथैकैकगुरुह्रासे भेदनामाह॥ णंदेति॥ नंद १ भद्र २ शेष ३ सारंग ४ शिव ५ ब्रह्मन् ६ वारण ७ वरुण ८ नील ९ मदन १० ताड़ंक ११ शेखर १२ शर १३ अन्यत् गगन १४ शरभ १५ विमति १६ चीर १७ नगर १८ नर १९ स्निग्ध २० स्नेहालु २१ मदकल २२ भूपाल २३ शुद्ध २४ सरित् २५ कुंभ २६ कलश २७ शशिन् २८। विज्ञाः शरभ-शेष-धरा जानीत भेदान् सर्वान् भवंतोऽष्टाविंशतिं स्कंधके॥ भो विज्ञाः शरभ-शेष-धराः प्राकृतकवयः इति सं-बुद्धिः॥ ७५॥ (G).

७६। कथमेते भेदा भवन्तीत्याह। अर्द्धे द्वौ लघू प्रसरतो यस्मिन् तं सखि नन्दं जानीहि। गुरुस्त्रुटति द्वौ लघू उच्छिलत-

---

७६। १ चो (A & E), चउ (B), चवषि (C), चहुषि (F). २ कतहुँ (B, C & F). ३ च वि कउ चइर (D). विचिकउ चइर (E).

सप्तनाम विजानीहि ॥ अयमर्थः—एकैकस्मिन्नर्द्धे लघुद्वयं प्रसरति षष्ठजगणसमन्वयात्, तेन लघुचतुष्टयं चिंशद्गुर्व्वपि नन्दलक्षणम्, उदाहरणेनैव व्यक्तीकरिष्यति। एकैक[गुरु]स्थाने द्वि-द्वि-लघुकरणाद्यथाक्रमं भद्रादि-सप्तविंशतिगुरुह्रासाच्चिगुरुः शशी शेषे ॥ (C).

[There should not be less than two long syllables in each half, one at the end, and the other in the 6th *gana* which must be a जगणः; otherwise there will be no जगणः, and it will be a रंडा. Vide p. 118, and commentary (E) pp. 134-135.—Ed.]

७९। अथ सप्तविंशतिभेदानदा[य]नप्रकारं दोहावृत्तेनाह। चौ लहु कत्यवीति। सहि—सखि, जहि—यत्र, चउ लहु—चत्वारः लघवः, कत्यवि—कुत्रापि, पसर—प्रसरंति, सो णंदउ जाण—तं नंदं जानीहि, यदि गुरु टुट्टइ—गुरुस्त्रुटति ह्रसतीत्यर्थः, विवि लहु वढ्ढइ—द्वौ लघू वृद्धिं प्राप्नुत इत्यर्थः, तदा तं तं णाम विआण—तत्तत् भद्रादिकं नाम जानीहि। अयमर्थः—पूर्वोक्तप्रकारेण दलद्वये षष्ठं जगणमेव दत्त्वा चतुर्मात्रिका अष्टौ गणाः प्रतिदलं विधेयाः, एवं च गाथावच्चापि प्रथमचरणे द्वादशमात्राः स्थाप्यास्तासां षड्गुरवः, द्वितीयचरणे पंचचतुर्मात्रिकाणां सत्त्वात्तेषां विंशतिर्मात्रास्तासां च षष्ठजगणायंतर्गतलघुद्वयं विहाय नवगुरवो भवंति, तदेवं प्रथमदले पंचदशगुरवो द्वौ लघू, एवं द्वितीयदलेऽपि, तथाच द्वयोर्दलयोर्मिलिता यत्र चिंशद्गुरवः षष्ठजग[ण] द्वयांतर्गताश्चत्वारो लघवः पतंति, स नंदः प्रथमभेदः, यदि च चिंशद्गुरुषु एकैकगुरुह्रासेन तत्समानमात्राकं लघुद्वयं वर्द्धते तदा भद्राद्यो भेदा भवंति, ते च प्रदर्श्यंते लिखिता ॥ (E).

[Here something has been omitted by the scribe.—Ed.]

जहा, चंदा कुंदा कासा
हारा हीरा तिलोअणा केलासा ।
जेत्ता[१] जेत्ता[२] सेता
तेत्ता[३] कासीस जिण्णिआ ते[४] कित्ती[५] ॥ ७७[६] ॥
नन्दः । इति गाथाप्रकरणम् ॥

---

७६ । भेदानयनप्रकारमाह ॥ अट्ठेति ॥ अष्टावपि लघवः प्रवर्तंते यत्र तं सखि नंदं विजानीहि । गुरुस्तुथ्यति लिहघुर्वर्धते तन्नाम विजानीत ॥ तन्नामानि भद्रादीनीत्यर्थः । (G).

७७ । उदाहरति । चन्द्रः कुन्दं काशं हारो हीरकस्त्रिलोचनः कैलासः । यावन्तो यावन्तः श्वेतास्तावन्तः काशीश जिताः ते कीर्त्या ॥ अथान्योऽपि खन्धकभेदो दृश्यते, यथा, षन्गोगुरुमध्यलघुकौ पञ्चकलौ द्वौ तृतीयसप्तमागौ[?] । गाथावत् परमखिलं कथितोऽसौ भिन्नखन्धकः कविना ॥ यथा, भ्रमिमरतिमालस्यहृदयतां प्रलयं मूर्च्छां तमः शरीरपातं । मरणञ्च जलधर जगतां यच्छति कुरुते विषं वियोगिनीनाम् ॥ एवमङ्गुस्खन्धकोऽपि । (C).

७७ । अथ नंदाख्यं स्कंधकभेदमुदाहरति चंदेति । चंदा — चंद्रः, कुंदा — कुंदः, कासा — काशः, हारा — हारो मुक्तादाम, हीरा — हीरकं, तिलोअणा — त्रिलोचनः कर्पूरगौर इति यावत्,

---

७७ । १ जत्ता (B), जाता (C). २ तता (B & C). ३ तो (C). ४ कीत्ती (C). ५ ७६ (A), ७७ (F). This *sloka* has been omitted by the scribe in the text of (E), but not in the commentary.

## अथ दोहा (D, E & F).

तेरह मत्ता पढम पअ पुणु[1] एआरह देह[2] ।
पुणु[1] तेरह एआरहहि[3] दोहा लक्खण एह[4] ॥ ७८[5] ॥

केलासा — कैलासः पर्वतः इत्यादीनीति शेषः, जेत्ता जेत्ता सेत्ता — यावंति[यावंति]श्वेतानि, तेत्ता — तावंति, हे कासीस — काशीपते दिवोदास, ते तव कित्ती — कीर्त्या जिणिआ — जिता[ता]नि, एतेभ्योऽपि त्वदीया कीर्त्तिरतिधवलेति भावः ।

* इति श्रीपिंगलप्रकाशे गाथाप्रकरणम् ।* (E).

७७ । तत्र चंदो यथा ॥ चंदेति ॥ चंद्राः कुंदाः काशा हाराः हीराश्त्रिलोचनः कैलासः । यावंतो यावंतः श्वेताः काशीश्वर जीयंते ते कीर्त्या ॥ काशीश्वरो दिवोदासः ॥ ७७ ॥ (G).

७८ । अथ दोहामाह । त्रयोदशमात्राः प्रथमपदे पुनरेकादश मात्रा देहि । पुनस्त्रयोदशैकादशभिर्दोहालक्षणमेतत् ॥ पुनरित्यर्थात् द्वितीयपदे, त्रयोदशैकादशभिः तृतीयचतुर्थचरणौ भवतः । (C).

७८ । अथ द्विपथां लक्षयति तेरहेति । पढम पअ — प्रथमपादे, तेरह मत्ता — त्रयोदश मात्राः, देऊ — देहि, इदं च क्रियापदं सर्वत्रान्वेति, पुनः द्वितीयचरणे इत्यर्थः, एआरह — एका-

---

७८ । १ पुण (B & C). २ देऊ (E), देहि (F). ३ एआरह (B), एआरहह (C), एआरहइं (D), हि dropt in (E). ४ बेऊ (B), देह (C), एऊ (E), एहि (F). After this in D "द्विपथेयं" इति । ५ ७५ (A), ७८ (E & F).

अहा, सुरअरु सुरही परसमणि
णहि वीरेस समाण।
ओ वक्कल[1] अरु[2] कठिणतणु
ओ पसु ओ पासाण[3] ॥ ७९[4] ॥ दोहा।

---

दश मात्रा देहि [इ]ति पूर्वेणान्वयः, पुणु—पुनः ढतीयचरणे इत्यर्थः तेरह—त्रयोदश मात्रा देहीति पूर्वेणान्वयः, चतुर्थचरणे इति शेषः एग्गारह—एकादश मा[त्रा] देहीति तेनैवान्वयः, एअ—एतद् दोहा लक्खण—द्विपथालक्षणम् ॥ (E).

७८। अथ दोहामाह ॥ तेरहेति ॥ त्रयोदश मात्राः प्रथमे पादे पुनरेकादश देहि। पुनस्त्रयोदश एकादश दोहालक्षणमेतत् ॥ क्रमात्पादे[षु] एतत्संख्या मात्राः कार्या इत्यर्थः ॥ इयं द्विपथेति संस्कृते ॥ ७८ ॥ (G).

७९। सुरतरुः सुरभिः स्पर्शमणिर्नहि वीरेशसमानः। असौ वल्कलेन भवति कठिनतनुः, असौ पशुः, असौ पाषाणः ॥ (C).

७९। द्विपथामुदाहरति सुरअरु इति। सुरतरुः कल्पवृक्ष-इत्यर्थः, सुरही—सुरभिः कामधेनुरित्यर्थः, परसमणि—स्पर्श-मणिः, एते इति शेषः, वीरेस समाण—वीरेशसदृशा नहि। तत्र हेतुमाह ओ वक्कल इति। ओ—सः सुरतरुरित्यर्थः वक्कल ओ कठिणतणु—वल्कलः वल्कलमय इति यावत् अथच कठिन-

---

७९। १ वक्कर (A), वक्कले (B), वक्कलु (F). २ चो (A, B & C), ओ (D & E). ३ पाखाण (A), पाषाण (B & C). ४ ७९ (A), ७८ (E & F).

भमरु भामरु सरहु सेणाणु[1] मंडूअ[2] मक्कड[3] करहु[4],
णरु[5] मरालु[6] मअगलु[7] पओहरु[8] बलु बाणरु[9] तिमिर[10] कलु,
कच्छ मच्छु[11] सद्दूल[12] अहिवरु[13] ।
वग्घ[14] बिराडउ[15] सुणहु[16] तह उंदुर[17] सप्प पमाण[18] ।
गुरु टुट्टइ बे लहु चलइ[19] तं तं णाम बिआण[20] ॥ ८०[21] ॥

रड्डा ।

तनुः, यो पशु — या सुरभिः पशुः विवेकरहिता, यो पाषाण — सः स्वर्णमणिः पाषाणः जड़ इति भावः, वीरेश्वरस्तु मृदुचित्तः विवेकी महाबुद्धिरिति तेभ्यो विलक्षण इति भावः । (E).

७९ । यथा सुरेति ॥ सुरतरुः सुरभिः स्वर्णमणिर्नहि वीरेश्व[र]समानाः । स यवस्तरुोऽन्यत् कठिनतनुः, सा पशुः, स पाषाणः ॥ वीरेश्वराख्यो राजा स्तूयते ॥ ७९ ॥ (G).

८० । तद्भेदानाह । भ्रमर भ्रामर शरभ श्येन मण्डूक मर्कट

---

८० । १ सणाण (B & C), सेणाणु (D), सरणाण (E). २ मण्डअ (B & C), मंडूअ (E & F). ३ मक्कडु (B & C), मक्कडु (D). ४ करभ (E), करह (F). ५ णाअर (E). ६ मराल (A). ७ मयगंध (A), मअगअ (B). ८ पओहर (A). ९ बल बाणर (A), बल बाअर (B). १० तिमिअ (A), तिमिं (D), तीम (E). ११ कच्छ मच्छ (B & C). १२ सदुल (B), सद्दूल (C), सद्दूलं (D), सद्दूल (E). १३ अहिवर (A), अहीवर (E). १४ वग्घ (B & C), वग्घ (D), तह वग्घ (E). १५ बिराडअ (B, C & E). १६ सणहि (B). १७ उंदुर (A), उन्दुर (B & C), उंदर (D). १८ पमाण (A), समाण (B), समाण (D). १९ चलइ (E), चलइ (D & F). २० बिआणि (A & B). २१ ७७ (A), ८० (E), ८१ (F).

छव्वीस[1]क्खर[2] भमर[3] हो गुरु बाइस लहु चारि[4] ।
गुरु[5] टुट्टइ बे लहु चलइ[6] तं तं णाम बिआरि[7] ॥ ८१[8] ॥

दोहा ।

---

करभास्य, [नर]मराल मदकल पयोधर चल वानर त्रिकर कच्छप मत्स्य शार्दूलाहिवरान् । व्याघ्रविडालौ जानीहि, तथा उन्दुरसर्पौ प्रमाणम् । गुरुस्त्रुट्यति द्वौ लघू उच्चिष्ठतः तत्तन्नाम विजानीत ॥ (C).

८० । अथैतद्भेदान् दृष्टान्तेनाह भमर इति,—भ्रमरः १, भ्रामरः २, शरभः ३, शरयाण—श्येनः ४, मंडूकः ५, मर्कटः ६, करभः ७, नरः ८, मरालः ९, मदकलः १०, पयोधरः ११, चलः १२, वानरः १३, त्रिकलः १४, कच्छपः १५, मत्स्यः १६, सद्दूल — शार्दूलः १७, अहीवर — अहिवरः १८, व्याघ्रः १९, विरालः २०, शुनकः २१, तह — तथा उंदुरः २२, सर्पः २३ इति, यदा गुरु टुट्टइ — गुरुस्त्रुटति ह्रसतीत्यर्थः, बे लहु — द्वौ लघू वड्ढइ — वर्द्धेते, तदा तं तं — तत्तत् भ्रमरादिकं णाम — नाम, बिआण — विजानीहि इति पमाण — प्रमाणं निश्चितमित्यर्थः ॥ ८० ॥ (E).

८० । अथ तस्य त्रयोविंशतिनामानि । भ्रमर १, भ्राम[र] २, शरभ ३, श्येन ४, मंडूक ५, मर्कट ६, करभ ७, नर ८, मराल ९, मदकल १०, पयोधर ११, च[ल] १२, वानर १३, त्रिकल १४, कच्छ[प] १५, मत्स्य १६, शार्दूल १७, अहिवर १८, व्याघ्र १९,

---

८१ । १ छव्विस (A). २ अक्खर (B & C), अर (F). ३ भमर (B & C). ४ चारी (A). ५ This line is dropt in (C). ६ चलइ (A), वलइ (D & E). ७ विचारो (E). ८ ८० (A), ८१ (E & F).

विडाल २०, शुनक २१, तथा उंदुर २२, सर्प्प २३ इति ॥ ८० ॥ (G).

८१ । गुरुत्रोटनादेव कथं तत्तद्भेदास्तत् स्पष्टीकर्त्तुमाह । षड्विंशत्यक्षरो भ्रमरो भवति, गुरवो द्वाविंशतिर्लघवश्चत्वारः । गुरुस्त्रुटति द्वौ लघू उत्तिष्ठतस्तत्तन्नाम विचारय ॥ अत्र पादचतुष्टये लघुचतुष्कं विहायावशिष्टा द्वाविंशतिर्गुरवः ॥ तेन षड्विंशत्यक्षरा दोहा भ्रमरनामिका, एकैकगु[रु]ह्रासे द्विद्विलघुवर्द्धने भ्र[भ्रा]-मरादिनामानि । (C).

८१ । अथैनमेव प्रस्तारप्रकारं दोहाछन्देन विशदीकरोति छब्बीस इति । बाइस[स] — द्वाविंशतिः, गुरु — गुरवः, चारि — चत्वारः, लड़ु — लघवः, एवं छब्बीसअक्खर — षड्विंशत्यक्षराणि, भमर हो — भ्रमरे भवंति, तत्र यदा गुरु टुट्टइ — गुरुस्त्रुटति न्यूनो भवति, बे लड़ु बढइ — द्वौ लघू वर्द्धते, तदा तत्तद्भ्रमरादिकं नाम बिआरि — विचारय जानीहीत्यर्थः । अयमर्थः — पूर्व्वं द्विपथायाः प्रथमचरणे त्रयोदशमात्राणामुक्तत्वात् तासां च प्रथमं षट्कलः पुनश्चतुष्कलः पुनस्त्रिकलः स्थाप्य इति (Vide श्लोक ७८, p. 146. — Ed.) उट्टवनिकाप्रकारस्य वक्तव्यत्वादेकलघुः प्रथमचरणे त्रिकलांतर्गत आवश्यकः, अन्यथा त्रयोदशमात्राणामसंभवापत्तेः, एवं द्वितीयचरणे एकादशमात्राणामुक्तत्वात्तासां च प्रथमं षट्कलस्ततश्चतुष्कलस्तत एककलः स्थाप्य इति उट्टवनिकाप्रकारस्य वक्ष्यमाणत्वात्तत्राप्येको लघुरावश्यकः, एवं तृती[य]चतुर्थयोरप्येकैको लघुरावश्यक इति लघुचतुष्टयं प्रतिभेदमावश्यकमेवं च प्रथमचरणे द्वादशमात्राणां षट्-

जहा, जा अद्धंगे[1] पव्वई[2] सीसे गंगा जासु[3]।
जो लोआणं[4] वल्लहो वंदे पाअं तासु ॥ ८२[5] ॥

भ्रमरः।

गुरवस्त्रयोदशमात्रात्मकश्चैको लघुरेवं द्वितीयचरणे दशमात्राणां पंच गुरव एकादशतममात्राकश्चैको लघुरेवं पूर्वदले एकादश गुरवो द्वौ लघू, एवं चयोदशाक्षराणि पतंति, एवं परदलेऽपि इति द्वाविंशतिगुरवश्चत्वारश्च लघवो यत्र पतंति [तत्र] भ्रमरः। अथ षड्विंशत्यक्षरात्मके भ्रमरे च यद्येको गुरुर्न्यूनो भवति पूर्वभेदस्थ-लघुचतुष्टयेनैकीकृत्य तत्समानमात्रासंख्याकं च लघुद्वयं वर्द्धते, एवमेकविंशतिगुरवः षड्लघवश्च यत्र पतंति, स भ्रामरः। एवं पूर्वभेदापेक्षया उत्तरत्र भेदे एकं गुरुं न्यूनं कृत्वा लघुद्वयमधिकं कृत्वा ते ते भेदा वाच्याः, ते लिखित्वा प्रदर्श्यंते ॥ ८१ ॥ (E).

[Here apparently something has been omitted.—Ed.]

८१। अथ तदानयनप्रकारमाह ॥ छब्बीसेति ॥ षड्विंशत्यक्षरो भ्रमरो भवति। गुरवो द्वाविंशतिः लघवश्चत्वारः। एको गुरु-स्तुट्यति द्वौ लघू वर्धेते तत्तन्नाम विजानीहि ॥ एकादिगुरुह्रासे द्व्यादिलघुवृद्धौ भ्रामरादीनि नामानि भवंतीत्यर्थः ॥ ८१ ॥ (G).

८२। यस्यार्द्धांगे पार्वती शीर्षे गङ्गावासः। यो लोकानां वल्लभो वन्दे पादं तस्य ॥ (C).

८२। अथैतेषु भेदेषु आद्यं भ्रमरनामकं भेदमुदाहरति जा

८२। १ अद्धंगे (C), अधंगो (E). २ पव्वइ (A). ३ वासु (B & C), वासु (F). ४ लोआणं (D & F), लोआणं (E). ५ ८४ (A), ८१ (E & F).

बारह लहुआ विप्पो
तह[1] बाईसे[2] हिँ खत्तिणी[3] भणिआ ।
बत्तीस[4] होइ वेसो[5]
जा इअरा[6] सुद्दिणी[7] होइ[8] ॥ ८३[9] ॥ गाहा ।

अर्द्धांग इति । जा अद्धंगे पव्वई — यस्यार्द्धांगे पार्वती, सीसे गंगा जासु — शीर्षे गंगा [यस्य], जो — यो, देवानां वल्लभः, तासु पाअं — तस्य पादौ, वंदे — नमस्करोमि ॥ ८२ ॥ (E).

८२ । तत्र भ्रमरो यथा ॥ यस्यार्धांगे पार्वती शीर्षे गंगा यस्य । यो देवानां वल्लभो वंदे पादौ तस्य ॥ (G).

८३ । या[जा]तिमाह, द्वादशलघुका विप्रो[प्रा] भवति, तथा द्वाविंशत्या क्षत्रिया भणिता । द्वात्रिंशता भवति वैश्या जातिवरा, शेषे शूद्रा भवति ॥ (C).

८३ । अथ वर्णभेदेन द्विपथाया जातिभेदमाह, [बारह] लहुआ — द्वादशलघुका द्विपथेति शेषः, विप्पो — विप्रा भवतीति शेषः, तह बाईसेहिं — तथा द्वाविंशतिभिर्लघुभिरिति शेषोऽत्रापि योजनीयः, खत्तिणी भणिआ — क्षत्रिया भणिता, बत्तीस — द्वात्रिंशद्भिर्लघुभिः वेसो — वैश्या होइ — भवति । जा इअरा — या इतरा चतुश्चत्वारिंशल्लघुसंख्याका सा सुद्दिणी होइ — शूद्रा भवति ॥ (E).

८३ । १ तह (C). २ बाइसेण (C), बाईसेहिं (F). ३ खत्तीणी (D). ४ बत्तीसा (C). ५ वेसि (A). ६ इअरा (C). ७ सा सुद्दिणी (E). ८ होई (F). ९ ८९ (A), ८२ (E & F).

जस्सा[1] पढमहि तीए[2] जगणा[3] दीसंति[4] पाअ पाएण[5]।
चंडालह[6] घर रहिआ[7] दोहा दोसं पआसेइ[8] ॥ ८४[9] ॥
गाहा।

---

८३। द्वादशभिर्लघुभिर्विप्रा तथा द्वाविंशैः क्षत्रिया भणिता। द्वात्रिंशद्भिर्वैश्या, येतरा शूद्रि[द्रा]णी भवति ॥ ८३ ॥ (G).

८४। दोहादोषमाह। यस्याः प्रथमे तृतीये जगणो दृश्यते पादपादैः। चण्डालगृहस्था [दोहा] दोषं प्रकाशयति ॥ पादपादैः सह—इत्यनेन प्रथमपादे द्वितीयपादेन सह, तृतीयपादो[दे] चतुर्थपादेन सह, इत्यर्थः। तेन पादचतुष्टये यत्र जगणा भवन्ति सा दोषवतीत्यर्थः। (C).

८४। अथ द्विपथाया गणविशेषपुरस्कारेण दोषमाह जस्सेति। जस्सा—यस्याः द्विपथायाः, पढमहि—प्रथमे, पाअ—पादे, तथा तीए—तृतीये, पाए—पादे, ण—ननु निश्चितं, जगणा—मध्यगुरुका गणाः दीसंति—दृश्यंते, सा चंडालह घर रहिआ—चंडालगृहस्थिता, दोहा—द्विपथा दोसं पआसेइ—प्रकाशयति ॥ तथाच दोहाप्रथमतृतीयचरणयोर्जगणो न देय-इति भावः। (E).

---

८४। १ जिस्सा (B & C). २ पढम तीए (A), पढमे तीए (E), पढमक तीए (F). ३ जगण (E & F). ४ दिसन्ति (B), दिसंति (D), दिसंहि (F). ५ पाआसु (A), पाएणु (B), पाएसु (C), पावेब (F). ६ चंडाल (B & C). ७ रहिआ (A). ८ पआसेई (D & E). ९ ८० (A), ८४ (E & F).

छक्कलु चक्कलु तिस्सि[१]कलु एमपरि[२] बिसम पअंति[३] ।
सम पाअहिँ[४] अंतेक्ककलु ठबि[५] दोहा णिभंति[६] ॥ ८५[७] ॥

दोहा ।

---

८४ । अथ दोहादोषमाह ॥ जस्सा इति ॥ यस्याः प्रथमे तृतीये जगणा दृश्यंते पादे पादे । चंडालगृहस्थिता दोहा दोषं प्रकाशयति ॥ इव इति शेषः ॥ ८४ ॥ (G).

८५ । अत्र च कियत्कलो गणो ग्राह्य इत्यत्राह । षट्कल-चतुष्कलत्रिकल एवंप्रायो विषमपाद इति । समपादे अन्ते एक-कलं संस्थाप्य दोहां निर्व्वहति ॥ समपादे द्वितीये चतुर्थे च षट्कलगणानान्तरमेककलमिति [षट्कलचतुष्कलगणानन्तरमेककल-मिति] । (C).

८५ । अथ द्विपथाया उट्टवनिकामाह छक्कलु इति । आदौ छक्कलु—षट्कलः, ततः चक्कलु—चतुष्कलः, ततश्च त्रिकलः, एम-परि—अनया परिपाट्या बिसम—विषमे चरणे गण इति शेषः, पअंति—पतंति, सम पाअहि—समे पादे द्वितीये चतुर्थे चेत्यर्थः । अंते षट्कलचतुष्कलयोरंते इत्यर्थः, एक्ककलु—एककलः पततीति शेषः, इमभंति—एवंप्रकारेण, दोहा—दोहां, ठवि—स्थापय । एक्ककलु अत्र एको ह्रस्वः । अयमर्थः—विषमचरणयोस्तयोर्द्य-

---

८५ । १ तिस्र (B & C). २ Here ए should be read as short. Vide श्लोक ५, p. 7. ३ पअंति (E), पतिषं (F). ४ पाँच (A), पाचाहि (C), पाचहि (E & F). ५ ठेवि (E). ६ णिब्भन्ति (B), णिभवन्ति (C), णिभंति (D), इमभंति (E), णिभंत (F). ७ ८६ (A), ८५ (E & F).

दिअवरगण धरि[1] जुअल,
पुणवि अ तिअलहु[2] पअल,
इम[3] विहि विहु[4] छउ[5] पअणि[6],
जिम सुहइ[7] सुससि[8] रअणि,
इह[9] रसिअउ मिअणअणि,
इह[10]दह कल गअगमणि ॥ ८६[11] ॥

मात्राणां सत्त्वात्प्रथमं षट्कलमात्रास्ततः चतुष्कलस्ततस्त्रिकल एवं चयोदश मात्राः स्थाप्याः, समचरणयोश्च प्रथमं षट्कलस्ततश्चतुष्कलस्तत एककल एवमेकादश मात्राः स्थाप्या इति ॥ ८५ ॥

*इति पिंगलप्रकाशे दोहाप्रकरणम् ॥* (E).

८५ । षट्कलश्चतुष्कलस्त्रिकलः एवंप्रकारेण विषमपादांते । समपादस्यांते एककलः स्थापनीयो दोहायां निर्भ्रान्तम् ॥ समे दा[एका]-दश विषमे एका[चयो]दश मात्राः कार्या इत्यर्थः ॥ ८५ ॥ (G).

८६ । द्विजवरयुगलं. ध्रियते पुनरपि चयो लघवः प्रकटाः । अनेन विधिना द्विचतुष्पदा शोभते यथा शशी रजन्याम् । इयं रसिका मृगनयने एकादशकला गजगमने ॥ द्विजवर इति चतुष्कलगणे सर्व्वलघोः संज्ञा, तद्युगलेनाष्टौ लघवः, पुनश्च चयो-

८६ । १ धर (A & C). २ पुनवि तिलज (B). ३ एम (B & D), एच (F). ४ विच (C), विवि (D & F). ५ छच (A), चउ (C). ६ पच (C). ७ सुबर जुजिम (A & C), सबर सुजिम (B), जेम सुबर (D), जिमु सुबर (F). ८ सुससं (D). ९ इच (B & C), एच (D & E), इउ (F). १० इच (B, C & D), एच (E). ११ ८२ (A), ८६ (E & F).

जहा, विमुह[1] चलिअ[2] रण अचलु[3],
परिहरिअ हअ गअ बलु[4],
हलहलिअ[5] मलअ णिवइ[6],
जसु जस[7] तिहुअण[8] पिअइ[9],
बणरसि[10] णरवइ लुलिअ[11],
सअल उबरि[12] जस[13] फुरिअ[14] ॥ ८७[15] ॥

रसिका ।

---

सघव इति मिलिला एकादश कलाः । द्विचतुष्पदेत्यनेन षट्पदलक्षणम् । (C).

८६ । अथ रसिकानामकं वृत्तं लक्षयति । दिअवरगणेति । हे मिअणअणि — मृगनयने, गअगमणि — गजगमने, दिअवरगण धरि जुअल — द्विजवरगणस्य चतुर्लघुयुक्तगणस्य युगले स्थापय, पुणविअ — पुनरपि च द्विजवरयुगलानंतरं चेत्यर्थः, तिअलड पअल — त्रीन् लघून् प्रकटय, इम विहि — एवं विधिना छउ पअणि — षट्पदेषु प्रत्येकमिति भावः, एअ[ह]दह कल — एकादश कलाः, विरउ — विधेहि विरचयेत्यर्थः, एउ[अ] रसिअउ — एषा रसिका, जिम — यथा, रअणि — रजन्यां, ससहि — पूर्णचंद्रः,

---

८७ । १ विमुउ (E). २ चलिउ (C). ३ अचल (A & E). ४ बल (A), बलु (B). ५ चलिअच (A), चलि(F). ६ वर (F). ७ जस जसु (E & F). ८ भाव (D). ९ पिबइ (B, C, D & F). १० रअवसि (B), वरवसि (E & F). ११ लुच (C). १२ उवरि (B, C & D). १३ जसु (D, E & F). १४ फुरिअ (D, E & F). १५ ८४ (A), ८० (E & F).

तथा सुहइ—शोभते। यत्र एकादशमात्रा एवं षट्चरणानि यस्याः सा रसिकेति फलितार्थः ॥ ८६ ॥ (E).

८६। अथ रसिका छंदः ॥ द्विजवरयोर्गणयोर्धारय युगलं, पुनरपि च त्रिलघु पातय ॥ इति विधिविहितषट्पदा यथा शोभते सुशशी रजन्याम् ॥ एषा रसिका मृगनयने एकादशकला गजगमने ॥ रात्रौ चंद्र इव रसिका शोभते इत्यर्थः ॥ ८६ ॥ (G).

८७। उदाहरति। विमुखचलितो रणेऽचलः, परिहृत्य हय-गजबलं। हलहलति[लि]तो मलयनृपतिः यस्य यशस्त्रिभुवनं पिबति। वाराणसी[नर]पतिलुंलितः सकलोपरि यशः स्फुरति ॥ यस्य राज्ञः रणे विमुखः सन् अचलनामा राजा चलितः, एता-दृशं वैमुख्यं हयगजबलमपि त्यक्तुं[त्वा] हलहलितः कम्पितः, लुलितो भग्नः ॥ (C).

८७। रसिकामुदाहरति विमुखेति। अचलः कश्चिद्राजा हअ गअ बल—हयगजबलानि, परिहरिअ—परिहृत्य, रण—रणे विमुखः सन्, चलिअ—चलितः पलायित इत्यर्थः, किञ्च जस जसु तिहुअण पिअइ—यस्य यशः त्रिभुवनं पिबति सोऽपीति शेषः, मलअणिवइ—मलयनृपतिः, हलहलिअ—हलहलितः, किंच वर-णसि णरवइ—वाराणसीनरपतिः दिवोदास इत्यर्थः, लुलिअ—लुलितः पराङ्मुखीभूत इति यावत्। अतः तस्य राज्ञः सकलोपरि यशः स्फुरितम् ॥ ८७ ॥ (E).

८७। यथा कश्चिद्राजसभायां[?] रणादचलन् वाराणसीनर-पतिर्लुलितः सकलोपरि यशः स्फुरि[र]ति ॥ ८७। (G).

आइकव्व उक्कच्छ[1] मह[2] लोहंगिणि किउ[3] सारु[4] ।
गुरु बड्डइ[5] बि[6] बिलहु घटइ[7] तं तं णाम बिआरु ॥ ८८[8] ॥
[दोहा]

---

८८। तद्भेदानाह। आदिकाव्यमुत्कच्छा स्फुटा लोहाङ्गीमध्ये सारः। गुरुर्वर्द्धते द्वौ लघू विघटेते तत्तन्नाम विचारय ॥ या रसिकेत्युक्ता सैवोत्कच्छा स्फुटा स्फुटीकृता। सर्व्वलघुरूपा सा आदिकाव्यं लोहाङ्ग्यादीनां वक्ष्यमाणानां मध्ये सर्व्वलघुः श्रेष्ठा प्राथमिकत्वात्। अन्ये कथं भवन्तीत्याह। लघुह्रासगुरुवृद्धिभ्यां तत्तन्नाम ज्ञेयमित्यर्थः। (C).

८८। अथैतस्या नामाक्षरकथनपूर्वकं भेदानयनप्रकारमाह आईति। उक्कच्छ मह — उत्कच्छामध्ये उत्कच्छापरपर्यायरसिकामध्ये इति यावत्, सारु — सारभूता, लोहंगिणि — लोहांगिनी, आइकव्व — आदिकाव्यं प्रथमभेदः किउ — कृतं। गुरुर्वर्द्धते द्वौ लघू ह्रसतः, तदा तं तं — तत्तद् वक्ष्यमाणं नाम बिआरु — विचारय ॥ अत्र उक्कच्छेति रसिकायाः पर्यायः, रसिकात्वं च सर्वभेदवृत्ति। तथाच षष्ठीत्यादिवत् लोहांगिनीत्वादि व्याप्यं, रसिकात्वं गाथात्वमिव व्यापकं बोध्यम्। (E).

---

८८। १ उक्कह (A), उक्कच्छ (C), उक्कछ (D & E), उक्कच (F). २ मज्ज (B). ३ किउ (A & B), फुरउ (C). ४ सब (A). ५ ढुड्ढइ (A), वड्ढइ (B). ६ बे (A, B & C). ७ घलइ (A), घडइ (B & C), घटइ (F). ८ ८५ (A), ८८ (E & F).

लोहंगिणि[1] हंसीआ[2] रेहा तालंकि[3] कंपि गंभीरा ।
काली कलरुद्दाणी[4] उक्कच्छा[5] अट्ठ[6] णामाइं[7] ॥ ८९[8] ॥
गाहा ।

---

८८ । रसिकाया नामांतराण्याह ॥ आह ॥ आदिकाख्यं उक्कच्छा वृत्तं लोहांगिनीमध्ये सारं ॥ गुरुर्वर्धते द्वौ द्वौ लघू च्युतस्तदा तन्नामानि विजानीत ॥ रसिकाया एव आदिकाख्यं उक्कच्छा इति नामद्वयं ज्ञेयम्, लोहांगिन्यादिमध्ये श्रेष्ठं,तत्र गुरुगुरु[लघु]वृद्धिह्रासे अग्रिमाणि नामानि भवंतीत्यर्थः ॥ ८८ ॥ (G).

८९ । नामान्याह । लोहाङ्गी हंसी रेखा ताडङ्की कम्पिनी गम्भीरा काली कालरुद्राणी उत्कच्छाया अष्ट नामानि ॥ (C).

८९ । अथ नामान्याह लोहंगिणीति । लोहंगिणि—लोहांगिनी, हंसीआ—हंसिका, रेखा, ताड़ंकिनी, कंपिनी, गंभीरा, काली, कालरुद्राणी इति उक्कच्छाया अष्टौ भेदा इत्यर्थः ॥ (E).

८९ । लोहं ॥ लोहांगिनी १, हंसी २, रेखा ३, ताडंकिनी ४, कंपिनी ५, गंभीरा ६, काली ७, कलरुद्राणी ८, उक्कच्छाया अष्ट नामानि ॥ ८९ ॥ (G).

---

८९ । १ Dropt in (D). २ हंसिणिआ (A, B & C), हंसीणिआ (D). ३ तालंकी (D). ४ कलरुद्दाणि (A), कालरुद्दणी (C), कालरुद्दाणी (D). ५ उक्कहा (A), उक्का (F). ६ अट्ठ (B & C). ७ णामाइं (A & D), णामाइ (B, C & E). ८ ८१ (A), ८६ (E & F).

लोहंगिणि[1] सव्वलहू[2] जत्थ[3] गुरू[4] एक्क[5] सा हंसी ।
जं[6]जं वड्डइ[7] हारो णामं जो[8] जत्थ[3] सो तत्थ[9] ॥ ९०[10] ॥

[गाहू ।] [इति] उक्कच्छा । (A, B & C).

---

९० । आर्यां स्वरूपमाह । लोहाङ्गी सर्व्वलघुर्यत्र गुरवश्चत्वारो भवन्ति सा हंसी । यो यो हारो वर्द्धते नाम यत्र तत्तत्र ॥ हारो गुरुः, चत्वार इति चतुर्गुरुपर्य्यन्ता हंसी । ततश्च गुरुर्वर्द्धते तत्तन्नाम भवति । चतुर्गुरुः हंसीति कथनात् गुरुचतुष्कक्रमाद् वृद्धिर्बोद्धव्या, तेनाष्टावधिगुरू रेखा भवति । एवं ततो द्वादशावधिगुरुस्ताडङ्की ततः षोड़शावधिगुरुः कम्पिनी, एवं क्रमेणाष्टाविंशतिगुरुपर्य्यन्ता कालरुद्राणी । ननु इति ज्ञेयं, अत्र द्वात्रिंशद्गुरुत्वमपि सम्भाव्यते, यतोऽत्र एकादशकलः पादः, उच्यते इत्यूह्यं, षट्सु पादेषु लघवः षड़ावश्यकाः, षट्षष्टिकलाया उत्कच्छाया लघुशेषे रुद्रशक्यः सम्भवंति । अत्र च नामान्तरकथनात् सापि कालरुद्राण्येवेति सम्प्रदायः । परे च हंसानन्तरमेव एकगुरुवृद्ध्या रेखादयः, तेन दशगुरुः कालरुद्राणीति इतो वृद्धिर्नास्तीति वदन्ति । (C).

९० । अथ प्रस्तारक्रममाह लोहंगिणीति । सव्वलहु — सर्वलघुः सर्वे षट्पादस्थाः षट्षष्ठ्यपि वर्णा लघवो यस्यां सा इत्यर्थः,

---

९० । १ चोद follows चि (F). २ सब्बलड (B, C & D), सब्बलघू (F). ३ जत्थ (A), जत्थच (B, C & F). ४ गुरु (B, C, D, E & F). ५ चारि चोद (B, C, D & F). एक चोद (E). ६ जचे (E). ७ वड्डद (B), वड्डर (C). ८ जोच (F). ९ तत्थ (A). १० ८० (A), ९० (E & F).

लोहांगिनी भवतीति शेषः, जत्थ — यत्र, एक्क — एकः, गुरु — गुरुः, होइ — भवति सा हंसी । एवं यथा यथा वर्द्धते चारः गुरुः, तथा तथा यत्र यत् नाम, तत्र तत् नाम शेयमित्यर्थः । अयं भावः — यत्र षट्षष्टिर्लघवः सा लोहांगिनी, यत्रैको गुरुश्चतुःषष्टिर्लघवः सा हंसी, यत्र द्वौ गुरू द्विषष्टिर्लघवः सा रेखा, एवं पूर्वभेदापेक्षया यथा उत्तरत्र भेदे एको गुरुर्वर्द्धते, लघुद्वयं च य[न्न]वहीयते, तथा भेदा बोध्याः, ते च लिखिता प्रदर्श्यंते । [Here a blank space has not been filled in.—Ed.]

अत्र यद्यपि नवमाद्योऽप्यन्ये त्रयोविंशतिर्भेदाः संभवंति बाधकाभावात्तथापि ते ग्रंथकृता नोक्ताः, वस्तुतस्तु तेऽपि सुधीभिरूहनीयाः । तत्र च त्रिंशद्गुरवः षट् लघवो यत्र भवंति सोऽंतिमो भेदः, प्रतिच[रण]मेकादशमात्राणामुक्तत्वादेकादशतम एको लघुरवश्यं प्रतिचरणमंतेऽपेक्षित इति बोध्यम् । अत्र क्वचित् जत्थ गुरु चारि होइ सा हंसीति पाठश्च — यत्र गुरुश्चतुष्टयं भवति सा हंसी, एकगुरुमारभ्य यावत् गुरुचतुष्टयं वर्द्धते तावत्पर्यंतं भेदचतुष्टयं हंसीसंज्ञकमित्यर्थः । अत्रायमाशयः । यत्र चरणचतुष्के षट्षष्टिर्लघवः पतंति सा लोहांगिनी, यत्रैको गुरुश्चतुःषष्टिर्लघवः [Here apparently something has been omitted.] यत्र च चतुर्गुरवश्चतुःपंचाशल्लघवः यत्र सप्त गुरवः द्विपंचाशल्लघवः [Here something has been left out] एते चत्वारो भेदा रेखासंज्ञकाः २ । यत्र च नव गुरवः अष्टचत्वारिंशल्लघवः, यत्र दश गुरवः षट्चत्वारिंशल्लघवः, यत्र चैकादश गुरवः चतुश्चत्वारिंशल्लघवः, यत्र च द्वादश गुरवः द्विचत्वा-

रिंशल्लघवः, एषां च चतुर्णां ताडंकिनी संज्ञा ३। यत्र त्रयोदश गुरवः चत्वारिंशल्लघवः, यत्र च चतुर्दश गुरवः अष्टत्रिंशल्लघवः, यत्र च पंचदश गुरवः षट्त्रिंशल्लघवः, यत्र च षोडश गुरवः चतुस्त्रिंश-ल्लघवः, एषां चतुर्णां कंपिनी संज्ञा ४। यत्र सप्तदश गुरवः द्वात्रिंश-ल्लघवः, यत्र चाष्टादश गुरवस्त्रिंशल्लघवः, यत्रैकोनविंशतिर्गुरवः अष्टा-विंशतिर्लघवः, यत्र विंशतिर्गुरवः षड्विंशतिर्गुरवः[र्लघवः], एषां चतुर्णां गंभीरा संज्ञा ५। यत्रैकविंशतिर्गुरवः चतुर्विंशतिर्लघवः, यत्र द्वाविंशतिर्गुरवो लघवश्च, यत्र त्रयोविंशतिर्गुरवः विंशति-र्लघवः, यत्र च चतुर्विंशतिर्गुरवः अष्टादश लघवः, एषां चतुर्णां काली संज्ञा ६। यत्र पंचविंशतिर्गुरवः षोडश लघवः, यत्र षड्विंशति-र्गुरवः चतुर्दश लघवः, यत्र सप्तविंशतिर्गुरवः द्वादश लघवः, यत्र षड्विं[अष्टाविं]शतिर्गुरवः दश लघवः, एषां चतुर्णां कालरुद्राणी संज्ञा। अत्रैकगुरुवृद्धिमारभ्यागुरुचतुष्टयवृद्धिं प्रथमभेदकरणादुत्तरोत्तर-भेदानामपि तथैव विधानमुचितमित्यष्टौ भेदा बोध्याः। अत्रै-कोनत्रिंशद्गुर्वष्टलघुयुक्तः त्रिंशद्गुरुषड्लघुयुक्तश्चैतद्भेदद्वयम् अन्यदपि संभवति बाधकाभावात्, ग्रन्थकृता तन्नोक्तं, वस्तुतस्तु तदपि बोध्यम्। अथवा एतदपि भेदद्वयं कालरुद्राणीमध्ये पातनीयम्, एवं च कालरुद्राण्याः षड्भेदा बोध्याः। अथवा यत्र चत्वारो गुरवः अष्टपंचाशल्लघवः सा हंसी, यत्राष्टौ गुरवः पंचाशल्लघवः सा रेखा, यत्र द्वादश गुरवः द्विचत्वारिंशल्लघवः सा ताडंकिनी, यत्र षोडश गुरवः उदश [चतुस्त्रिंशत्] लघवः सा कालरुद्राणी, अत्र प्रथमं गुरुचतुष्टयवर्द्धनादुत्तरत्रापि तथैव [व]र्द्धनमुचितमिति

अथ रोला । (D & F).

पढम होइ[1] चउ[2]वीस[3]मत्त गुरु अंतर[4] जुत्ते
पिंगल होंति[5] सेस णाअ[6] तरिह[7] रोला उत्ते[8] ।
एग्गाराहा[9] हारा[10] रोलाछंदो[11] जुज्जइ[12]
एक्के एक्के[13] टुट्टइ[14] अस्तो अस्तो वड्ढइ[15] ॥ ९१[16] ॥

---

लोहांगिनीसहिता अष्टौ भेदा बोध्या इत्यस्मत्तातचरणोपदिष्टः पंथा निर्मत्सरैः सुधीभिर्विभावनीयः । (E).

९० । यत्र षट्षष्टिमात्राः सर्वलघुरूपा भवंति चेत्तदा लोहांगिनी । यत्र चत्वारो गुरवोऽष्टपंचाशल्लघवस्तदा हंसी । एवं रेखादीन्यपि नामानि भवन्तीत्यर्थः । केचित्तु अस्य षट्षष्टिकलाचरणांते चैकैकलघोरावश्यकत्वाद्वशिष्टानां षष्टिलघूनां मध्ये एकैकगुरुवृद्ध्या लघुद्वयह्रासे त्रिंशद्भेदा भवंतीति तन्नामानि सामान्येनाष्टावुक्तानीत्याहुः ॥ (G).

९१ । रोलाच्छन्दमा[त्रा]ह ॥ प्रथमे भवन्ति चतुर्विंशतिर्मात्राः गुरवः अन्तरा युक्ताः । पिङ्गलोऽभूत् शेषनागस्तेन रोला उक्ता ।

---

९१ । १ होहिं (E). २ चओ (B), चो (F), ३ बीसे (C). ४ अंतरा (C). ५ होंति (A), होन्ने (D), होंवे (E), होवे (F). ६ णाम (D), नाम (E). ७ तथि (B & C), ते चरु (D), तेरु (E), तरु (F). ८ वुत्ते (A, B, C & D). ९ एग्गार (B), एग्गारहा (F). १० हारो (B), हा (C). ११ छन्दो (C), छंदाचि (F), १२ जुणइ (A), जुजुभइ (B & C) १३ एक्कें एक्कें (D). १४ टुट्टे (B & C), टुटइ (D). १५ वढइ (A, B & C). १६ ८८ (A), ९१ (E), ९० (F).

एकादश हारा रोलाच्छन्दसि उच्यन्ते, एक एकस्तुटति अन्यदन्य-मामोत्तिष्ठति ॥ प्रथमे प्रथमपादे, एवं पादत्रयेऽपि बोध्यम् । अन्तरान्तरा गुरुयोगः कार्य्यः, तत्र स्थाननियमाभावाद् यथेच्छं हारो गुरवः, एकैकपादे एकादश, तत्रैकैकगुरुस्थाने लघुद्वयवशा-द्द्वादश नामानि भवन्ति ॥ (C).

९१ । अथ रोलावृत्तं लक्षयति पढम इति । यत्र पढम—प्रथमे चरणे, इदं च द्वितीयादीनामप्युपलक्षकं, गुरु अंतर जुत्ते—अंतरा गुरुयुक्ता मध्ये गुरुसंयुक्ता इत्यर्थः, चउवीस मत्त—चतु-र्विंशतिर्मात्राः, होहिं—भवंति, सेस नाग—शेषनागः, पिंगल होंते—पिंगलोऽभूत्, तेन्ह रोला उत्ते—तेन रोला उक्ता, एग्गाराहा हारा—एकादश हारा गुरवः द्विलघुयुक्ता इति शेषः, त्रयोदशाक्षरगणाम[स्था]ये वक्ष्यमाणत्वात्, रोला छंदो—रोला-छंदसि प्रतिचरणमित्यर्थः, जुज्झइ—युक्ता भवतीत्यर्थः, एक्के एक्के—एकेकः गुरुरिति शेषः, टुट्टइ—त्रुटति, त्रुटतीत्यर्थः, अण्णो अण्णो—अन्यः अन्यः लघुरित्यर्थः, वड्ढइ—वर्द्धते, तथाचाच प्रतिचरणमेकादश गुरवो लघुद्वययुक्ताः पतंति, तत्र चैकैकगुरु-ह्रासेन लघुद्वयवृद्ध्या द्वादशभेदा भवंतीत्यर्थः । एतल्लक्षणनिष्कर्षः । यथैतस्योदाहरणे संगतिस्तथानुपदमेव विवेचयिष्यामः । (E).

९१ । अथ रोला ॥ पढेति ॥ प्रथमं भवंति चतुर्विंशतिर्मात्राः गुरुणा अंतरा युक्ताः । पिंगल-भवता शेषेण नागेन तत्र रोलाया-मुक्ताः ॥ एकादश हारा रोलाच्छंदसि युज्यंते, एक एकस्तुटति अन्योऽन्यो वर्धते ॥ अत्रैकादश गुरवो लघुमिश्राः कार्याः, ते च

जहा,

पअभरु[1] दर[2]मरु[3] धरणि[4] तरणि रह[5] धुल्लिअ[6] झंपिअ
कमठ पिट्ठ[7] टरपरिअ[8] मेरु मंदर सिर[9] कंपिअ[10] ।
कोह[11] चलिअ[12] हमीर[13] बीर गअजूह[14] संजुत्ते[15]
किअउ कट्ठ[16] हाकंद[17] मुच्छि[18] मेच्छहके[19] पुत्ते ॥ ९२[20] ॥
[रोला]

---

गुरवः प्रत्येकचरणे कार्या इति संपूर्णे छंदसि वेति मतद्वयमपि संमतम् । गुरुलघुह्रासवृद्धौ वक्ष्यमाणानि नामानि भवंतीत्यर्थः ॥ ९० ॥ (G).

९२ । उदाहरति । पदभरेण दलमलिता धरणी तरणिरथो धूलिभिराच्छाद्यते, कमठपृष्ठं चलितं, मेरुमन्दरशिरः कम्पते । कोपेन चलितो वीरहम्मीरः गजरथसंयुक्तः, कष्टेन हत आक्रन्दो- मूर्च्छिता म्लेच्छपुत्रेण ॥ (C).

९२ । रोलामुदाहरति पअभरेति । यदा गअजूह संजुत्ते— गजयूथसंयुक्तः हंमीरवीरः, कोहे चलिअ—क्रोधेन चलितः, तदा

९२ । १ पयभर (B, C, D & E). २ दल (A), मर (F). ३ मर (C), मरि (E), दल (F). ४ धरणी (B). ५ रथ (B & C). ६ धूलिहि (A), धुलिहिं (B & C), धल्लिअ (F). ७ पीठ्ठ (A), पिट्ठि (B, C & D). ८ टरमलिअ (A). ९ मंद सिर (C). १० कम्पीअ (E). ११ कोहे (B & C), कोहिं (D), कोहें (F). १२ चलउ (B), चलिअ (C). १३ हम्मीर (A, D & F), वीर हम्मीर (B & C). १४ गअरह (C), गअजूअ (F). १५ संजुत्ते (A), सजुत्तें (D), सजुत्ते (F). १६ कट्ठे किअउ (B & C), कट्ठ (D), किएउ कट्ठ (E). १७ हाकन्दे (B). १८ मुच्छि (A), मुच्छिं (D). १९ मेच्छका (B), मेच्छरका (C), मेच्छिअके (D), मेच्छके (E & F). २० ८९ (A), ९१ (E), ९१ (F).

कुंद करअल[1] मेह[2] तालंक, करुद्द[3] कोइल[4] कमलु[5],
इंदु संभु[6] चामरु[7] गणेसरु[8], सहसक्खो[9] सेस भण[10],
णाअ राअ[11] जंपइ[12] फणीसरु[13] ।
तेरह अक्खर जं पलइ इग्गारह[14] वंकेहिँ[15] ।
अक्खर[16] अक्खर[17] जं चलइ[18] तं तं णाम कुणेहि[19] ॥

९३[20] ॥ रड्डा । [इति] रोला । (A).

---

धरणि — धरणिः, पअभर दरमरि — पादभरेण दलिता वेगधावद्दलितहयपत्तिप्रभृतिसेनासमूहचरणघातेन दलितेत्यर्थः, तरणि रह धुल्लिहि झंपिअ — तरणिरथः धूलिभिः प्रयाणोत्थरेणुभिश्छादितः, कमठपिट्ठ टरपरिअ — क[म]ठपृष्ठमधस्तात् गतं, मेरु मंदर सिर कंपीअ — मेरुमंदरशिरः कंपितं, मेच्छके पुत्ते — म्लेच्छानामपि पुत्रैः, कट्ठ — कष्टं यथा स्यात्तथा, हाकंद — हाक्रंदः, किएउ — कृतः, मुच्छि — मूर्छितं च । अत्र किएउ इत्येकारः एओ सुद्धा बि — इत्युक्तत्वाल्लघुर्बोध्यः, अन्यथा पंचविंशतिमात्रापत्तिः ॥ (E).
[ Vide श्लोक ५, p. 7.—Ed.]

---

९२। १ करअल (B). २ मेघ (E). ३ कलिरुद्द (F). ४ किल (A), कोइल (B). ५ कमल (E). ६ चंदु (A, B & C), इंदु omitted and चार added after चामर in (C). ७ चाचम (D), चामर (E). ८ गणेसर (B). ९ सहसक्ख (A, D & E), सहसक्खो (B), सहसक्ख (C). १० भणु (D), भणिअ (E). ११ राअ (D). १२ जम्पइ (B). १३ फणेसर (A). १४ एगारह (A), एग्गारह (D & E); चमा and thereafter dropt up to चलइ in (F). १५ गुरु देह (A), गुरु देउ (D), जेहि (E). १६ अक्खरे (B & C). १७ अक्खरे and thereafter dropt up to चलइ in (B). १८ चलइ (D). १९ मुणेह (A), मुणेउ (D), विआणेउ (F). २० ९० (A), ९२ (F).

९२ । यथा ॥ पद्म ॥ पद्भरेण मर्हिता धरणी तरणिरथो-धूल्या आच्छादितः । कमठपृष्ठमधः पतितं मेरुमंदरयोः शिरः कंपितम् ॥ कोपेन चलिते हम्मीरवीरे गजयूथसंयुक्ते । कृतः कष्ट-आक्रंदः मूर्छितं मे[च्छ]च्छानां पुत्रैः ॥ ९१ ॥ (G).

९३ । नामान्याह । कुन्दकरतलमेघताटङ्ककालरुद्रकोकिल-कमलानि, चन्द्रशम्भुचामरगणेश्वरान् सहस्राक्षं शेषं भण, नागराजो जल्पति फणीश्वरः ॥ त्रयोदशाक्षराणि यत्र पतन्ति एकादशवक्रैः गुरुभिः । एतेन एकादश गुरवो, लघु[द्वयम्]। अक्षरे अक्षरे चलति यदि तत्तन्नाम कुरु ॥ (C).

९३ । अथैतद्भेदानयनप्रकारं तेषां च नामानि रड्डाद्वयेनाह, कुंद करअलेति । जेहि — येषु, एग्गारह गुरु — एकादश गुरवः, एवंभूतानि, तेरह अक्खव[र] — त्रयोदशाक्षराणि, जं — यत्र, पलइ — पतंति, त्रयोदशाक्षरमध्ये एकादश चेत् गुरवस्तदोर्वरित-मक्षरद्वयं तल्लघुरूपमित्यर्थात्सिद्धं, तथाच द्विलघुयुक्ता एकादशगुरवः एवं प्रतिचरणं यत्र त्रयोदशाक्षराणि पतंतीत्यर्थः, तेषु यदि अक्खर अक्खर — अक्षरमक्षरमेकैको गुरुरित्यर्थः, जं चलइ — यत्र चलति च्यवतीत्यर्थः, तदा कुंदं, १, करतलं २, मेघः ३, ताडंकः ४, काल-रुद्रः ५, कोकिलः ६, कमलं ७, इंदुः ८, शम्भुः ९, चामरं १०, गणे-श्वरः ११, सहस्राक्षः १२, इति, तं तं — तत्तत् नाम, कुणेहि — कुरु इति नागराजः फणीश्वरः शेषः पिंगलः, जंपइ — जल्पति इति, भणिम — भणितं पूर्वाचार्यैरिति शेषः । इदमत्र तत्त्वम्, — रोलायां चतुर्विंशतिर्मात्राः प्रतिचरणं देया इत्यावश्यकं, तत्र प्रकारद्वयेन

संभवति, लघुद्वययुक्तैकादशगुरुदानेन, यथेच्छं गुरुलघुदानेन वा। एवं च पूर्वं लक्षणद्वयं कृतमिति बोध्यं, तथाहि पढमेति पूर्वार्द्धेनैकं, एग्गाराहा हारा इत्युत्तरार्द्धेन च द्वितीयं। तत्र यदि यथाकथंचिच्चतुर्विंशतिर्मात्रा अंतरा अंतरा गुरुयुक्ताः क्रियंते, तदा रोलावृत्तं भवतीति प्रथमलक्षणार्थः। यदि च लघुद्वययुक्तैकादशगुरुभिश्चतुर्विंशतिर्मात्राः क्रियंते, तदापि रोलावृत्तं भवतीति द्वितीयलक्षणार्थः। तत्र पश्चभ इत्युदाहरणं प्रथमलक्षणाभिप्रायेण, भेदानयनप्रकारस्तु द्वितीयलक्षणाभिप्रायेण प्रदर्शितमित्यवधेयम्।

एवं च यत्रैकादश गुरवः अंते च द्वौ लघू, एवं त्रयोदशाक्षराणि चतुर्विंशतिर्मात्राश्च प्रतिचरणं पतंति सः कुंदः, यत्र दश गुरवः एवं चतुर्द्दशाक्षराणि चतुर्विंशतिर्मात्राश्च प्रतिचरणं पतंति सः करतलम्, एवं पूर्वभेदापेक्षया उत्तरत्र भेदे एकगुरुन्यूनक्रियया लघुद्वयमेकमक्षरं च वर्द्धते तदा ते ते भेदा ज्ञेयाः, ते लिखित्वा प्रदर्श्यंते। [There is a blank space here]. यद्वा पूर्वोक्तमेकमेव लक्षणं, तत्र च कथमंतरांतरा गुरुयोगः कर्त्तव्यइत्यपेक्षायामाह एग्गाराहा हारेति, तथा च द्विलघुयुक्तैकादशगुरुषु एकैकगुरुह्रासेन लघुद्वयवृद्ध्या अंतरांतरा गुरुयोगस्तु कर्त्तव्य इति भावः। न चैवं सत्युदाहरणासंगतिरिति वाच्यमव्यवहितपूर्वोक्ते रसिकानामके वृत्ते इवात्रापि भेदकरणात्। [Vide श्लोक ६०, p. 153.—Ed.]

तथाहि यत्र चरणचतुष्टयपिंडीभूताश्चतुश्चत्वारिंशद्गुरवः अष्टौ लघवः, यत्र च त्रयश्चत्वारिंशद्गुरवो [दश लघवः, यत्र च द्विचत्वारिंशद्गुरवो] द्वादश लघवः, यत्र च एकचत्वारिंशद्गुरवश्चतुर्दश

लघवः, एषां चतुर्णां कुंदसंज्ञा । एवं चत्वारिंशद्गुरुषोडशलघुकमारभ्य सप्तत्रिंशद्गुरुद्वाविंशतिलघुकपर्यंतं चतुर्णां करतलसंज्ञा २ । एवं षट्त्रिंशद्गुरुचतुर्विंशतिलघुकमारभ्य त्रयस्त्रिंशद्गुरुत्रिंशल्लघुकपर्यंतं चतुर्णां मेघसंज्ञा ३ । एवं द्वात्रिंशद्गुरुद्वात्रिंशल्लघुकमारभ्य एकोनत्रिंशद्गुरु-अष्टत्रिंशल्लघुकपर्यंतं चतुर्णां ताढंकसंज्ञा ४ । एवमष्टाविंशतिगुरुचत्वारिंशल्लघुकमारभ्य पंचविंशतिगुरुषट्चत्वारिंशल्लघुकपर्यंतं चतुर्णां कालरुद्रसंज्ञा ५ । एवं चतुर्विंशतिगुरु-अष्टचत्वारिंशल्लघुकमारभ्य एकविंशतिगुरुचतुःपंचाशल्लघुकपर्यंतं चतुर्णां कोकिलसंज्ञा ६ । एवं विंशतिगुरुषट्पंचाशल्लघुकमारभ्य सप्तदशगुरुद्विषष्टिलघुकपर्यंतं चतुर्णां कमलसंज्ञा ७ । एवं षोडशगुरु-चतुःषष्टिलघुकमारभ्य त्रयोदशगुरुसप्ततिलघुकपर्यंतं चतुर्णां इंदुसंज्ञा ८ । एवं द्वादशगुरुद्विसप्ततिलघुकमारभ्य नवगुरु-अष्टसप्ततिलघुकपर्यंतं चतुर्णां शम्भुसंज्ञा ९ । एवमष्टगुरु-अशीतिलघुकमारभ्य पंचगुरुषडशीतिलघुकपर्यंतं चतुर्णां चामरसंज्ञा १० । एवं चतुर्गुरु-अष्टाशीतिलघुकमारभ्य एकगुरुचतुर्णवतिलघुकपर्यंतं चतुर्णां गणेश्वरसंज्ञा ११ । एवं सर्वलघुः सहस्राक्षः १२ । इत्थं च भेदानयनप्रकारः ।

जेहि—येषु एगारहगुरु—एकादशगुरुकः द्वौ लघू, एवंभूतानि जं—यत्र तेरह अक्खर—त्रयोदशाक्षराणि पलइ—पतंति, इत्थं यत्र चरणचतुष्टये द्विपंचाशदक्षराणि स्थापयित्वेति शेषः, अक्षरमक्षरं एकैको गुरुः यावद्गुरुचतुष्टयं भवति तदा कुंदादि तत्तन्नाम कुरु इति व्याख्येयम् । एवं द्वा[एक]विंशतिगुरुयुक्तं

पञ्चभरेत्युदाहरणं [Vide श्लोक ८१, p. १५७। —Ed.] कोकिलाद्य-ष्टभेदाभिप्रायमिति सर्वं सुस्थमित्यस्मत्तातचरणोपदिष्टः पंथाः सुधीभिर्विभावनीयः ।

कश्चित्तु [* * *] चयोदशगुरु १ स [?] कालरुद्रः, यत्राष्टौ गुरवोऽशीतिर्लघवः स कोकिलः, यत्र सप्त गुरवो द्व्यशीतिर्लघवस्तत्कमलं, यत्र षड्गुरवश्चतुरशीतिर्लघवः स इंदुः, यत्र पंच गुरवः षडशीतिर्लघवस्तच्चामरं, [* * *] यत्र त्रयो गुरवो नवतिर्लघवः स गणेश्वरः, यत्र गुरुद्वयं [द्वि]नवतिर्लघवः स सहस्राक्षः, यत्रैको गुरुश्चतुर्णवतिर्लघवः स शेषनामा चयोदशतमो भेदः, इत्थं शेषइति नामवाचकमेव मत्वा चयोदशभेदानाह। तदनवधानात् इत्थं भेदानयनस्य ग्रंथादनुपलब्धेः, यतः प्रतिचरणं लघुद्वययुक्तैकादश-गुरुषु चरणचतुष्टयसमुदितचतुश्चत्वारिंशद्गुरुषु वा एकैकगुरुह्रासेन लघुद्वयवृद्ध्या भेदानयनं ग्रंथकारस्येन प्रतिपत्तेः, न तु चयोदश-गुरुषु सेच्छया। इत्थं यथाकथंचित् षणवतिमात्रामवलंब्य भेदकरणे विंशतिर्गुरवः षट्पंचाशल्लघवस्तेषु एकैकगुरुह्रासेन विंशतिर्भेदा-श्चायांति। एवं चिंशद्गुरवः[स्तेषु] षट्चिंशद्गुरुषु वा एकैकगुरुह्रासेन लघुद्वयवृद्ध्या भेदानयनं ग्रंथकारस्येन प्रतिपत्तेः न तु चयोदश-गुरुचिंशद्भेदा [?] भवंति। एवं यथाकथंचित्तावन्मात्रामात्रपूर-कतावत्तावद्गुरुलघ्वापादनेन यथारुचि तावत्तावद्भेदापत्तेर्दुर्वारत्वात्, तदुक्तरीत्या चतुर्दशतमभेदापत्तिरपि दुर्वारा, तस्मात्रैको गुरुराव-श्यको येन गुरुराहित्येन गाथायामिवाचाप्यनिष्टमापद्येत उदा-हरणासंगतिश्च स्पष्टैवेति विभावनीयं वक्ष्यमाणकाव्यच्छन्दःस्वप्यय-

अथ गंधाना। (D).

दहसत्त वस्स पढमपअ भणहु[1] सुअणा
तह बीअम्मि[2] अट्ठारहहिँ[3] जमअ[4] जुअ चरणा।
एरिसिअ[5] बीअ[6] दल कुणहु[7] भणइ पिंगलो[8]
गंधाणा[9] णाम रूअउ[10] हो[11] पंडिअ जण[12] चित्तहरो[13]॥
९४[14]॥ [गंधाण]

---

मेव भेदः यत्काव्ये लघुद्वयं जगणाद्यंतर्गतं मध्ये पतति, अत्र तु यथेच्छमिति। (E).

९३। रोलानामान्याह॥ कुंदेति॥ कुंदं १, करतलं २, मेघः ३, तालंकः ४, कलिरुद्रः ५, कोकिलः ६, कमलं ७, इंदुः ८, शंभुः ९, चामरं १०, गणेश्वरः ११, सहस्राक्षः शेषो भण नागराजो जल्पति फणीश्वरः॥ त्रयोदशाक्षराणि यत्र पतंति अये तन्नाम विजानीहि॥ अत्र द्विलघुमारभ्य चतुर्विंशतिलघुपर्यंतं द्वादश कुंदादीनि नामानि भवंतीति केचित्॥ सहस्राक्षः सहस्रभुज इति शेषं विशिष्य एकादशनामानीति इतरे। रोलेति सर्वगुरोर्नामेति केचित्॥ (G).

---

९४। १ सुणह (A), भणह (C), कुणउ (F). २ विचक्कि (D), बीअंमि (E). ३ अठारहिँ (A), अठारहइ (E), अठ्ठारहहि (F). ४ जमजुअ (B). ५ एरिस (A), एरिसअ (B), एरीसअ (C), एरिसं (F). ६ बिअ (A). ७ कुणह (A & B), कुण (C). ८ पिंगल (A). ९ गंधाण (B & E), गंधा (C). १० रूअअउ (A), रूअओ (B & C), रुअ (E). ११ होइ (A & E). १२ जणे (E). १३ चित्तहरा (A), चित्तहरो (B & C), चितंहरो (D). १४ ९१ (A), ९४ (E), ९२ (F).

दह सत्तक्खर[१] संठवहु पढमचरण गंधाण ।
बीअक्खर[२] पुणु[३] जमअ दइ[४] अट्ठारहइ[५] विआण ॥ ६५[६] ॥
दोहा ।

---

६४ । दशसप्तवर्णान् प्रथमपादे भणत संस्थापयत हे सुजनाः, तथा द्वितीयेऽष्टादशवर्णाः, यमकयुतास्चरणाः । चरणः पादः । एतादृशञ्च द्वितीयार्द्धं कुरुत —— भणति पिङ्गलो गन्धनाम रूपकं छन्दः भवति पण्डितचित्तहरम् ॥ (C).

६४ । अथ गंधाननामकं वृत्तं लक्षयति दहसत्त बलेति । हे सुअणा — सुजनाः पढमपअ — प्रथमपादे दहसत्त — सप्तदश बल — वर्णान् भणह — भणत, तह — तथा, बीअंमि — द्वितीयेऽपि, जमअजुअचरणा — यमकयुते चरणे, अठारहइ — अष्टादशैव वर्णान्, भणतेति पूर्वेणान्वयः । एरिसिअ बीअ दल कुणऊ — एतादृश-मेव बीअ दल— द्वितीयं दलम् उत्तरार्द्धमिति यावत् कुणऊ — कुरुत, तृतीयचरणं सप्तदशवर्णयुक्तं चतुर्थं चाष्टादशवर्णयुक्तमिति यावत् । इअ — इदं, पंडिअजण चित्तहरणो — पंडितजनचित्तहरं, गंधाण णाम — गंधाननामकं वृत्तं होइ — भवति इति पिंगलो — पिंगलः भणइ — भणति ॥ ६४ ॥ (E).

६४ । अथ गंधाण ॥ दशेति ॥ दशसप्तवर्णाः प्रथमे पदे कुरुत

---

६५ । १ सत्त अक्खर (C). २ बीअ अक्खर (A), बीए (B), बिअ अक्खर (E), बीअ पुण (F). ३ पुण (E & F). ४ देइ (A & E), जमअं दइअ (F). ५ अट्ठारहउ (B & C), अट्ठारहवि (F). ६ ६९ (A), ६५ (E), ६४ (F).

जहा, कम्म चलंते कुम्म चलइ पुणवि[1] असरणा
कुम्म चलंते महि[2] चलइ भुअण[3] भअ करणा ।
महिअ चलंते महिहर तह[4] असुर[5]अणा
चक्कवइ[6] चलंते चलइ चक्क[7]तह[8] तिहुअणा ॥ ९६[9] ॥
गंधाण[10] । (A).

---

सुजनाः । तथा द्वितीयेऽष्टादश एवं यमकयुगचरणाः ॥ पु[न-]
स्तादृशं द्वितीयदलं कुरुत भणति पिंगलः । गंधाननाम रूपकं
भवति पंडितजनचित्तहरम् ॥ ९३ ॥ (G).

९५ । दशसप्ताक्षराणि संस्थापय प्रथमचरणे गन्ध[स्या]नायाः ।
द्वितीयेऽष्टादशाक्षराणि पुनर्यमकं देहि विजानीहि ॥ (C).

९५ । अथ गंधानकमेव दोहावृत्तेन स्पष्टयति दहसत्तक्खरेति ।
पढमचरण — प्रथमचरणे, गंधाण — गंधानस्य, दहसत्तक्खर — सप्त-
दशाक्षराणि संठवहु — संस्थापयत, बिअ — द्वितीये चरणे, अक्खर
— अक्षराणि पुनः, अट्ठारहइ — अष्टादशैव, जमअ देइ — यमकं
दत्त्वा, बिआण — विजानीहि ।

अत्र च वर्णनियम एव न तु मात्रानियम इति बोध्यम् ।
९५ । (E).

[It would have been better placed in the 2nd part among (वर्णवृत्तं) Varṇavṛittas.—Ed.]

---

९६ । १ पुणवि (D). २ महौ (F). ३ भुअ भअ (A). ४ चलइ तथा (A), न वेचिं (E). ५ सुर (E). ६ चक्कवई (D). ७ चक्कु (A). ८ जण (B & C), जेडं (E). ९ ९३ (A), ९९ (E & F). १० गंधाणा (B & C).

८५। दोहया पुनस्तदेवाह॥ दहेति॥ षमद्गाचराणि स्थापय प्रथमे चरणे गंधानस्य। द्वितीये पुनर्यमकं दत्वा अष्टादश अचराणि विजानीत॥ ८४॥ (G).

८६। उदाहरति। यथा राजविशेषे कर्णे चलति कूर्मश्चलति, पुनरपि अग्रचरणे कूर्मे चलति सति मही चलति भुवनभयकरी। मह्यां चलन्त्यां महीधराश्चलन्ति, सुरगणाश्चलन्ति, चक्रवर्तिचलने चलति चक्रवद्यावत्त्रिभुवनम्॥ (C).

८६। अथ गंधानमुदाहरति कण चलंते इति। चक्कवइ—चक्रवर्तिनि कण—कर्णे चलंते—चलति सति, कुम्म चलइ—कूर्मश्चलति, कुम्म चलंते—कूर्मे चलति सति, असरणा—अशरणा कूर्मचलनादधिष्ठानरहितेति भावः, भुअण भअ करणा—भुवनभयकर्त्री पुणवि—पुनरपि महि चलइ—मही चलति, महिअ चलंते—मह्यां चलंत्यां, [महिहर]—महीधरः मेरुः चलतीति पूर्वेणान्वयः। सामान्यवचनमपि महीधरपदं विशेषपरं बोध्यम्। तेहि—तस्मिन् महीधरे चलति सति, सुरअणा—सुरगणश्चलति, मेरोरधिष्ठानत्वात् सुरगणस्येति भावः, एवं जेऊं चक्क—यथा चक्रं तथा तिऊअणा—त्रिभुवनं चलति। अत्र जेऊं इति एकारो लघुर्बोध्यः [?]॥ ८६॥ (E).

८६। यथा॥ कश्चित्कर्णं स्तौति॥ कर्णे चलिते कूर्मश्चलति पुनरपि अशरणः, कूर्मे चलति मही चलति भुवनभयकारिणी। मह्यां चलंत्यां महीधरास्तथा असुरगणाः, चक्रवर्तिनि चलिते चलति चक्रं तथा त्रिभुवनम्॥ ८६॥ (G).

अथ चौ[चउ]पइआ ।

चउपइआ छंदा भणइ फणिंदा
चउमत्ता गण[1] सत्ता,
पाएहि[2] सगुरु[3] करि[4] तीस मत्त धरि
चउ सअ असिअ णिरुत्ता ।
चउ छंद लविज्जइ[5] एक्कु[6] ण किज्जइ
को जाणइ एहु[7] भेउ[8],
कइ[9] पिंगल भासइ छंद पआसइ
मिअणअणि अमिअ[10] एहु[11] ॥ ९७[12] ॥

९७। चतुष्पदं छन्दः भणति फणीन्द्रः चतुर्मात्रिकाः सप्तगणाः भवन्ति पादे पादे सगुरुं कृत्वा एवं त्रिंशन्मात्रा धार्य्यन्ते। चतुश्चरणसंख्यामाह, चत्वारिंशता [चतुःशतं] अशीतिर्निरुक्ता, एतच्छन्दश्छन्दश्चतुष्टयेन लभ्यते, एकेन पादेन क्रियते, को जानाति इमं भेदं, कविः पिङ्गलो भाषते, हे मृगनयने अमृतमेतत् ॥ (C).

९७। अथ चतुःपादिकां लक्षयति चउपइआ इति। पाएहि —पादे एकैकचरणे इत्यर्थः, चउमत्ता—चतुर्मात्रिकान्, [गण सत्ता]—गणान् सप्त, सगुरु करि—सगुरून् कृत्वा, गुरुयुक्तान्

९७। १ मत्ता (E). २ पाए (A, B & C). ३ सगुरू (F). ४ कर (D). ५ लेक्खिअइ (E). ६ एक्क (B & C). ७ एच (A), एउ (F), ए should be read as short, vide श्लोकः ५, p. 7—Ed. ८ भेउ (B, D & F), भेच (E). ९ कवि (B). १० अमि (A). ११ एऊ (B, C & D), एउ (E & F). १२ ९८ (A), ९० (E & F).

सप्तचतुर्मात्रिकान् गणान् विधायेत्यर्थः, एवं तीस मत्ता धरि—त्रिंशन्मात्रा धृत्वा, चउपइआ छंदा—चतुःपादिकाच्छन्दः, फणिंदा—फणीन्द्रः पिंगलः भणइ—भणति। तत्र विशेषमाह चउछंदेति। इदं वृत्तं चतुश्छंदांसि लेकिज्जइ—गृहीत्वा क्रियते, एक्क—एकं छंदः गृहीत्वा ण किज्जइ—न क्रियते, वृत्तचतुष्टयेनैकं पद्यं विधेयं, न लेकेनैव वृत्तेन। तथाच षोडशचरणैरिदं कर्त्तव्यं, न तु चतुर्भिश्चरणैरिति भावः। एवं चात्रेति शेषः, चउसअ-असिअ—चतुश्शतमशीतिश्च मात्रा इति शेषः, णिरुत्ता—निरुक्ताः कथिता-इत्यर्थः, मिअणअणि—हे मृगनयने, एऊ भेअ—एतं भेदं, को जाणइ—कः पिंगलातिरिक्तः जानाति, एअ[उ]—एतच्छंदः [अमिअ]—अमृततुल्यमित्यर्थः, पआसइ—प्रकाशते इति कइ—[कविः] पिंगलो भाषते। अत्र चतुर्मात्रिकसार्द्धसप्तगणात्मकचरणं चतुर्गृणीक[त्वे]त्यर्थः एकश्चरणो विधेयः, एवं चत्वारश्चरणा विधेया-इति फलितार्थः॥ ९७॥ (E).

९७। अथ चतुःपदिकाच्छन्दः॥ चउ. इति॥ चतुःपदिका-च्छन्दो भणति फणीन्द्रश्चतुर्मात्रान् गणान् सप्त पादे सगुरून् कुरु। त्रिंशन्मात्रा धारय॥ जायते युवमिति शेषः [?]॥ चतुःशतमशी-तिर्निरुक्ता॥ चतुश्छंदांसि लेख्यंते॥ एकं न क्रियते॥ को जाना-त्येतान् भेदान् कविः पिंगलो भाषते, छंदः प्रकाशते, मृगनयने अमृतमेतत्॥ चतुःपदीच्छन्दोऽशीत्यधिकचतुःपंचशत[चतुःशत]मा-त्राकं षोडशचरणं कार्यं, चतुश्चरणं न प्रयोज्यमित्यर्थः॥ त्रिंशदंके षोडशगुणिते सं ४८०॥ (G).

जहा, जसु[1] सीसह[2] गंगा गोरि अधंगा
गिव[3] पहिरिअ[4] फणिहारा,
कंठट्ठिअ वीसा[5] पिंधण दीसा
संतारिअ संसारा ।
किरणावलि कंदा[6] बंदिअ[7] चंदा
णअणहि अणल[8] फुरंता,
सो संपअ[9] दिज्जउ[10] बहु सुह किज्जउ[11]
तुम्ह[12] भवाणीकंता ॥ ९८[13] ॥

चउपइआ । (A, B & C).

९८ । उदाहरति । यथा, यस्य शीर्षे गङ्गा गौरी अर्द्धाङ्गे ग्रीवाप्र[परि]धानं फणिहारः, कण्ठस्थितं विषं, परिधानं दिक्, संता[ता]रितसंसारः । किरणावलिकन्दो वन्दितचन्द्रः नयनेऽनलः स्फुरति, स मङ्गलं करोतु, बहु सुखं ददातु तव भवानीकान्तः ॥ किरणावलीनां कन्दः मूलं, वन्दितस्तिलकीकृतश्चन्द्रो येन सः तथा । (C).

९८ । चतुःपादिकामुदाहरति जसु सीसहि इति । जसु

९८ । १ जस्सु (F). २ सीसे (A), सीसह (D). सीसहि (E), सीस (F). ३ गिव (A), गिम (B & C). ४ पिंधिअ (A), पिन्धअ (B & C), परिहिअ (F) ५ विसा (C). ६ कन्दा (B). ७ वंदिअ (D & F). ८ अनल (F). ९ संपअ (A, B & C). १० दिज्जउ (C) ११ दिज्जउ (C). १२ तुम्ह (B, C, D & F). १३ ९६ (A). ९८ (E & F).

अथ घत्ता । (D & F).

पिंगल कइ दिट्ठउ[1] छंद उकिट्ठउ[2]
घत्त मत्त बासट्ठि[3] करि ।
चउ[4] मत्त सत्त गण बे बि पाअ भण
तिणि तिणि लहु अंत धरि ॥ ९९[5] ॥

सीसहि गंगा — यस्य शीर्षे गंगा शोभितेति शेषः, यस्य गोरि अधंगा — गौर्यर्द्धांगः गौरी अर्द्धांगे यस्य तादृश इत्यर्थः, गिव पहिरिअ फणिहारा — ग्रीवापरिहितफणिहारः ग्रीवायां परिहिताः फणिहारा येन तादृश इत्यर्थः, कंठट्ठिअ बीसा — कंठस्थितविषः, पिंधणदीसा — दिक्पिंधनः दिक् पिंधनमाच्छादनं यस्य स इत्यर्थः, संतारिअ संसारा — संतारितः संसारः येन च, किरणावलिकंदा — किरणावलिकंदः, बंदिअ — वंदितः चंदा — चंद्रः भाले धृत-इत्यर्थः, यस्य च णअणहि — नयने तृतीये नेत्रे अणल फुरंता — अनलः स्फुरन्नस्तीति शेषः, सो — सः भवाणीकंता — भवानीकांतः शिवः, तुह्म — युष्मभ्यं संपअ दिज्जउ — संपदं दद्यात्, बहु सुह किज्जउ — बहु सुखं कुरुतात् । अत्र एक एव चरण उदाहृतः, एतादृशा अन्ये चयश्चरणाः सुधीभिः स्वयमुदाहरणीयाः ॥ ९८ ॥ (E).

९८ । तत्र चरणोदाहरणं यथा ॥ जस्सु इति ॥ यस्य शीर्षे गंगा गौरी अर्धांगे ग्रीवापरिहितफणिहारः कंठस्थितविषः पिंधनदिक्

९९। १ दिट्ठउ (B & C). २ उकिट्ठउ (B & C), उक्किट्ठउ (F). ३ बासट्ठि (B & C). ४ चौ (E & F). ५ ९१ (A), ९९ (E), ९८ (F).

पढमं दह बीसामो[१] बीए मत्ताइँ अट्ठाइँ[२]।
तीए तेरह बिरई[३] घत्ता मत्ताइँ बासट्ठि[४] ॥ १००[५] ॥

गाहू।

---

मंतारितसंभार: ॥ किरणावलिकंदो नंदितचंद्रो नयनेऽनल: स्फुरति, स संपदं ददातु बहु सुखं करोतु युष्माकं भवानीकांत: ॥ ९८ ॥ (G).

९९। अथ घत्ताच्छन्द:। पिङ्गलकविदृष्टं छन्द उत्कृष्टं घत्ता द्विषष्टि: मात्रा: कार्य्या:, चतुर्मात्रान् अष्ट[सप्त] गणान् द्वयोरपि पदयो: त्रीन् त्रीन् लघूनन्ते धृत्वा ॥ (C).

९९। अथ घत्तानामकं वृत्तं लक्षयति पिंगल कइ इति। बे बि पाअ—द्वयोरपि पादयो:, तिणि तिणि लहु—त्रीन् त्रीन् लघून्, अंत धरि—अंते पदांत इति यावत् धरि—धृत्वा, चउमत्त सत्त गण—चतुर्मात्रिकान् सप्त गणान् भण—कथय, एवं बासट्ठि मत्त—द्विषष्टिर्मात्रा: करि—कृत्वा, छंद उकिट्ठउ—छंदस्सूत्कृष्टां, पिंगल कइ दिट्ठउ—[पिंगलकवि-]दृष्टां, घत्त—घत्तां जानीहीति शेष:। अयमर्थ:—घत्ता द्विपदी, तत्र चतुर्मात्रिकसप्तगणानंतरं लघुत्रयं प्रत्येकं विधेयमिति ॥ ९९ ॥ (E).

९९। अथ द्विपदी घत्ताच्छन्द:। पिंगलेति ॥ पिंगलकविदृष्टं

---

१००। १ बिस्सामो (B & C). २ अट्ठारं (B & C), अट्ठाहि सुमणाहि (F). ३ बिरइ (A, B & C). ४ बासट्ठी (B & C). बासट्ठो (D). ५ ९० (A), १०० (E) ९९ (F).

जहा, रणदक्ख दक्ख हणु जिसु[1] कुसुमधणु
अंधअ गंध[2] बिणासकरु ।
सो रक्खउ संकरु[3] असुर भअंकरु
गिरिणारि अद्धंग[4] धरु ॥ १०१[5] ॥

घत्ता । (A, B & C).

---

छंद उत्तइं घत्तां मात्राद्विषष्ट्या कुरु ॥ चतुर्मात्राः सप्त गणाः द्वयोरपि पादयोर्भण, त्रयस्त्रयोलघवोऽन्ते धार्याः ॥ ९८ ॥ (G).

१०० । अथ विरतिमाह । प्रथमं दशसु विश्रामः, द्वितीये मात्राष्टसु, तृतीये मात्रासु त्रयोदशसु विरतिर्घत्तामात्राः द्विषष्टिः ॥ दशमात्रानन्तरं प्रथमो विरामः, ततोऽष्टमात्रानन्तरं द्वितीयः, ततः त्रयोदशमात्रानन्तरं तृतीयः । एवं द्वितीयपादेऽपि । एवं क्रमेण एकपादे एकविंश[त्रिंशत्]मात्राः द्वितीये चैकत्रिंशदिति द्विषष्टिर्मात्राः, द्विपदी घत्ता, तदिदमुक्तं बे वि पाअ भणेति ॥ (C). [Vide *śloka* 99.—Ed.]

१०० । अथ घत्तायां यतिनियममाह पढममिति । [पढमं]— प्रथमं, दह वीसामो—दशसु मात्रासु विश्रामः, बीए—द्वितीये ठाने अट्ठाइ मत्ताइ—अष्टसु मात्रासु विश्राम इति पूर्वेणान्वयः, तीए—तृतीये तेरह—त्रयोदशसु मात्रासु, विरई—विरतिः,

---

१०१ । १ जिणि (B), जिनसु (D). २ कम्म (C), चंधचंधकमंध (E). ३ स dropt in (D). ४ चधद्ध (B), गोरिद्धरि चढंग (D), गोरिद्धारि चढंग (E). गोरिद्धारि चंधंग (F). ५ ९८ (A), १०१ (E), १०० (F).

अथ घत्तानंद । (D).

सो घत्तह[1] कुलसारु किज्जि अपारु[2]
णाअराअ पिंगल कहइ[3] ।
एआरह बीसाम[4] णंदउ णाम
पुणुबि[5] सत्त तेरह बिरइ ॥ १०२[6] ॥

एवं घत्ता — घत्तायां मत्ताइ बासट्ठि — मात्राः द्विषष्टिः भवंतीति शेषः । यतिकथ[न]क्रमेणैकत्रिंशन्मात्रा लभ्यंते, ताश्च द्वयोर्दलयोः प्रत्येकं देया इति संभूय द्विषष्टिमात्रिका घत्ता भवतीति भावः ॥ १०० ॥ (E).

१०० । पढेति ॥ प्रथमो दशसु विश्रामो द्वितीयोऽष्टसु मात्रासु । तृतीयस्त्रयोदशसु विरतिर्घत्तायां मात्रा द्विषष्टिः ॥ ९९ ॥ (G).

१०१ । उदाहरति । यथा, रणदक्षदक्षहन्ता जितकुसुमधनुः अन्धकस्कन्धविनाशकरः । स रक्षतु शङ्करः असुरभयंकरः गिरिनागर्य्यर्द्धाङ्गधरः ॥ (C):

१०१ । अथ घत्तामुदाहरति रणदक्खेति । येन रणदक्ख — रणदक्षः संग्रामकुशल इति यावत्, दक्ख — दक्षः, हणु[णु] — हतः, येन च कुसुमधणु — कुसुमधन्वा कंदर्पः जिणु — जितः, यश्च अंधअ गंध विणासकरु — अंधगंधविनाशकरः, गिरिणाअरि अद्धंग धरु — गिरिनागर्यर्द्धांगधरः गिरिनागरी पार्वती अर्द्धांगे धरति यस्तादृश-

१०२ । १ घत्ता (F). २ अपार (E). ३ भणइ (A). ४ बिस्साम (B & C), बीसमन (E). ५ पुनवि (A & E). ६ ९९ (A). १०२ (E), २ (F).

इत्यर्थः, असुर भअंकरु—असुरभयंकरः, सः शंकरः रक्खउ—रक्षतु मामिति शेषः ॥ १०१ ॥ (E).

१०१ । रणेति ॥ रणदक्षो दक्षो हतो जितः कुसुमधनुः अंधकासुरगंधविनाशकरः । स रक्षतु शंकरोऽसुरभयंकरो गौरीनार्द्धांगधरः ॥ १०० ॥ (G).

१०२ । अथ घत्तानन्दच्छन्दः । स घत्ताकुलसारः कीर्त्त्यापारः नागराजः पिङ्गलः कथयति । एकादशसु विश्रामः नन्दनामा पुनरपि सप्तसु चयोदशसु विरतिः ॥ पूर्व्वं दशादिमाचासु विराम उक्तः, अच एकादश इति विशेषः । घत्ताकुलसारलकथनात् नन्दनामकथनाच्च घत्तानन्देति नाम लभ्यते । (C).

१०२ । अथ घत्तानंदं लक्षयति सो घत्तह कुलेति । यच प्रथमं एआरह वीसाम—एकादशसु माचास्विति शेषः, अग्रेऽपि योजनीयः, वीसाम—विश्रामः, पुणवि—पुनरपि द्वितीये तृतीये च स्थाने इत्यर्थः, सत्त तेरह—सप्तसु माचासु चयोदशसु माचासु च, विरइ—विरतिर्भवतीति शेषः, [सो—]तत् घत्तह कुलसार[ह]—घत्तानामकं यद्वृत्तं तत्र्यातिश्रेष्ठमित्यर्थः, णंदउ णाम—नंदनामकं वृत्तं विद्धि इति शेषः । इति किन्ति अपार—अपारकीर्त्तिर्नागराजः पिंगलः कहइ—कथयति ॥ १०२ ॥ (E).

१०२ । घत्ताया यतिभेदेन नामान्तरमाह ॥ सो घेति ॥ सां[तां] घत्तां कुलसारां कीर्त्त्यापरां नागराजः पिंगलः कथयति । एकादशविश्रामादनाम्नीं, पुनरपि सप्तचयोदशविरतिं तां घत्तां घत्तानंदनाम्नीं पिंगलः कथयतीत्यर्थः ॥ १ ॥ (G).

छक्कलु आइहिँ संठवहु तिणि चउक्कल देहु ।
पंचक्कल[1] चउकल[2] जुअल घत्ताणंद मुणेहु[3] ॥ १०३[4] ॥
दोहा ।

---

१०२ । विशेषान्तरमाह, षट्कलमादौ संस्थापय, त्रीन् चतुष्कलान् देहि, पंचकल-चतुष्कलयुगलं घत्तानन्दं जानीहि ॥ अत्र विरतिभेदाद्गणनियमाच्च पूर्व्वतो भेदस्तेन एकविंश[त्रिंशत्]-मात्राः । (C).

१०३ । अथ घत्तानंदगणनियममाह छक्कलु इति । आइहि—आदौ छक्कलु—षट्कलं गणं, संठवहु—संस्थापयत, ततश्च तिणि चउक्कल—त्रीन् चतुष्कलान् देहु—दद्त, ततश्च पंचक्कल—पंचकलं, चक्कल जुअल—चतुष्कलयुगलं च दद्तेति पूर्व्वेणान्वयः, एवं घत्तानंदं मुणेहु—जानीध्वं । घत्ताघत्तानंदयोश्च विश्राम-मात्रकृत एव भेद इति अत्रापि लघुत्रयमंते देयमिति बोध्यम् ॥ १०३ ॥ (E).

१०३ । छक्केति ॥ षट्कलमादौ स्थापय त्रीन् चतुष्कलान् देहि । पंचकलं चतुष्कलयुगलं घत्तानंदं जानीत ॥ एवमेकत्रिंशन्मात्राः कार्या इत्यर्थः ॥ २ ॥ (G).

---

१०३ । १ छक्कल (F) २ चक्कल (D & F), dropt in (E). ३ मुणेहु (A). ४ १०० (A), १०२ (E), २ (F).

जहा, जो[1] बंदिअ सिरगंग हणिअ अणंग
अद्धंगहि[2] परिकर धरणु ।
सो जोई[3]जण मित्त हरउ दुरित्त
संकाहरु[4] संकर चरणु[5] ॥ १०४[6] ॥

घत्ताणंद । (A, B & C).

१०४ । उदाहरति । येन वन्दिता शिरसि गङ्गा, हतोऽनङ्गः, अर्द्धाङ्गेन परिवारधारकः । स योगिजनमित्रं हरतु दुरितं शङ्काहर-शङ्करचरणः ॥ परिवारो भार्य्या, चरणं पदं, आदरातिशयद्योतनार्थम् । (C).

१०४ । अथ घत्तानंदमुदाहरति, यो बंदिअ इति । जो—यः, सिरगंग—शिरोगंगया शिरःस्थितया गंगया इत्यर्थः, बंदिअ—वंदितः नमस्कृत इत्यर्थः । अथवा येन शिरसि गंगा वंदितेति । येन अणंग—कामः हणिअ—हतः, यस्य अद्धंगहि—अर्द्धांगे परिकर धरणु—परिकरं कलत्रं धृतवान्, सो—सः, जोईजण मित्त—योगिजनमित्रं, संकाहरु—शंकाहरः, संकर चरणु—शंकरचरणः, वो [दुरित्त—]दुरितं हरउ—हरतु ॥ १०४ ॥ (E).

१०४ । घत्तानंदो यथा ॥ यो वंदितः शीर्षे गंगया ॥ हतानंगः ॥ अर्द्धांगे परिकरधरः ॥ स योगिजनमित्रं हरतु दुरितं शंकाहरः शंकरचरणः ॥ ३ ॥ (G).

१०४ । १ जे (A & B). २ अद्धंगहिं (A & D). ३ जोइ जोइ (B), जो जोइ (C). ४ संकाहर (A & D). ५ चरण (A). ६ १ (A), १०७ (E), १ (F).

## अथ छप्पउ[1] । (F).

छप्पअ छंद छइल्ल[2] सुणहु[3] अक्खरसंजुत्तउ
एआरह तसु[4] बिरइ त पुणु[5] तेरह णिब्भंतउ[6] ।
बे मत्ता धरि पढम त[7] पुणु[8] चउ चउकल[9] किज्जइ
मज्झट्ठिअ[10] गण पंच हेट्ठ बिस्सबि[11] लहु[12] दिज्जइ ॥
उल्लाल बिरइ[13] बे पण्णरह[14] मत्ता[15] अट्ठाइस[16] सोइ[17]
एम[18] भणह सुणह[19] छप्पअ[20] पअ
अणहा[21] णहि[22] किंपि[23] ण होइ ॥ १०५[24] ॥

---

१०५। अथ षट्पदिका। षट्पदच्छन्दः छइल्ल आमोषि अक्षरैश्च संयुक्तम्, एकादशसु विरतिः, ततः पुनस्त्रयोदशसु निर्भ्रान्ता, द्विमात्रं धृत्वा प्रथमे ततः पुनश्चतस्रः कलाः क्रियन्तां, मध्येस्थितपञ्चगणाधो द्वावपि लघू दीयेतां ॥ उल्लालयोर्विरतिर्द्वयोः

---

१०५। १ षट्पदं (D). २ चइल (B), छइन्द (C), चइलु (D). ३ सुणह (A, B & C), सुणउ (D). ४ तह (A, B & C). ५ पुणवि (B & C), पुणि (F). ६ णिब्भुतउ (A), णिब्भन्त (B & C), णिब्भन्त (D). ७ उ (B & C). ८ पुण (B), पुणि (F). ९ चउकलु (B), चउकला (C). १० मज्झट्ठिअ (C), मज्झमट्ठिअ (E), मउझठिअ (F). ११ विसउ (A), विसुवि (C), विसवि (F). १२ लेह (A). १३ बे विरइ (E), वि चरण बे (F). १४ पन्दरह (C). १५ मत्त (A). १६ अठारह (A), अट्ठाइस (C), अट्ठाईस (F). १७ सोइ (B & E), सो (F). १८ एव (F). १९ सुणह (D), सुणउ (F). २० छप्पअ (A), छप्पअ पअह (E). २१ अणह (B), अणहा (E), अणह (C). २२ णहिअ (C, D, E & F). २३ किंवि (F). २४ ९ (A), ४ (F).

पञ्चदशसु, मात्रा अष्टाविंशतिर्भवन्ति, एवं गणय जानीहि षट् पदानि। अन्यथाऽत्र न किञ्चिद्भवति॥ छइल्लो — विदग्धः। अक्षरैः सानुप्रासैः। एकादशमात्रास्थाने त्रयोदशमात्रास्थाने च यतिकथनाच्चतुर्विंशतिमात्रः पादो लभ्यते। तत्र मात्रानियममाह। आदौ द्विमात्रगणः, ततश्चतुष्कलामध्यस्थिताः पञ्च गणाः कार्य्याः, ततो द्वावपि लघू देयौ, एवं क्रमेण चतुर्विंशतिमात्राश्चत्वारः पादाः कार्य्याः। पुनश्च पादद्वयं कार्य्यं, तस्य च उल्लालसंज्ञा, ततः प्रत्येकमष्टाविंशतिमात्रा भवन्ति। पञ्चदशसु विश्रामः कार्य्यः। अत्र च पादचतुष्टये षण्णवतिः उल्लालयोश्च षट्पञ्चाशदिति द्विपञ्चाशदधिकशतमात्रा षट्पदी। (C).

१०५। अथ षट्पदनामकवृत्तं लक्षयति। छप्पअ छंद इति। हे छइल — छइल्लाः विदग्धाः, अक्खरसंजुत्तउ — अक्षरसंयुक्तं वक्ष्यमाणप्रकारेण द्वाशीत्यादिवर्णयुक्तमिति यावत्, छप्पअ छंद — षट्पदं छंदः सुणउ — शृणुत। तत्र यतिनियमपूर्वकं गणनियममाह, एआरहेत्यादिना। तत्र बिरइ — विरतिः, एआरह — एकादशसु मात्रासु भवतीति शेषः, त पुणु — ततः पुनः णिभ्भंतउ — निर्भ्रांतं यथा स्यात्तथा तेरह — त्रयोदशसु मात्रासु विरतिर्भवतीति पूर्वेणान्वयः, तथा च चरणे चतुर्विंशतिर्मात्रा भवंतीति भावः, पढम — प्रथमे च चरणे, इदं चोपलक्षणं, द्वितीये तृतीये चतुर्थेऽपि बोध्यं, बे मत्ता धरि — द्वे मात्रे धृत्वा संस्थाप्येत्यर्थः, मझ्झट्ठिअ — मध्येस्थिता मध्ये प्रथमस्थमात्राद्वयांतस्थद्विलघ्वोरंतराले स्थिता इत्यर्थः, पंच चउ चउकल — चतुश्चतुःकलास्तत्र

चतस्रः कला मात्रा येषु तादृशाश्चतुर्मात्रिका इति यावत् गण—गणाः किज्जइ—क्रियंते, त पुणु—ततः पुनः हेट्ठ—अधस्तात्पादांते इति यावत्, बिणबि लहू—लघुद्वयं दिज्जइ—दीयते, ततः पादचतुष्टयानंतरम्, उल्लाल—उल्लालः वक्ष्यमाणलक्षणं उल्लालनामकं वृत्तं दीयते इति पूर्वेणान्वयः। तत्र च उल्लाले वे विरइ—द्वे विरती यतिस्थानद्वयमित्यर्थः, प्रथमं पञ्च [There seems to be a gap here.—Ed.] लघुद्वयं स्थाप्यमेवमेकैकचरणे चतुर्विंशतिर्मात्रा विधाय चरणचतुष्टयं विधेयमनंतरं च उल्लालपादद्वयं देयमिति षट्पदं छंदो भवतीति। इदं च शिष्यबोधायोक्तं, वस्तुतस्तु काव्यपादचतुष्टयोत्तरोल्लालपादद्वयेन षट्पदं छंदो भवतीति। अंते लघुद्वयमेव देयमिति न नियमः काव्यपादेषु तथाऽदर्शनादिति बोध्यम्। (E).

१०५। अथ षट्पदं छंदः॥ छप्पेति॥ षट्पदं छंदो विदग्धाः शृणुत, अक्षरसंयुक्तं, एकादशसु तस्य विरतिस्ततः पुनस्त्रयोदशसु निर्भ्रान्तम्। द्वे मात्रे धृत्वा प्रथमं ततः पुनश्चतुष्कलाः क्रियंते। मध्ये स्थिता गणाः पंच। अधस्ताद्वावपि लघू दीयेते॥ उल्लालस्य द्वौ चरणौ॥ द्वि[?]पंचदशमात्रासु [यतिः]। अष्टाविंशौ तौ॥ एवं मनसि जानातु षट्पदे पदानि, अन्यथाच न किमपि भवति॥ अथ चतुर्विंशतिमात्राकं पादचतुष्टयं॥ तेषु एकादशसु चयोदशसु च यतिः कार्या॥ ततोऽष्टाविंशतिमात्राकं पादद्वयं॥ तत्र च पञ्चदशसु[?] यतिर्भवतीत्यर्थः॥ चरणद्वये द्वितीया यतिरेकादशसु[?] भवतीति फलति॥ ४॥ (G).

जहा,

पिंधउ[1] दिढ सण्णाह[2] बाह उप्पर पक्खर[3] दइ[4]
बंधु समदि[5] रण धसउ[6] सामि[7] हम्मीर[8] बअण[9] लइ[10] ।
उड्डल[11] णहपह भमउ खग्ग[12] रिउ[13] सीसहि[14] डारउ[15]
पक्खर[16] पक्खर[17] ठेल्लि पेल्लि[18] पव्वअ अ प्फालउ[19] ॥
हम्मीर[20] कज्जु[21] जज्जल[22] भणइ[23]
कोहाणल मुह मह[24] जलउ ।
सुल[25]ताण सीस करवाल[26] दइ[27]
तेज्जि[28] कलेबर दिअ[29] चलउ ॥ १०६[30] ॥

---

१०६। उदाहरति ॥ पिनद्धदृढसन्नाहो वाहस्योपरि पक्खरं दत्त्वा बन्धून् संवाद्य रणे धतामि स्वामिहम्मीरवचनं नीत्वा। उड्डु-

---

१०६। १ पिंधउँ (A), पिंधिअ (E). २ सणाह (D). ३ पक्ख (E). ४ देइ (A & E). ५ समरि (A), संभरि (F). ६ धसिअ (E). ७ सामिहि (D), थाहि (E). ८ हम्मीर (B & C), हमीर (F). ९ विअण (B). १० बर (C), बरे (D), बेर (E). ११ उड्डल (B & C), उड्डुल (D & E), उड्डल (F). १२ खग्ग (F). १३ अरि (A & E), रिपु (F). १४ सिअहि (E), सीस (F). १५ डारउँ (A), डारिअ (B & C), डारउ (D), डारिउ (F). १६ पक्खरे (A & B), पक्ख (E). १७ पक्खरे (B). १८ पेल्लि (F). १९ प्फारउँ (A), पप्फारउ (B), पपफालउ (C), पप्फारउ (F). २० हम्मीर (B & C), हंमी (E). २१ कज्ज (D, E & F). २२ जज्जल (D), जज्जलु (B & C), जज्जल (E). २३ भणु (B & C), भण (D, E & F). २४ मुख (A), मह मह (D), मह मह (E), मह (F). २५ सुरि (A), सुलि (D & E), सुर (F). २६ करवाल (A). २७ देइ (A, D & E), दइ (C). २८ तज्जि (A). २९ दिअ (B, C & F). ३० ३ (A), ५(F).

यामि नभःपथं, भ्रामयामि खड्गं, रिपुशिरसि ज्वालयामि पक्खरं, ठेलयित्वा पेलयित्वा पर्व्वतमुत्पाटयामि॥ हम्मीरकार्य्ये उज्जलनो भणति, क्रोधानलमुखमध्ये ज्वलति, सुरतानशीर्षे करवालं दत्त्वा त्यक्त्वा कलेवरं दिवं चलामि॥ हम्मीरसेनापतेरुज्ज्वलनस्येयमुक्तिः। वाहो—घोटकः, पक्खरशब्दोऽश्वकवचवाची, गीला—प्राप्य, कलेवरं त्याजयित्वा दिवं चालयामीत्यर्थः। (C).

१०६। अथ षट्पदमुदाहरति पिंधिअ दिढ इति। दिढ सस्राह—दृढसंनाहं पिंधिअ—पिधाय, वाह उप्पर—वाहोपरि पक्खर देइ—वाणवारणं दत्त्वा, बंधु समदि—बन्धून्संभाष्य, साहि हम्मीर वअण लेइ—शाह-हमी[र]वचनं गृहीत्वा, रण धसिअ—रणे प्रविश्य, पक्ख[र] पक्खर—वाणवारणेन वाणवारणं, स्वकवचेन प्रतिपक्षाणां कवचमित्यर्थः, ठेल्लि—चोटयित्वा, पेल्लि—मोदयित्वा, उड्डुउ—उड्डीयमानः सन्, णह पह—नभःपथे भमउ—भ्रमामि, अरि सिसहि—अरिशिरसि, खग्ग—खड्गं डारउ—पातयामि, पव्वअ अ फाडउ—पर्वतानहं स्फाटयामि (क्रोधानलमध्ये जलउ—ज्वलामि, हम्मीरकज्ज यामि) [?] उच्चचयामीति यावत्। किं च सुरताणसीस करवाल देइ—खड्गेन तस्य शिरश्छित्त्वेति यावत्, मह—अहं, कोहाणल मह—क्रोधानलमध्ये जलउ—ज्वलामि, हम्मीरकज्जं—[ह]मीरका[र्य्या]र्थं, कलेवर तेज्जि—कलेवरं शरीरं त्यक्त्वा, दिअ चलउ—दिवं गच्छामि इति जज्जलः * * * हमीर * *। (E) [Something seems to be wanting here.—Ed.]

पत्र[1] पत्र[1] तलउ[2] णिबद्ध[3] मत्त चउ[4]वौसह[5] किज्जइ[6]
अक्खर[7] डंबर[8] सरिस छंद[9] इत्र सुद्ध गणिज्जइ[10] ।
आइहि[11] छक्कलु[12] होइ चारि चउकलउ[13] णिरुत्तउ[14]
दुक्कल अंत णिबद्ध[15] सेस कइ[16]वत्थु[17] णिबुत्तउ[18] ॥
बावस[19] सउ वि मत्तह[20] मुणहु[21]
उल्लालउ[22] सहिअउ[23] गुणह[24] ।
छप्पअ छंद[25] एरिसि[26] वि होइ
काइँ[27] गंथि गंथि[28] विमरइ[29] ॥ १०७[30] ॥

---

१०६ । यथा ॥ पिंधेति ॥ पिधाय दृढसन्नाहं वाहोपरि कवचं दत्त्वा, बन्धून्संभाष्य रणे प्रविशामि, स्वामिहम्मीरवचनं लब्ध्वा ॥ उड्डीय नभःपथे भ्रमामि, खड्गेन रिपुशिरांसि पातयामि ॥

---

१०७ । १ चप (D). २ तलप (A & E). ३ णिंद (A), णिबद्धं (D), णिबद्धा (F). ४ चउव (C), चोवीसवि (E), चोवीसह (F). ५ किजइ (A). ६ किज्जई (D). ७ अक्खरं (A). ८ डमर (B & C). ९ छन्दउह (C). १० भणिज्जइ (D, E & F). ११ आइह (C). १२ छक्कलु (D). १३ चउकलअ (C), चउकलउे (D). १४ णिरुत्तउ (A & E). १५ णिबुत्त (A), ठविउ (D & F). १६ कवि (B), कई (D), कवि (F). १७ वत्थु (A), वत्थु (B). १८ णिबत्तउ (D & E), णिउत्तउ (F). १९ बावण्ण (A), बावण (B & C). २० मत्तउ (E). २१ मुणउ (A), मुणहु (C), मुणह (D). २२ उल्लालवि (E), उल्लालउ (F). २३ सहिअउ (A, B, C & D), सहिअ (E). २४ गुणउ (A & B). २५ छन्दउ (B). २६ एरिस (B), एम (C), एरिसिअ (D), एरिस (F). २७ कांपि (B & C). २८ गंथ गंथि (A & E). २९ वमरउ (A), विरमइ (B), विमरउ (C), विमरसउ (F). ३० ७ (A), ९ (F).

कवचं कवचं त्रोटयित्वा नोदयित्वा पर्वतानप्यास्फारयामि॥ हम्मीर-कार्याय मल्ल[ल्ल]लो भणति कोपानलमध्ये ज्वलामि, सुरत्राण-ग्रीवें करवालं दत्वा त्यक्त्वा कलेवरं दिवं चलामि॥ हम्मीरसेव-कस्य ज्वलनाख्य इयमुक्तिः॥ ५॥ (G).

१०७। षट्पदच्छन्दस एव प्रकारांतरमाह। पादपादतले निबद्धा मात्राः च[तु]र्विंशतिः, कथ्यन्ताम् अक्षराणि उल्लालि, सदृशं छंद इदं शुद्धं गम्यताम्, आदौ षट्कला भवन्ति चत्वार-श्चतुष्कलाः निरुक्ताः, द्विकलोऽन्ते निबद्धः, शेषकविना वस्तु निरुक्तं। द्विपञ्चाशत् शतमपि मात्रा जानीहि, उल्लालेन समं गुण[य] षट्-पदच्छन्द ईदृशमपि, किं ग्रन्थं ग्रन्थं विमृषत॥ तत्रशब्दः स्वरूपार्थः, उल्लालि इति बन्धयोग्यानि, सदृशमिति, प्रतिपादं दृढबन्धः कार्य्य इत्यर्थः, शुद्धं सर्व्वावयवशुद्धं ज्ञायताम्। पूर्व्वमादौ द्विकलः ततश्चतुष्कलाः पञ्चेत्युक्तमिदानीन्तु प्रथमतः षट्कलः ततश्चत्वार-श्चतुष्कला इति विशेषः। (C).

१०७। अथ षट्पदमेव प्रकारांतरेण लक्षयति। पअ पअ तलह इति। यत्र आइहि छक्कलु होइ — आदौ षट्कलो भवति, ततः चारि चउकल[उ] — चत्वारश्चतुःकलाः णिरुत्तउ — निरुक्ताः, अंत — पादांते, दुक्कलु — द्विकलः णिबद्धः, एवं यत्र पअ पअ तलह णिबद्ध — पदपदतले प्रतिचरणतलमित्यर्थः निबद्धाः मत्त चउवीसहि — मात्राश्चतुर्विंशतिः किज्जइ — क्रियंते, तत उल्लालहि सहिअ — उल्लालेन सहितम् अंते उल्लालपादद्वययुक्तमित्यर्थः, सेस कइ वत्थु णिरुत्तउ — शेषकविना वस्तु निरुक्तम्। एतदेव वस्तु इति

जहा,

जहा सरअ ससि बिंब जहा हर[१] हार[२] हंस ठिअ[३]
जहा फुल्ल सिअ कमल जहा सिरि[४] खंड खंड किअ[५] ।
जहा गंग कल्लोल जहा रोसाणिअ[६] रुप्पइ[७]
जहा दुद्धवर[८] सुद्ध[९] फेण[१०] फंफाइ[११] तलप्पइ[१२] ॥
पिअ पाअ[१३] पसाए[१४] दिट्ठि[१५] पुणि[१६]
णिहुअ[१७] हसइ जह[१८] तरुणिजण[१९] ।
बरमंति चंडेसर[२०] कित्ति तुअ
तत्थ[२१] देक्खु[२२] हरिबंभ[२३] भण[२४] ॥ १०८[२५] ॥ [छप्पउ]

---

नामांतरेणोक्तमित्यर्थः। इति गुणइ — गुणयत जानीतेत्यर्थः । इअ छंद — इदं छंदः, अक्खर डंबर सरिस — अक्षराडंबरसदृशं सुश्राव्यवर्णसमुल्लसितगौडीरीतिमदित्यर्थः, चेल्लवतीति शेषः, तदा छ[प्]ढ्ढ भणिज्जइ — षड्ढं भण्यते । अथ च वावष्ठ सउ वि मत्तह

---

१०८। १ हर (E). २ हाव (C). ३ ठिअव (C). ४ सिर (A). ५ दिव (A, B & C). ६ रोसाणि (C). ७ रूप्पइ (B). ८ दुद्ध बरि (F). ९ सुध (B & C). १० फेब (A). ११ फंफाए (A), फप्फाइ (B & C), फंफाइ (D), फंफाइ (F). १२ तलप्पए (A), तलप्पुइ (D), तफुप्पइ (F). १३ पाँव (A), पाए (D). १४ पसाइ (C), पसाव (D), पसारे (F). १५ दिट्ठि (A, E & F). १६ पुण (A), पुण (B), पुन्न (C), पुण (E). १७ णिहुंसि (D). १८ जइ (B), जहा (C). १९ तरुणिअण (A), तरुणीअण (B). २० चंडसरवर (B), चंडसर (F). (Here ड should be read as short, vide श्लोक ५. p. 7). २१ तच्छ (A). २२ पेक्खि (A). देक्खु (D). देक्खि (E). २३ हरिबम्भु (B), हरिहरबम्भ (C), (C), हरिबंभ (F). २४ भणु (B). २५ ५ (A). ७ (F).

—द्विपंचाशत्शतमपि मात्राः काव्यपादचतुष्टयस्य चउल्लालपादद्वयस्य च षट्पंचाशदेवमुभयोर्मिलित्वा द्विपंचाशदधिकं शतं मात्रा इत्यर्थः, मुणहु—जानीत, छप्पअ छंद—षट्पदच्छंदः, एरिसि वि होइ—एतादृशमपि भवति, काइ गंथ गंथि—किमर्थं ग्रंथग्रंथिं विमरइ—विसृशत। इदं च पूर्वोक्तलक्षणेनैव गतार्थत्वात् क्षेपकमिवाभातीति बोध्यम्। (E).

१०७। अथ लक्षणस्य निष्कर्षमाह॥ पअ पेति॥ षट्पद-तल-निबद्धा मात्राश्चतुर्विंशतिः क्रियंते, अक्षराडंबरसदृशं छंद-इदं शुद्धं भण्यते॥ आदौ षट्कलो भवति चत्वारश्चतुष्कला-निष्कलाः॥ द्विकलमंते स्थापय शेषकविना वस्तु निष्कलम्॥ द्विपंचाशत् शतमपि मात्रा जानीत, उल्लालेन सहितं गुणय॥ षट्पदं छंद एतादृशं भवति, किमर्थं ग्रंथग्रंथिं विमृशत॥ श्लोक-पादचतुष्टय उल्लालपादद्वययोगे द्विपंचाशदधिकं शतं मात्रा भवंति। तत्र च लघुगुरुनियमो नास्ति। वस्त्विति नामांतरेणेत्यर्थः॥ (G).

१०८। उदाहरति। यथा शरच्छशिबिम्बं यथा हरहासहंस-स्थितिः यथा फुल्लसितकमलं यथा श्रीखण्डखण्डं दीयते, यथा [गंगा]कल्लोलः, यथा रौप्यार्पितं रूप्यं, यथा दुग्धवरमुग्धफेनः कम्पायितः भासते, प्रियपादप्रसादे पृष्ठे निभृतहसितं यथा तरुणी-जनस्य, वरमल्लिचक्रेश्वर कीर्त्तिस्तव तथा दृश्यते हरिहरब्रह्मा वदति॥ रौप्यशब्दः सुवर्णरजतमार्जनशिला[बोधकः], तेन कृत-मार्जनरजतवदित्यर्थः॥ हरिहरब्रह्मा कविः, ब्रह्मेति वन्दिविशेष-उच्यते॥ (C).

१०८। अथैतदुदाहरति जहा सरअ ससि बिंबेति। यथा शरत्-शशिबिंबं, यथा हरहारहंसस्थितिः, हरः — कर्पूरगौरः, हारो — मौक्तिकदाम, हंसाः — पक्षिविशेषास्तेषां स्थि[ति]रित्यर्थः, जहा फुल्ल सिअ कमल — यथा फुल्लसितकमलं पुण्डरीकमिति यावत्, जहा खण्ड किअ — खंडीकृतः, सिरि खंड — श्रीखंडश्चंदनमित्यर्थः, जहा गंग कल्लोल — यथा गंगाकल्लोला महोर्मय इत्यर्थः, जहा रोसाणिअ रुप्पइ — यथोज्ज्वलितं रूप्यं, जहा दुद्ध वर सुद्ध फेण फंफाइ तलप्पइ — यथा दुग्धवरस्य सुग्धफेनः फंफाइ — उद्भूय तलप्पइ — तपति, यद्यपि अत्र दुग्धसाम्यं कीर्त्तेः कविसंप्रदायविरुद्धं शीतत्वेनैव कीर्त्तिवर्णनस्योचितत्वात् तथापि श्वैत्यमात्रे तात्पर्य्यं न तदंशेऽपीति भावः, तूष्णींभूय भांडादुद्गतः दुग्धफेनस्यातिश्वेतो भवतीति तयोक्तिः। पुणः[नः] यथा पिअ पाअ पसाए दिट्ठि — प्रियप्राप्तप्रसाददृष्टिः प्रियस्य प्राप्ता प्रसाददृष्टिर्येन स तादृश इत्यर्थः, तरुणिजण — तरुणिजनः णिहुअ हसइ — निभृतं हसति, तत्थ — तथा तव कित्ति — कीर्त्तिं देक्खि — प्रेक्ष्य, वरमत्ति — वरमते चण्डेश्वर महाराज, हरिर्ब्रह्मा भणति। ब्रह्मेति वंदिनामुपनाम जातिविशेषो वा, तथाच ब्रह्मजातीयस्तदुपनामको वा हरिनामा भवतीत्यर्थः। (E).

१०८। यथा जहेति॥ यथा शारदशशिबिंबो, यथा हरहारहंसस्थितिः, यथा फुल्लसितकमलं, यथा श्रीखंडं चूर्णितं। यथा गंगाकल्लोलो, यथोज्ज्वलितं रौप्यं, यथा दुग्धोपरिशुद्धफेनः फंफायितः स्फुरति, प्रिये पादप्रहारे दृष्टे निभृतं हसति यथा तरुणि-

Here follows a *sloka* १०८ (क) in MSS. (A, B and E), not found in MSS. (C, D and F), nor in the gloss (G).

चारि पाअ[1] भण कव्वके[2] वे बि पाअ उल्लाल[3] ।
इम बिहु लक्ख[क्ख]ण एक्क कइ[4] पढ़ छप्पअ पत्थार[5] ॥
१०८ (क) ॥ [दोहा]

अह कव्व लक्खण[1] । (B).

आइ अंत दुहु[2] छक्कलउ तिण्णि तुरंगम मज्झ[3] ।
तीए[4] जगणु[5] कि बिप्पगणु[6] कव्वह[7] लक्खण बुज्झ ॥
१०९[8] ॥ दोहा ।

---

जनः ॥ वरमंत्रिन् चंडेश्वरस्य कीर्त्तिस्तवं तथापेक्ष्य हरिब्रह्मणो[ह्मा] भणति ॥ हरिकवेश्चंडेश्वरमंत्रिणं प्रत्युक्तिः ॥ ७ ॥ (G).

१०८ (क) । अथ पूर्वोक्तमेव दोहावृत्तेनोपसंहरति चारि पाअ इति । चारि पाअ — चत्वारः पादाः, कव्वके भण — काव्यस्य भण, वे बि पाअ उल्लाल — द्वावपि पादा उल्लालस्य भणंति पूर्वेणान्वयः,

---

१०८ (क) । १ पचाइ (B). २ इथ कव्वकर (A). इथ कव्व भण (B). ३ 2nd and 4th quadrants transposed in A, and पा for पाअ in the same MS. ४ बिहु लक्खण पढम एक्क कर (A), दुहु लक्खण पढ एक्क करि इथ (B). ५ छप्पअ पअ पत्थार (A).

१०९ । १ अथ काव्यलक्षण (A). अथ काव्य लक्षण (C), अथ काव्यं (F). २ दुइ (F). ३ मज्झ (F). ४ ताए (D). तीय (F). ५ जगण (A). ६ विप्पगण (A). ७ कव्वहि (A) कव्वड (C) ८ ७ (A).

इम — एवं, विछ लक्खण — द्वे लक्षणे एक्क कइ — एकं कृत्वा पठ, एष छप्पअ पत्थार — षट्पदप्रस्तारः ॥ (E).

१०९ । अत्र च काव्यनामच्छन्दः पादचतुष्टयेन भवति, उल्लालपदद्वयोपाहित्येन च तत्र षट्पदीत्वमिति दर्शयितुमादौ काव्यच्छन्दो दर्शयति । आदावन्ते द्वौ षट्कलौ, चयस्तुरङ्गमा मध्ये । तृतीये जगणः किं विप्रगणः, काव्यलक्षणं बुध्यस्व ॥ तुरङ्गमश्चतुष्कलः, किमिति विकल्पेन, सर्व्वलघुचतुष्कलो विप्रगणः ॥ (C).

१०९ । अथ षट्पदोपयोगिकाव्यलक्षणमाह आद अंत इति । यत्र आदौ अंते, दुछ छक्कलउ — द्वौ षट्कलौ भवतः इति शेषः, एक आदौ एकः अंते इत्यर्थः, मइझ — मध्ये आद्यंतस्थयोः षट्कलयोरंतराले इत्यर्थः, तिण्णि तुरंगम — चयस्तुरंगमास्त्र[य]श्चतुःकलाः भवंतीति शेषः, तत्र तीए — तृतीये स्थाने द्वितीयचतुःकल इत्यर्थः जगणो मध्यगुरुर्गणः किंवा विप्रगणश्चतुर्लघुकोगणः कर्तव्यः, तत् कव्वह लक्खण — काव्यस्य लक्षणं, बुझ्झ — बुध्यतां ॥ अयमर्थः, प्रथमं षट्कलस्ततस्त्रयश्चतुष्कलास्ततश्च षट्कलः एवं प्रतिपादं पंच गणाः कर्त्तव्यास्तेष्वेव च प्रथमपङ्क्ला * * * चये तृतीयो गणो जगणो विप्रो वा विधेयः, एवं च तृतीये विप्रश्चेद्दीयते तदा सर्वलघ्वात्मकोऽपि काव्यभेदो भवति, यदि च जगणोदीयते तदा तु न तृतीयस्यजगणांतर्गतस्य एकैकगुरोः प्रतिचरणमावश्यकत्वात्सर्वगुर्वात्मकस्तु न भवति च, जगणपक्षे तृतीयस्यगणाद्यंतस्थस्य लघुद्वयस्य प्रतिचरणमावश्यकत्वादिति, विप्रपक्षे च चतुर्लघूनां प्रतिचरणमावश्यकत्वादिति सुधीभिर्विभावनीयम् । (E).

चउ अग्गल[1] चालीस गुरु एक्कके गुरु[2] लेहु[3]।
जो गुरुहीणउ सक्क सो[4] णाम ग्गहण कुणेहु[5] ॥ ११०[6] ॥
दोहा।

१०९। अथ काव्यमाहलक्षणमाह ॥ आईति ॥ आदावंते द्वयं षट्कलयोस्त्रयस्तुरंगमा मध्ये। तृतीयो जगणः किंवा विप्रगणः काव्यस्य लक्षणं बुध्यस्व ॥ ८ ॥ (G).

११०। अथ काव्यच्छन्दसो भेदान् दर्शयितुमुपक्रमते। चतुरग्रचत्वारिंशद्गुरव एकैकस्मिन् गुरुं लघुं नय, यो गुरुहीनः शक्रनामग्रहणं कुरु ॥ चतुरग्रेति चतुरधिकेत्यर्थः। चतुरधिका चत्वारिंशद्गुरवोऽत्र सम्भवन्ति एकादशगुरु-लघुद्वय-युक्तैकैकपादयोगात्। अत्र च एकैकगुरुस्थाने लघुद्वयकरणे यो गुरुहीनः स शक्रनामेत्यर्थः। (C).

११०। अथ वक्ष्यमाणेषु काव्यभेदेषु शक्रनामकं भेदं लक्षयन् भेदान[यन]प्रकारमाह चउ अग्गलेति। चउ अग्गल चालीस गुरु—चतुरधिकचत्वारिंशद्गुरु काव्यपादचतुष्टयं चतुश्चत्वारिंशद्गुरु इति यावत्, एक्कके गुरु लेह—एकैकं गुरु गृहाण न्यूनं कुरु, एवं कृते च जो गुरुहीणउ—यो गुरुहीनः एकैकगुरुह्रासेन द्विलघुवृद्ध्या क्रियमाणेषु भेदेषु यः सर्वलघुरित्यर्थः भवतीति शेषः, सो स[क्क—श] शक्रः। तत्र च एकैकगुरुवृद्ध्या लघुद्वयह्रासेनेति

११०। १ चउग्गल (B), चउअग्ग (C), चतुग्गल (F). २ लहुगुरु (C). ३ देहु (D & F). ४ सच (A), सोइ (B, C & D). ५ करेहु (A) ६ ८ (A), ६ (F).

जहा,

जसु कर फणिवइ वलअ तरुणिवर तणुमह विलसइ[1]

णअण अणल[2] गल गरल विमल ससहर[3] सिर णिवसइ।

सुरसरि सिरमह रहइ[4] सअलजण[5] दुरित दमण[6] कर[7],

हसि ससिहर[8] हरउ दुरित[9]

वितरह अतुल[10] अभअवर[11] ॥ १११[12] ॥

सक्क[13] । (B & C).

---

शेषः, णाम ग्गहण कुणेऊ — नामग्रहणं शंभ्वादिभंगांतमिति भावः कुरुष्व। अयं भावः — तृतीये जगणदानपक्षे प्रथमषट्कलस्य गुरुत्रयं, द्वितीयचतुष्कलस्य गुरुद्वयं, तृतीयचतुष्कलस्य जगणस्वरूपत्वात्तस्यैको गुरुः, चतुर्थचतुष्कलस्य गुरुद्वयं, पंचमस्य षट्कलस्य गुरुत्रयमेकादश गुरवः, जगणाद्यंतःस्थलघुद्वयं च प्रतिचरणं काव्ये आवश्यकं, चरण-चतुष्टये च मिलित्वा चतुश्चत्वारिंशद्गुरवोऽष्टौ लघव आवश्यकाः, अतएव काव्ये सर्व्वेऽपि चरणा गुरुरूपा एवेति न संभवति जगण-पक्षे अष्टलघूनां विप्रपक्षे षोड़शलघूनामावश्यकत्वात्, तेषु च [चतुः]-चत्वारिंशद्गुरुषु क्रमेण एकैकगुरुह्रासेन लघुद्वयवृद्ध्या भेदेषु क्रिय-

१११। १ विवसइ (B). २ नअन (A) ३ सिजसु (D). ससि जसु (E), ससि (F). ४ वहइ (A, B & C) ५ सअलअ (A), सअसअल (B), सअलअन (C) ६ दलण (B, C & D). ७ कर (B) ८ ससि हर (A), हसिअ ससिहर (B & C). ९ हर हरउ दुरित (A), हर दुरित (B), हरहु दुरित (D), तुअ दुरित हरउ (E). १० तुअ दिअउ (A). तुअ वितरउ (B). ऊ (C), वितरह सो (E). वितर वर (F). ११ अभअवर (B). १२ ६ (A), १० (F) १३ सक्क। (A).

माणेषु यः सर्व्वलघुर्भवति सः शक्रः, चतुर्वतिलघ्वात्मके शक्रे च क्रमेण एकैकगुरुवृद्ध्या लघुद्वयह्रासेन यावच्चतुश्चत्वारिंशद्गुरवोऽष्टौ च लघवो भवंति, तावंति नामानि भवंति। तांश्च भेदाननुपदमेव विवेचयिष्यामः। अत्र च प्रथमं गुरूनादायैकगुरुह्रासलघुद्वयवृद्धि-क्रमेण शक्रनिरुक्तिस्ततश्च लघूनादाय लघुद्वयह्रासैकगुरुवर्द्धनक्रमेणा-न्येषां निरुक्तिरुभयथापि भेदानयनं संभवतीति प्रदर्शनायेति ध्येयम्। (E).

११०। काव्यभेदानाह॥ चउ इति॥ चतुरधिकाश्चत्वारिंशद्गुरव-एकैको गुरुर्हृसति। यो गुरुहीनः शक्रः स नामग्रहणं कुरुत॥ अयमर्थः — प्रतिचरणं जगणस्थावस्थितौ अष्टौ लघवश्चतुश्चत्वारिंशद्गु-रवइति फलति॥ तत्र गुरुहीनो भेदः शक्रसंज्ञो भवतीति॥८॥ (G).

१११। तत्र सर्व्वलघुकमुदाहरति। यस्य करे फणिपतिवलयं, तरुणिवरा तनुमध्ये विलसति, नयनेऽनलो गले गरलं, विमल-शशधरः शिरसि निवसति, सुरसरित् शिरोमध्ये वहति, स सकल-जनदुरितहरः[दलनः] हसित्वा शशिधरो दुरितं हरतु तव वितरतु अभ[य]वरौ॥ (C).

१११। अथ शक्रमुदाहरति जसु करेति। जसु कर — यस्य करे, फणिवइ वलअ — फणिपतिवलयं, तणुमह — तनुमध्ये तरुणि-वर — तरुणिवरा युवतीश्रेष्ठा पार्वती विलसइ — विलसति, यस्य णअण — नयने भालस्थतृतीयनेत्रे अणल — अनलः, गल गरल — गले कंठे गरलं विषं, विमल ससि जसु सिर — विमलः एक-कलात्मकतया कलंकशून्यः शशी [यस्य शिरसि] णिवसइ — निवसति,

जह जह वलआ वड्ढि[1] हइ तह तह णाम कुणेहु[2] ।
संभुहि[3] सउ[4] भण[5] भिंग[6]गण चउआलीस[7] मुणेहु[8] ॥
११२[9] ॥ दोहा ।

---

इदं च क्रियापदं नयने-इत्यादिप्रत्येकान्वयि । जस्स सिरमह—शिरोमध्ये, सुरसरि [सुरसरित्] रहइ—तिष्ठति, सअल जण दुरित दमण कर—सकलजनदुरितदमनकरः, सो—सः, ससिहर—शशिधरो महादेवः, हसि—हसिला, तुअ दुरिअ—तव दुरितं हरउ—हरतु, वितरउ अभअवर—वितरतु अभयवरम् ॥ अत्र चरणस्थाः चतुर्विंशतिरपि मात्रा लघुरूपाः स्पष्टाः । अत्र सो इत्योकारो लघुर्बोध्यः । (E).

१११ । यथा जसु करेति ॥ यस्य करे फणिपतेर्वलयं ॥ तरुणीवरा तनुमध्ये विलसति ॥ नयनेऽनलो गले गरलं, विमलः शशी यस्य शीर्षे निवसति ॥ सुरसरिच्छीर्षमध्ये तिष्ठति ॥ सकलजनदुरितदमनकर हसिला शशिधर हर दुरितं वितर हर अतुलमभयवरम् ॥ १० ॥ (G).

११२ । अथ लघुद्वयहान्या एकैकगुरुवृद्धितो नामानि वक्तुमुपक्रमते । यथा यथा वलयो वर्द्धते तथा तथा नाम कुरु । शम्भमारभ्य गौला भृङ्गगणं पंचचत्वारिंशन्मानीहि ॥ वलयो गुरु-

११२ । १ वड्डर (B), वढ्ढर (C). २ कुणेह (A & C). ३ सह (A), सहु (B & C). ४ संउ (B) ५ भणि (E). ६ भग (B). ७ पचतालीस (A), पाचताळीस (B). पाँचताळीस (C). चौआलीस (E & F). ८ मुणेह (A), कुणेऊ (B & C). ९ १० (A), ११ (F).

ता[1] सक्को[2] संभो सूरो गंडो खंधो बिजओ दप्पो
तालंको समरो[3] सीहो[4] सीसो[5] उत्तेओ[6] पडि[7]बक्खो।
परिधम्म मआलु[8] मइंदो दंडो[9] मक्कलु[10] मअणु[11] मरट्टो[12]
वासंठो[13] कंठो[14] मोरो[15] बंधो[16] भमरो भिस मरट्टो[17] ॥
[११३ । चउपइआ]

---

वर्द्धते — लघुद्वयस्थाने भवति, शक्रगणमारभ्य भृङ्गगणपर्य्यन्तं पंचचत्वारिंशत् भेदान् जानीहि, एकैकगुरुवृद्धिक्रमेण चतुश्चत्वारिंशद्गुरुभृङ्गनामा, शक्रः सर्व्वलघुरिति मिलित्वा पंचचत्वारिंश-न्नामान्याह । (C).

११२ । अथ स्पष्टतया संख्यानियतकाव्यभेदानयनप्रकारमाह जहेति। यथा यथा वलआ बट्टि हइ — वलयं गुरुर्वर्द्धते, तह तह — तथा तथा णाम कुणेहु — [ना]म कुरुष्व, संभुहि सउ — शंभुना साद्धं भिंगगण — भृंगगणं भणि — भणित्वा, शंभुमारभ्य भृंग-गणपर्यंतमित्यर्थः, चौ[चउ]आलीस — चतुश्चत्वारिंशत्, भेदानिति शेषः, मुणेहु — जानीहि। अयं भावः — षण्णवतिलघ्वात्मक एको

११३ । १ Non est (F). २ Non est (E & F). ३ मरणो (C). ४ सिंहो (D & F). ५ सेसो (D). ६ उत्तेउ (B & C). ७ बलि (A), परि (B & D), पखि (C). ८ मराणु (B & C), मराल (D & E). ९ मअजो दप्पो (C). १० मक्कव (A). ११ मचाणु (A), मचाक (B), मचाञ्च (C). १२ मरट्ट (D), मचरट्टो (E), मरट्टइ (F). १३ वामञ्चो (B & C), वामंतो (D & E), वासंत (F). १४ कन्दो (C). १५ मेरो (B & C). १६ बन्दो (C). १७ मरट्टइ (D & F), मचारट्ट (E).

गुरुर्वर्द्धते, एवं यः शक्रः उक्तः तत्र च यदि लघुद्वयमूर्ध्वीकृत्य तत्स्थाने एको गुरुर्वर्द्धते एवमेकोगुरुस्त्रतुर्भवतिसंचवस्त्र यत्र पतंति, शंभु[शंभु]नामा द्वितीयो भेदः। एवमग्रेऽपि बोध्यम्। ते लिखित्वा प्रदर्श्यंते, तथा। (E).

११२। यथेति [जहेति]॥ यथा यथा वलयो वर्धते तथा तथा नाम कुरुत॥ शंभुमारभ्य भृंगावधिं गणय॥ चतु[श्चत्वा]-रिंशत्जानीहि॥११॥ (G).

[Including S'akra there are 45 varieties, besides S'akra 44.—Ed.]

११३। तत् शक्रः शम्भुः सूरः गण्डः स्कन्दः विजयः दर्पः ताडङ्कः शरभः सिंहः शीर्षः उत्तेजाः प्रतिपक्षः परिधर्मा मरालः मृगेन्द्रः दण्डः मर्कटः [मनुः] मान्धः[मदान्धः] मरट्टः वामत्सः कण्ठः मयूरः बन्धः भ्रमरः भिन्नः महाराष्ट्रः। (C).

११३। गु १ ल ८४ शम्भुः, गु २ ल ८२ सूर्यः, गु ३ ल ८० गंडः, गु ४ ल ८८ स्कंधः, गु ५ ल ८६ विजयः, गु ६ ल ८४ दर्पः, गु ७ ल ८२ ताडांकः, गु ८ ल ८० समरः, गु ९ ल ७८ सिंहः, गु १० ल ७६ शीर्षं, गु ११ ल ७४ उत्तेजाः, गु १२ ल ७२ प्रति-पक्षः, गु १३ ल ७० परिधर्मः, गु १४ ल ६८ मरालः, गु १५ ल ६६ मृगेंद्रः, गु १६ ल ६४ दंडः, गु १७ ल ६२ मर्कटः, गु १८ ल ६० कामः [?], गु १९ ल ५८ महाराष्ट्रः, गु २० ल ५६ वसंतः, गु २१ ल ५४ कंठं, गु २२ ल ५२ मयूरः, गु २३ ल ५० बंधः, गु २४ ल ४८ भ्रमरः, गु २५ ल ४६ भिन्न[न्न]महाराष्ट्रः। (E).

११३। नामान्याह॥ संभो इति॥ शंभु १, सूर्य १, गंड १,

बलहद्दो[1] रात्रो[2] बलिश्रो[3] मोहो[4] मंथाणो[5] बलि मेहो[6]
सहसक्खो[7] बालो दरिश्रो सरहो[8] दंभो[9] ऽहो[10] उद्दंभो[11]।
बलिअंको तुरश्रो हरिणो[12] अंधो मुद्धोर[13] तह भिंगो
वत्थुश्रा[14] णामो[15] पिंगलणाश्रो[16] जंपइ[17] छंदपबंधो[18] ॥
११४[19] ॥ [षउपइआ]।

स्कंध ४, विजय ५, दर्प ६, तालंक ७, समर ८, सिंह ९, शेष १०, उत्तेजा] ११, प्रतिपक्ष १२, परिधर्म्म १३, मराल १४, मृगेंद्र १५, दंड १६, मर्कट १७, मदन १८, महाराष्ट्र १९, वसंत २०, कंठ २१, मयूर २२, बंध २३, भ्रमर २४, भिन्नमहाराष्ट्र २५। (G).

११४। बलभद्रः रजोबली मोहः मन्थानः परिमोहः सहस्राक्षः बालः दृप्तः शमरो दम्भो भवत्युद्दम्भः। बालीरङ्गं तुरगः हरिणः अंधः मुग्धे तथा भृङ्गः, अमूः संज्ञा वस्तुनाम पिङ्गलनागो जल्पति छन्दःप्रबन्धम्। (११३ श्लोकपादे) मरट्टशब्दो गर्भवाचकः, मनुशब्दः कामुकवाची, वामण्ड इत्यत्र वामन इति पाठे वामनः, वक्ष्मिति काव्यच्छन्दसो नामान्तरम्। (C).

११४। १ बलहद्दो (E), बलभद्द (F). २ रात्रो (A), राजा (E). ३ Non est (A). ४ मेह (B), रासो (D & F), मोक्खो (E). ५ मन्थाणो (B & C). ६ बलिमोहो (A, B, D & F). ७ सहसक्खो (B & C). ८ सरहो (E), समरो (C). ९ दम्भो (B & C). १० हो (A). ११ उद्दुम्भो (B & C). १२ हरिणो (A). १३ मुद्धोणो (B & C), मुद्धिर (E), मुद्धो (F). १४ वत्थु-आ (A), वाढुआ (B), षडपदीशेष वत्थुअ (F). १५ णामं (A), णौमो (D). १६ राओ (A). १७ जंपइ (B & C). १८ पराणो (C), छंदबंधो (E). १९ १७ (F).

११४। गु २६ ल ४४ बलभद्रः, गु २७ ल ४२ राजा, गु २८ ल ४० वलितः, गु २८ ल ३८ मोहः, गु ३० ल ३६ मंथानः, गु ३१ ल ३४ बलिः, गु ३२ ल ३२ मेघः, गु ३३ ल ३० सहस्राक्षः, गु ३४ ल २८ बालः, गु ३५ ल २६ दरिद्रः, गु ३६ ल २४ सरभः, गु ३७ ल २२ दंभः, गु ३८ ल २० उद्दंभः, गु ३९ ल १८ अहः, गु ४० ल १६ पलितांकः, गु ४१ ल १४ तुरंगः, गु ४२ ल १२ हरिणः, गु ४३ ल १० अंधः, गु ४४ ल ८ भृंगः। एवं पूर्वभेदापेक्षया लघुद्वयन्यूनक्रियया तत्समानमात्राकैकगुरुवर्द्धनेन च शक्रमारभ्य भृंगपर्यन्तं पंचचत्वारिंशद्भेदा बोध्याः॥

अथ शक्रात् क्रममारभ्य चत्वारो भेदास्तृतीये विप्रदानपक्ष एव संभवन्ति। पंचममारभ्य एकचत्वारिंशत्पर्यन्तं च तृतीये जगण-दानपक्षेऽपि विप्रपक्षेऽपि संभवंति। द्विचत्वारिंशत्तममारभ्य पंच-चत्वारिंशत्पर्यन्तं च चत्वारो भेदास्तृतीये जगणमवलम्ब्यैव संभवन्ति। विप्रपक्षे पदचतुष्टये मिलित्वा षोडशलघूनां जगणपक्षे चाष्टगुरूणा-[लघूना]मावश्यकत्वादिति बोध्यम्॥

अथ प्राकृतसूत्रेण शंभ्वादिभृंगांतानां पूर्वोक्तचतुश्चत्वारिंशद्भेदानां नामान्याह, ता संभो इति। शम्भुः १, सूर्यः २, गंडः ३, स्कंधः ४, विजयः ५, दर्पः ६, तालांकः ७, समरः ८, सिंहः ९, शीर्षं १०, उत्तेजाः ११, प्रतिपक्षः १२, परिधर्मः १३, मरालः १४, मृगेंद्रः १५, दंडः १६, मर्कटः १७, [?] कामः १८, महाराष्ट्रः १९, वसंतः २०, कंठः २१, मयूरः २२, बंधः २३, भ्रमरः २४, भिन्नमहाराष्ट्रः २५, बलभद्रः २६, राजा २७, वलितः २८, मोहः २९, मंथानः ३०,

पचतालीसह[1] वत्थुआ[2] छंदे[3] छंद बिअंभ[4] ।
अक्खा कइ पिंगल[5] कहइ चलइ[6] ण हरिहर बंभ[7] ॥
११५[8] ॥ दोहा ।

---

बलिः ३१, मेघः ३२, मदहस्तः ३३, बालः ३४, दरिद्रः ३५, शरभः ३६, दंभः ३७, उद्दंभः ३८, अहः ३९, पलितांकः ४०, तुरंगः ४१, हरिणः ४२, अंधः ४३, तह — तथा, भृंगः ४४ । हे मुद्धि — मुग्धे, ता — एतानि चतुश्चत्वारिंशदिति शेषः, वत्थुआ णाम — वस्तुकनामान्येतानि वास्तु — ता संभो सूरो गंडो खंधो विजओ दप्पो तालंको समरो सीहो सेसो उत्तेओ पडिव * * वोकापरनामकाव्यच्छंदसः नामानीति यावत्, छंदपबंधो — छंदःप्रबन्धः छंदसा प्रकृष्टो बंधो यस्मात् स तादृश इत्यर्थः, पिंगलणाओ — पिंगलनागः जंपइ — जल्पति ॥ (E).

११४ । बलभद्र २६, राजा २७, वलित २८, राम २९, मंथान ३०, बली ३१, मोह ३२, मदहस्त ३३, बाल ३४, दरिद्र ३५, शरभ ३६, दंभ ३७, अहः ३८, उद्दंभ ३९, वलितांक ४०, तुरग ४१, हरिण ४२, अंधमुग्ध ४३, तथा भृंग ४४ — चतुश्चत्वारिंशत् ॥ इति वस्तुनो नामानि पिंगलो नागो जल्पति छंदःप्रबंधे ॥ वस्तु काव्यनामकच्छंदः ॥ १४ ॥ (G).

---

११५ । १ पंचतालीसह (B & C), पचतालीसह (E). २ वत्थु (A). ३ छंद (F). ४ विअमह (B & C), बिभंत (F). ५ पिंगलु (F). ६ चलह (D). ७ बम्भु (B), बम्भ (C). ८ ११ (A), १५ (F).

पअह[1] असुद्धउ पंगु हीण खोडउ पभणिज्जइ
मत्तग्गल बाउलउ[2] सुसकल[3] कस सुणिज्जइ[4] ।
झल[5]बज्जिअ[6] तह बहिर[7] अंध अलंकार रहिअउ[8]
बुलउ[9] छंद[10] उट्टवण[11] अत्थ[12] बिणु[13] दुब्बल कहिअउ ॥
डेरउ हट्ठ[14]क्खरहिं[15] होइ काणा गुण सव्वहि रहिअ[16] ।
सव्वंगसुद्ध समरुअ[17]गुण छप्पअ[18] दोस पिंगल कहिअ[19] ॥
११६[20] ॥ [छप्पअ]

---

११५ । पञ्चचत्वारिंशदस्तु छन्दसा विजृम्भते । तत्त्वतः कवि-*पिङ्गलः कथयति न चलति हरिहरब्रह्मा ॥ वस्तुनामकच्छन्दः छन्दसा प्रकारभेदेन पञ्चचत्वारिंशद्विधं विजृम्भते, न चलति—अन्यथा न भवति, हरिहरादिनाऽन्यथा कर्त्तुं न शक्यते इत्यर्थः, अथच ग्रन्थकर्त्ता हरिहरवन्दी न चलति न भ्रान्तो भवतीत्यर्थः ॥ (C).

११५ । अथ प्रक्रमादाय संख्यान्तरं दोहाष्टकेनाह पंचतालीसह

---

११६ । १ पअइं (D). २ बाउंलअ (B), बाउंल (D), बाउल (E & F). ३ सुसअल (D & F). ४ भणिज्जइ (A), सुणिज्जइ (B & C), सुणिज्जहु (F). ५ चल (A). ६ वज्जिअ (B). ७ बुहरहिअ (A), बुहबहिर (B & C). ८ लंकारविरहिअउ (A), लंकारहं रयिअउ (D), लंकारहि रहिअउ (E). ९ बोलउ (A, B & C), बूलउ (E & F). १० छंदु (A). ११ उट्टिअवणु (F). १२ अच्छ (A). १३ बिण (B & C). १४ चबहइ (A), चरइ (B & C). १५ रहि (E & F). १६ काणउ नह राअ रंक सव्वहि भणिअ (A), काणउ आगुण राअ चाहु सवहिं भणिउ (B & C). १७ रूप (A & F), चाहुणरिअगुण (B), रअरूअगुण (C). १८ छप्पर (E). १९ पिंगले कहिउ (B & C), पिंगलु कहिअ (D). २० ११ (A), ११ (F).

इति। वत्थुआ छंदे—वास्तुकच्छंदसि वास्तुकापरनाम्नि काव्यच्छंदसीति यावत्, पंचतालीसह—पंचचत्वारिंशत् छंद—छंदांसि भेदा इति यावत्, विअंभ—विजृंभते इति भल्लाकर—शालाकरय, पिंगल कहइ—पिंगलः कथयति, अथ हरिहरब्रह्माणोऽपि न चलंति, तेऽप्येनमन्यथा न कुर्वंतीति भावः॥ (E).

११५। पंचेति॥ पंचचत्वारिंशद्वस्तुनच्छंदसो भेदा विजृंभन्ते॥ शक्रनामकसर्वलघुभेदेन सहेत्यर्थः॥ भल्लेति॥ भल्ला कविः पिंगलः कथयति, चलंति न हरिहरब्रह्माणः॥ चलंति अन्यथा कर्तुमसमर्था इत्यर्थः॥ १५॥ (G).

११६। अथ षट्पद[स्य] ये दोषाः काव्यच्छन्दसोऽपि ते दोषा-इत्यतः षट्पददोषानाह। पदमशुद्धं पङ्गुः, हीनः खोडः, मात्राधिको वातूलः, शून्यकलः काणो जायते। झलवर्जितो गुणरहितः, अन्धोऽलङ्कार[र]रहितः, वोडच्छन्दउत्थापनं, अर्थेन विना दुर्बलः कथितः, टेरो हठः, काणोऽगुणः, राजाङ्गैः सर्वैर्हीनः सर्वाङ्गशुद्धो रसरूपगुणः षट्पददोषः पिङ्गलेन कथितः॥ पदमशुद्धं चेत्तदा पङ्गुः, पदस्याशुद्धता जगणादिनियमराहित्यं। हीनो गणहीनः। मात्राधिकः पञ्चविंशत्यादिमात्रायुक्तः, शून्यकलः चयोविंशत्यादिमात्रः। झलवर्जितः झलप्रत्याहाररहितः, तेन झलप्रत्याहारे ये वर्णा झभघढधादयस्तद्राहित्यं न कार्यमन्तरा अन्तरा तादृशवर्णा देया इति भावः। उपमादयोऽलङ्काराः। षट्कलादिस्थाने पञ्चकलादियोगे छंदस उत्थापनं, तेन वोडोभद्गः। अर्थाभावे दुर्बलः। हठः प्रतिपदमेवौरहितः, स टेरः

वेकराद्यो भवति । प्रसादादिगुणरहितः काणो बधिरः । सर्व्वै-रङ्गैर्यथोक्तविन्यासविशिष्टः सकलमात्राभिर्युक्तश्चेद् राजा भवति । शृङ्गारवीरादिरसानुरूपगुणयुक्तः सर्व्वाङ्गशुद्धः । अत्रालंकारादि-राहित्यं काव्यदोषो न छन्दोदोष इति ध्येयम् । (C).

११६ । अथ काव्ये वर्जनीयदोषानाह पअह इति । पअह असुद्धउ—पादैः अशुद्धः न्यून इत्यर्थः पंगुः इत्युच्यते, पादचतुष्टय-मध्ये एकेनापि चरणेन हीनश्चेत्तदा पंगुरित्यर्थः । यत्तु पदे अशुद्धः प्राकृतव्याकरणदुष्ट इत्यर्थ इति तन्न, तथा सति संस्कृतरचित-काव्यस्य दुष्टत्वात् । हीनः पूर्वोक्तेन केनापि गणेन हीनश्चेदित्यर्थः तदा सः खोडउ—खंजः पभणिज्जइ—प्रभण्यते । यत्तु मात्रया हीन-इत्यर्थं इति तन्न, शून्यकलेत्यनेन पौनरुक्त्यापत्तेः । मत्तग्गल—मात्रयाधिकः लक्षणोक्तमात्रापेक्षया एकया एकयापि मात्रया अधिक इत्यर्थः, बाउल—व्याकुलः । सुणकल—शून्यकलः एकयापि मात्रया न्यून इत्यर्थः कण सुणिज्जइ—काणः श्रूयते । तथा श्लवज्जिअ—श्लकारलकाराभ्यां वर्जित इत्यर्थः बहिर—बधिरः । अलंकारैः रहितः अंधः । छंदउट्टवण विणु—छंदसः यत् उट्टवनम् उट्टवनिका तां विनेत्यर्थः, उट्टवनिकायां क्रियमाणायां यदि आद्यंतषट्कलस्थाने सप्तकलः पंचकलो वा पतति, एवं मध्यस्थचतुष्क-लेषु यदि कश्चित्पंचकलस्त्रिकलो वा भवति, तृतीये च जगण-विप्राभ्यामन्य एव गणः पततीत्यर्थः मूअउ—मूकः कथितः । अत्थ विणु—अर्थेन विना, दुब्बल कहिअउ—दुर्ब्बलः कथितः । ठट्ठ-क्खरहि—ठठाचरैर्टंठाक्षरैरचरैः परस्परमैत्रीरहितैरित्यर्थः [ठेरङ]

—डेरः केकरः होइ—भवति । गुण सव्वहि—सर्व्वगुणैः प्रसाद-प्रभृतिभिः रहितः काण—काणः भवति । एते कव्वह दोस—काव्यस्य दोषाः, सव्वंगसुद्ध समरूअगुण—सर्वांगशुद्धसमरूपगुणः सर्वांगे शुद्धः, समौ रूपगुणौ यस्य सः समरूपगुणः, सर्वांगशुद्ध-श्चासौ समरूपगुणश्च तादृशेन पिंगलेन कथिताः । अत्र हिअ इत्यचरद्वयमेकं बोध्यं "वस्रो बि तुरिअ पढिश्रो" इत्युक्तेः [Vide श्लोकः ८, p. 11. —Ed.] अन्यथा मात्राधिक्यापत्तिः । (E).

११६ । पादे अशुद्धः पंगुः हीनः खंजः प्रभण्यते । हीनो मात्रादिन्यूनः, मात्राधिको वातुलः, शून्यकलः कर्णः [?] श्रूयते ॥ झकारलकाराभ्यां वर्जितस्तदा बधिरोऽंधोऽलंकाररहितः, मूकस्तु-टितवर्णोऽर्थेन विना दुर्बलः कथितः, केकरो हठाचरैर्भवति, काणः सर्व्वगुणैरहितः । हठेति—हठाक्षिप्ताचरमित्यर्थः । सर्वांगशुद्धेन समरूपगुणेन षट्पददोषाः पिंगलेन कथिताः ॥ १६ ॥ (G).

[Hereafter the following śloka is seen in MS. (A) only.—Ed.]

कइ पीडइ पंगुलउ लच्छिअ पहरिअइ खोडउ
कुलहाणिअ बाउलउ कण्ण होइ पउर मक्कोलउ ।
बुद्धि हरइ बिमलंगु दुमण होइ अद्ध पआमइ
दुब्बल उब्बण बहइ देउलउ किग्ति बिणासइ ॥
काण कुब्ब बऊदुक्खकरु
पिंगल जंपइ कबि भणहु ।
तलउ जाणि छप्पअ करहु
सेस रहिअहु गुणिजणहु ॥ १४ ॥

बिप्प होअ[१] बत्तीस खत्ति बेआल[२] करिज्जसु[३]
अठतालिस[४] लहु वेस[५] सेस सुद्दउ सलहिज्जसु।
चउअग्गल[६] पअ बीस[७] मत्त[८] छाणवइ[९] ठविज्जसु
पंचताली[लि]सह[१०] णाम कव्वलक्खणाइ करिज्जसु[११]॥
छहबिस[१२] उल्लालहि[१३] एक्ककइ[१४]
बिम्मि पाअ छप्पअ मुणहु[१५]।
समबण्ण[१६] सरिससमदोसगुण[१७]
णाम एहत्तरि[१८] परिगुणहु[१९]॥११७[२०]॥ षट्पदम्।

११७। जातिदोष[भेद]माह। विप्रलोको द्वाविं[त्रिं]शता—क्षत्रियो द्विचत्वारिंशता—[अष्टचत्वारिंशता] लघुभिर्वैश्यः, शेषैः शूद्रः श्लाघ्यताम्। चतुरधिकचत्वारिंशद्लघुभिर्मात्राः षण्णवतिः स्थाप्यते। पञ्चचत्वारिंशन्नाम काव्यलक्षणं क्रियताम्। षड्विंशतिरुल्लाले एकीकृत्य द्वौ पादौ षट्पदं जानीहि। समवर्णं सदृशगुणं नामान्येकसप्ततिं जानीहि॥ द्वाविं[त्रिं]शतेत्यादौ लघुभिरित्यनुषज्यते। शेषैस्ततो-

११७। १ होम (A, B & C), होइ (E). २ वेआलीस (F). ३ भणिज्जसु (A). ४ चउतालो (B), चाउतालो (C). ५ बिस (B & C). ६ चउआग (B & C). ७ बालीस (B), बालीसगुरुहि (C). ८ मत्ता (F). ९ छाणवहि (B), छणवइ (C). १० पांचतालीसउ (B & C). ११ भणिज्जसु (D). १२ छहबीस (A & F), छवबीस (B), छवबिस (C), छहबीस (D). १३ उल्ला-लउ (A, B & C), उल्लाल (D & F). १४ एक्ककरि (A, B & C). १५ मचउ (A). १६ समवणहि (B), समवणुहि (C). १७ सरिसगुण (A), उसरिमुख (B), उपरिमुख (C), सरिसदोषगुण (F). १८ ए short, vide श्लोक ४, p. 7. १९ परिगुणउ (B, C, E & F), परिगुणह (D). २० ११ (A), १० (F).

ऽधिकैः, श्लाघ्यतां कथ्यताम्॥ चतुर्विंशतिमात्रैश्चतुर्भिः पादैः षण्णवति-मात्रा भवन्ति, तत्र चतुश्चत्वारिंशद्गुरवः सन्ति, पञ्चचत्वारिंशत्कामकं काव्यलक्षणं क्रियतामुल्लालपादयोर्मिलित्वा षड्विंशतिर्गुरवः सन्ति। अत्र च प्रतिपादं जगणस्थाने लघुद्वयमावश्यकं, तेन पादचतुष्टयेऽष्टौ लघव आवश्यकाः, अवशिष्टा अष्टाशीतिर्मात्राश्चतुश्चत्वारिंशद्गुरुभिः सम्भवन्ति, एवमुल्लालपादद्वये लघुचतुष्कमावश्यकं प्रतिपादं त्रिकल-गणद्वयस्य वक्ष्यमाणत्वात्। अवशिष्टा द्विपञ्चाशन्मात्राः षड्विंशति-गुरुभिः सम्भवन्ति, तेन षट्पदे सप्ततिर्गुरवः सम्भवन्ति। किन्तु जगणस्थाने चतुर्लघुकरणाद्विपञ्चाशदधिकशतमात्राः केवललघुभि-रपि सम्भवन्ति, ततश्चैकैकगुरुवृद्धिक्रमेण सप्ततिर्गुरवः संभवन्ति। (C).

११७। अथ वर्णलघुभेदेन काव्यस्य जातिमेकैकचरणस्थां चरणचतुष्टयसमुदितां च मात्रां कथयन् भूयोऽपि भेदसंख्यामनु-वदन् उल्लालगुरुसंख्यामुपदिशन् काव्योल्लालाभ्यां षट्पदं वृत्तं भवति तस्य चैकसप्ततिर्भेदा भवन्तीति षट्पदेनैवाह विप्पेति। विप्प — विप्रे विप्रजातीये काव्ये बत्तीस — द्वात्रिंशत् लहु — लघवः होइ — भवंति, खत्ति — क्षत्रिये क्षत्रियजातीये काव्ये बेआल — द्विचत्वारिंशत् लघवः करिज्जसु — क्रियंतां, वेस — वैश्यः अटतालिस — अष्टचत्वारिंशत् लघवः क्रियंतामिति पूर्वेणै-वान्वयः, सेस — शेषा उर्वरिता इति यावत् लघवः सुद्दहि[उ] — शूद्रजातीये काव्ये सलहिज्जसु — श्लाघ्यंतां, पअ — पाद एकैक-चरण इत्यर्थः काव्यस्येति भावः चउअग्गल — चतुरधिकाः वीस — विंशतिः चरणचतुष्टये च इति शेषः, छाणबइ — षण्णवतिः मत्त

—मात्राः ठविज्जसु—स्थाप्यंतां, कव्वलक्खणहि[ह]—काव्यलक्षणे पंचतालीसह णाम—पंचचत्वारिंशन्नामानि पूर्वोक्तानि शक्रादीनि भंगांतानीति भावः करिज्जसु—क्रियंतां, उल्लालहि—उल्लाले छव्विस—षड्विंशतिं गुरून् आनीहीति शेषः, बिण्णि पाअ—द्वयोः पादान् काव्योल्लालयोश्चरणान् एक्ककर—एकीकृत्य, सम-वण्ण—समा वर्णाः काव्योल्लालसमानाः वर्णा गुरुलघुरूपा यस्मि-न्तत्तादृशमित्यर्थः सरिससमदोसगुण—सदृशसर्वदोषगुणं सदृशाः काव्यसमानाः सर्वे दोषा गुणाश्च यस्य तत्तादृशमित्यर्थः छप्पअ—षट्पदं वृत्तं मुणहु—जानीत, तस्य चेति शेषः एहत्तरि णाम—एकसप्ततिनामानि परिमुणहु—परिजानीतेति योजना। एह-त्तरीत्येकारो लघुर्बोध्यः। अयमर्थः—काव्यचरणचतुष्टयस्याष्टचत्वारिंशत् गुरवस्तृतीयजगणदानपक्षे चाष्टौ लघवः, उल्लालचरण-द्वयस्य च षड्विंशतिर्गुरवः, पादद्वयस्थचिकलचतुष्टयांतर्गताश्च चत्वारो लघ[व] एवं मिलित्वा सप्ततिर्गुरवो द्वादश लघवश्च षट्पदे पतंति, तत्र चैकैकगुरुह्रासेन क्रमेण तत्समानसंख्याकलघुद्वयवृद्ध्या एकसप्ततिर्भेदा भवंति। तांश्च भेदाननुपदमेव प्रपंचयिष्याम इति सुधीभिर्ध्येयम्। (E).

११०। जातिभेदमाह॥ विप्पेति॥ विप्रा भवति द्वाचिंशद्भिः, क्षत्रिया द्विचत्वारिंशद्भिः॥ अष्टचत्वारिंशद्भिर्वैश्या, शेषैः शूद्रि[द्रा]णी ज्ञायतां॥ चतुरधिका पदे विंशतिर्मात्राः, षण्णवतिः स्थाप्यतां॥ चरणचतुष्टये इत्यर्थः॥ पञ्चचत्वारिंशन्नामानि काव्यलक्षणस्य क्रियंतां॥ सर्वलघुगुरुभेदेन सहेत्यर्थः॥ षड्विंशतिमुल्लालस्यैकीकृत्य

अह उल्लाल लक्खण[1] । (B).

तिण्णि[2] तुरंगम तिअल[3] तह[4] छह[5] चउ तिअ तह[6] अंत[7] ।
एम उल्लाल[8] उट्टवहु[9] विहु[10] दल छप्पण मत्त ॥ ११८[11] ॥

दोहा ।

---

द्वौ पादौ षट्पदे जानीत ॥ उल्लालचरणद्वये लघुचतुष्टयं षड्विं-
शतिगुरूंश्चैकीकृत्य चरणद्वयमेवं षट्पदं जानीतेत्यर्थः ॥ समवर्ण-
सदृशदोषगुणनामानि एकसप्ततिं परिजानीत ॥ अत्र यथा काव्य-
दोषास्तथा उल्ला[ल]स्यापि भवंति ॥ एवं [पंच]चत्वारिंशत्काव्यभेदाः
षड्विंशतिरुल्लालस्येति एकसप्ततिर्भेदा इत्यथ उल्लालेऽपि एकसप्तति-
र्भेदा भवंतीत्यर्थः ॥ (G).

११८। अथोल्लाले गणनियममाह। त्रयस्तुरङ्गमास्त्रिकलगण-
स्तथा षट् चत्वारस्त्रयस्तथा अन्ते, एवमुल्लाल उत्थाप्यतां षट्पञ्चा-
शन्मात्राः ॥ तुरङ्गमशब्दश्चतुष्कलवाची, ततः त्रिकलः, ततः षट्कल-
स्ततश्चतुष्कलः ततस्त्रिकलः एवमष्टाविंशतिकलः पादः, दलद्वयेन
च षट्पञ्चाशन्मात्रा भवन्ति ॥ (C).

११८। अथ षट्पदोपोद्घातेनोल्लालं लक्षयति तिण्णि तुरंगमेति।
प्रथमं तिण्णि[—त्रयः] तुरंगमाश्चतुष्कला गणाः, तह — ततः, तिअल

---

११८। १ अथोल्लाललक्षणं (A), अथ उल्लाललक्खण (C), अथोल्लाल (D).
२ तिणि (A & D). ३ तीअ (F). ४ तह (F). ५ चउ (B & C), चउ
(F). ६ तह (B), तिलह (C), तेणि (E). ७ अंत (C), अंते (E).
८ उल्लाला (A, B & D). ९ ठवह (A), उट्टवह (B & C). १० विह (D).
११ ११९ (A), ११८ (F).

—त्रिकलः गणः, तेहि अंत—तस्य त्रिकलस्यांते छह चउ तिण्ण—षट् चतस्रः तिस्रः मात्रा इति शेषः प्रत्येकं योजनीयः, एम—एवं, बिहु दल छप्पण मत्त—द्विदलषट्पंचाशन्मात्राकं द्वयोर्दलयोर्मिलित्वा षट्पंचाशन्मात्रा यस्य तत्तादृशमित्यर्थः, उल्लाल—उल्लालं उल्लालनामकं वृत्तं, उट्टवहु—उट्टवयत उट्टवनिकाविषयं कुरुतेति यावत्। अथवा षट्पंचाशन्मात्राकमुल्लालं बिहु दल—द्वयोर्दलयोरुट्टवयत, एम—[ए]वं दलद्वयेऽपि गणान् विभजत ॥ इदमत्रावधेयम्। त्रिचतुष्कलानां षट् गुरवस्तदनंतरपतितस्य त्रिकलस्य च एको गुरुस्तदनंतरपतितस्य षट्कलस्य च त्रयो-गुरवस्तदनंतरपतितस्य चतुष्कलस्य च गुरुद्वयं तदनंतरपतितस्य त्रिकलस्य चैको गुरुरेवं प्रतिचरणं त्रयोदशगुरवो लघुद्वयं चैव-मष्टाविंशतिर्मात्राः एके दले पतंति, दलद्वये च मिलित्वा षड्विं-शतिर्गुरवश्चत्वारश्च लघवः एवं षट्पंचाशन्मात्राः पतंति। एवं च काव्यवदुल्लालेऽपि सर्वे वर्णा गुरुरूपा न संभवंति। तथा हि यदि त्रिकलो गुर्वादिस्तदंतो वा दीयते, तदा एकैकपादे त्रिकल-द्वयांतर्गतं लघुद्वयमावश्यकं, द्वयोर्दलयोश्च लघुचतुष्टयं, यदि च त्रिकलस्य मात्रात्रयमपि लघुरूपमेव क्रियते, तदा तु त्रिकल-द्वयस्य षट् लघ[व] एकैकचरणे, द्वयोर्दलयोश्च द्वादश लघवः आवश्यका इति कथमपि उल्लाले सर्वे वर्णा गुरुरूपा न संभवंत्येव, लघुरूपास्तु संभवंत्येव, त्रिकलानामपि सर्वलघुरूपाणां संभवादत-एव क्वचित्सर्वगुर्वात्मकवर्णचमय[?]मुदाहरणमपि दृश्यते तल्लेखक-प्रमादात्पतितमिति बोध्यम्। अत्राप्येकैकगुरुह्रासेन क्रमेण लघु-

जहा[1], जाआ जा अद्धंग[2] सीस[3] गंगा लोलंती
सव्वासा पूरंति सव्व[4] दुक्खा[5] तोलंती।
णाआ राआ हार[6] दीस[7]वासा भासंता[8]
वेआला जा संग[9] णट्ठ[10] दुट्ठा[11] णासंता॥
णाचंता[12] कंता उच्छ्छवे[13] ताले भूमी कंपले।
जा दिट्ठे मोक्खा पाविज्ज[14] सो तुम्हाणं सुक्ख[15] दे[16]॥
११९[17]॥ [छप्पअ]

दयवृद्ध्या सर्वलघ्वन्ताः सप्तविंशतिर्भेदाः संभवंति, ते च ग्रंथकृता न प्रदर्शिताः, अप्रदर्शिता अपि स्वयमूहनीयाः, मया तु ग्रंथविस्तर-भयान्न प्रदर्शिता इति सुधीभिर्विभावनीयम्। (E).

११८। अथोल्लाललक्षणमाह॥ तिणीति॥ त्रयस्तुरंगमास्त्रिकलः षट्कलश्चतुष्कलस्त्रिकलस्तस्यांते॥ एवमुल्लालमुद्दवयंतु द्वयोर्दलयोः षट्पंचाशन्मात्राः॥ तुरंगमश्चतुर्लघुः॥ (G).

११९। तत्र सर्व्वगुरुमुदाहरति। जाया यस्यार्द्धाङ्गे, मस्तके गंगा लोलते, सर्व्वाशाः पूरयति यः सर्व्वाणि दुःखानि त्रोटयति, नागराजहारः दिशो वासः भासते, वेताला यस्य सङ्गे नष्टान्

११९। १ सव्वगुरु जहा (E). २ अद्धंगे (A & C), जाआअंगे (D). ३ Dropt in (A), सीस (B & C), सीसे (D). ४ सव्वा (A), सव्वतो (D). ५ दुःखं (B & C), दुक्खं (D). ६ हारा (A & D). ७ दीसा (A & D). ८ Dropt in (D), वासंता (E). ९ संगे (A, C & D). १० णट्ठा (A), dropt in (D). ११ दुट्ठा (E). १२ णचंता (A). १३ उच्छवे (B, C & F). १४ पाविज्जे (A), पाविज्जा (B, C & D), पावइ (F). १५ सुक्खं (A), सुक्ख (B), तुम्हाणं सुक्ख (C), सुक्खा (D). १६ दो (D, E & F). १७ ११ (A), १९ (F).

दुष्टान् नाशयति। नृत्यति कान्तया[या] उच्चैर्वेतालैः भूमिं कम्पयन् यस्य दृष्ट्या मोक्षः प्राप्यते, स युष्माकं सुखं ददातु ॥ अत्र च प्रथमचतुर्थपादयोरेकारस्य वर्णमिलितस्य लघुत्वात् तृतीये जगणो न विरुध्यते, किन्तु आवश्यकलघुव्यतिरिक्तानां सर्व्वेषां गुरुत्वादस्य सर्व्वगुरुत्वमिति ध्येयं, न तु सर्व्व एव गुरुरिति भ्रमः कार्य्यः । (C).

११९। अथ काव्योल्लालयोः सर्वगुर्वात्मकमाद्यभेदमुदाहरति जाआ जा अद्धंगेति। जा अद्धंग—यदर्द्धाऽंगे जाआ—जाया पार्वतीति यावत् शोभते इति शेषः, अग्रेऽपि योजनीयः, सीस—शीर्षे सव्वासा पूरंति—सर्वाशाः पूरयंती सव्वदुक्खा तोलंती—सर्व्वदुःखानि त्रोटयंती एतादृशी गंगा लोलंती—लोलायमाना। अत्र गंगाविशेषणद्वयं पार्वत्या अपि योजनीयम्। यस्स णाआ राआ हार—नागराजहारः नागराजस्य वासुकेर्हारो-यस्य तादृश इत्यर्थः। यस्स दीसवासा वासंता—दिग्वासो वसानः। जा संग—यत्संगे णट्ठ उट्ठा णासंता—नष्टदुष्टान् नाशयंतः, अत्र नष्टशब्दो धूर्त्तवाची, तथाच धूर्ता ये दुष्टा वैरिणस्तान् नाशयंत-इत्यर्थः, उक्कवे—उत्सवे कंता—कांतं यथा स्यात्तथा णाचंता—नृत्यंतः, ताले भूमी कंपले—तालकंपितभूमयः, अथवा येषां तालेन भूमिः कंपिता, तादृशा बेआला—वेतालास्तिष्ठंतीति शेषः। जा दिट्ठे—यस्मिन्दृष्टे मोक्खा पाविज्ज—मोक्षः प्राप्यते, सो तुम्हाणं—स युष्मभ्यं सुक्ख दो—सुखं ददातु। अत्र जाआ जा अद्धंगेत्यारभ्य णट्ठ उट्ठा णासंता एतावत्पर्यंतं पादचतुष्टयं काव्यस्योदाहरणमेतदग्रे च चरणद्वयमुल्लालस्येति बोध्यम्। (E).

चउआलिस[1] गुरु कव्वके[2] छहबीसउ[3][4] उल्लाल।
जं[5] गुरु टुट्टइ लहु[6] बढइ[7] एहत्तरि[8] पत्थार[9] ॥१२०[10]॥

दोहा।

---

११९। अथ षट्पदस्य प्राकृतीप्रस्तारगतं सर्वगुरुभेदमुदाहरति॥ सर्वगुरुभेदो यथा॥ जाआ इति॥ जाया अ[य]स्यार्द्धांगे गौर्वि गंगा लुठंती, सर्वाशाः पूरयति सर्वदुःखानि त्रोटयति। नागराजो हारः दिग्वासो भाषते, वेताला यस्य संगे नष्टदुष्टान्नाशयंति॥ नृत्यत्-[ति] कांतमुत्सवे ताले भूमिः कंपिता। यस्मिन्दृष्टे मोक्षः प्राप्यते, स युष्माकं सुखं ददातु॥ १९॥ (G).

१२०। एतदेव स्पष्टयन्नाह। चतुश्चत्वारिंशद्गुरवः काव्यस[स्य] षड्विंशतिरुल्लालस्य। यद्गु[रु]स्त्रुट्यति लघुर्वर्द्धते एकसप्ततिः प्रस्ताराः —काव्यच्छन्दसः॥ (C).

१२०। अथ षट्[पद]भेदानयनप्रकारमाह चउआलिसेति। चउआलिस गुरु कव्वके—[चतुः]चत्वारिंशद्गुरवः काव्यस्य, छहबीसह —षड्विंशतिर्गुरवः इत्यनुषंगः, उल्लाल—उल्लालस्य। जं गुरु टुट्टइ—यः गुरुस्त्रुटति, लहु बढइ—लघुर्वर्द्धते, अतः एहत्तरि—एकसप्ततिः पत्थार—[प्रस्तारः] भेदेषणा भवतीति शेषः॥ भावस्तु पूर्वमेवोक्तः। (E).

---

१२०। १ चउआलीस (B & C). चउआल (D), चउआली (F). २ कव्वक (F). ३ छच (B & C). ४ बीस गुरु (B), विस (C), बीसु (D), बीसह (E), बीस (F). ५ Non est (B & C). ६ लेहु (A & B). ७ बढ्ढ (A, B, & C). ८ एहत्तर (F). ९ पत्थार (A). १० ६० (A), २० (F).

अथ शाल्मली[ली]प्रस्तारः । (A).

अजअ वेआसी[1] अक्खर[2] गुरु सत्तरि रवि रेह ।
एक्कक्खर[3] चल[4] गुरु घटइ[5] दुद्दुइ[6] लहुआ देह[7] ॥१२१[8]॥
दोहा ।

---

१२० । अथ भेदानयनप्रकारमाह ॥ चउ इति ॥ चतुश्चत्वारिंशद्गुरवः काव्ये षड्विंशतिर्लघवः । यथा गुरुस्त्रुट्यति लघुर्वर्धते एकसप्ततिः प्रस्तारः ॥ सर्वलघुभेदेन सहैकसप्ततिर्भेदा भवंतीत्यर्थः ॥ २० ॥ (G).

१२१ । प्रस्तारं दर्शयति अजअ इति । अजये द्व्यशीत्यक्षराणि गुरवः सप्तती रविरेखाः । एकाक्षरं चलति गुरुस्त्रुटति द्वौ द्वौ लघू आनय ॥ एकसप्ततिप्रस्तारेषु प्राथमिकमजयनामकं छन्दः, तत्र द्विरशीत्यक्षराणि भवन्ति, तत्र सप्ततिर्गुरवः रविरेखा द्वादश लघवः, षट्सु पदेषु एकसप्ततिमध्ये एकमक्षरं चलति स्रवति तेन गुरुस्त्रुट्यति तत्स्थाने लघुद्वयं स्थाप्यते, इत्येवंक्रमेणैकसप्ततिर्भेदाः भवन्ति । (C).

१२१ । अथैतमेवार्थं प्रकारांतरेणाह, अजअ इति । गुरु सत्तरि—गुरवः सप्ततिः, रवि रेह—रविरेखाः रविसंख्याका रेखाः

---

१२१ । १ वेआसि (C), बयासी (E), वेआसी (F). २ अक्खरह (A, B & C), अक्खरहि (E), अक्खरउ (F). ३ एकक्खर (B & F). ४ चलइ (A), चल (D & E), चलइ (F). ५ घटइ (A, B & C). ६ दुइ (A), दुअइ (C), दहलघरि (D), दुदुइ (E), दु तह दुइ (F). ७ देउ (A), कीअ (E & F). ८ १८ (A), २१ (F).

अजअ[1] बिजअ[2] बलि कस[3] बीर बेआल बिहसरु[4]
मक्कलु[5] हरिहर बंभ[6] इंदु[7] चंदगु सुसुहंकरु[8] ।
साग[9] सीहु[10] सद्दूल[11] कुम्म कोइल खर[12] कुंजरु
मअग[13] मच्छ तालंक[14] सेस सारंग[15] पओहरु[16] ॥
ता[17] कुंद कमलु[17] बारग[18] भसल[19]
सरहु[20] जंगमु[21] सर बिल हुइ[22] ।
सुसउ[23] समरु[24] सारसु सरअ[25]
छप्पअ[26] गाम पिंगलु[27] कहइ ॥ १२२[28] ॥ छप्पअ ।

---

द्वादश लघव इति यावत्, एवं ययासौ [बेआलो] अक्खरहि — द्वाभ्यामक्षरैः अजअ — अजयनामा षट्पदस्य प्रथमो भेद इत्यर्थः । तत्र गुरु घटइ — एकैकगुरुह्रसति, दुहुइ लहुआ लेइ[इ] — द्वौ द्वौ

---

१२२ । १ अजउ (B & C). २ बिजउ (B, C & D), बिअ (E). ३ कस (A & B). ४ बिरइसु (B), बिरइसर (A & C), बिरहठ (E) ५ मक्कल (A & C). ६ बम्भ (B). ७ इन्द (B). ८ सुहलकर (A), भयहुकर (C), सुसहंकार (D), सुहंकर (F). ९ साणु (A), साल्ल (C). १० सिह (D & F). ११ सद्दूल (D). १२ खर (B & C). १३ मअग (F). १४ Transposed in (B & C). १५ सर (A, E & F). १६ Non est (E). १७ कमल (A, B & C). १८ बारु (C). १९ भसर (B & C), dropt in (D & F), transposed in (E). २० सुरउ (A), सरह (C). २१ जजमउ (A), जजंम (B), जिगंम (C), जंगम (D), जंगमु (E). २२ हुउ सबइ सर (A), कुंठ बिलहइ सब (B), सर बिल बिबइ (C), अइस इवि लहइ सब (D), इस ठवि लेइइ (E), जुहइइ हा सब (F). २३ Dropt in (B), सब (C), सुमर (D, E & F). २४ Dropt in (B), पुक्खर (C). २५ सरउ (A), dropt in (B & C), सरउ (E). २६ छप्प (C). २७ पिंगल (A, B & C). २८ १९ (A), २२ (F).

लघुकौ यावत्तौ वर्द्धनीयाविति यावत् । एवं सति एकैकचर षड —एकैकमचरं वर्द्धते [* *] ॥ अयमर्थः । तृतीयजगणपचे काव्यस्य [चतुः]चत्वारिंशद्गुरवः अष्टौ लघव उल्लालस्य षड्विंशतिर्गुरवश्चत्वारो-लघव एवमुभयोर्मिलित्वा सप्ततिर्गुरवो द्वादश लघवो यत्र पतंति स अजयः, तत्र च यदि एकैको गुरुर्न्हसति तत्समानसंख्याक-मात्राकं च लघुद्वयं वर्द्धते, एवं च पूर्वपूर्वभेदापेचयोत्तर[रोत्तर]-भेद एकैकमचरं वर्द्धते तदा ते ते भेदा भवंति । एतस्यैव प्रस्तारस्य शाल्मलीप्रस्तारसंज्ञा । (E).

१२१ । अस्य शाल्मल्यभिधस्य प्रस्तारस्य विशेषमाह ॥ अजेति ॥ अजये द्व्यशीत्यचराणि, गुरवः सप्ततिः, रवयो रेखाः ॥ एकाचरं वर्धते, गुरुस्त्रुट्यति, तदा द्वौ द्वौ लघू ग्टहाण ॥ अजयनाम्नि भेदे द्व्यशीत्यचराणि भवंति ॥ तत्र सप्ततिर्गुरवो द्वादश लघव इति ॥ (G).

१२२ । अथैकसप्ततिभेदानां नामान्याह । अजयो विजयो बलिः कर्णो वीरो वेतालो दृहन्नलो मर्कटो हरिहरौ ब्रह्मा इन्दुश्चन्दनं भयंकरः शालः सिंहः शार्दूलः कूर्मः कोकिलः खरः कुञ्जरो मदनो मत्स्यः सारंङ्गः शेषतारङ्कः पयोधरः कुन्दं कमलं वालभवनः सरभः मृगाङ्कः शरं विलं छितं[?] सरः पुष्करः समरं सारं सुकरः षट्पदे नाम पिंगलः कथयति ॥ (C).

१२२ । अथैकसप्ततिभेदानां नामान्याह अजश्च इत्यादिना । अजयः १, विजयः २, बलिः ३, कर्णः ४, वीरः ५, वेतालः ६, बृहन्नटः ७, मर्कटः ८, हरिः ९, हरः १०, ब्रह्मा ११, इंदुः १२, चंदनं १३, शुभंकरः १४, श्वा १५, सिंहः १६, शार्दूलः १७, कूर्मः

मेरु मअरु[1] मअ सिद्धि बुद्धि करअलु[2] कमलाअरु[3]
धवल[4] मलउ[5] धुअ कणउ[6] किसणु[7] रंजणु[8] मेहाअरु[9]।
गिम्ह[10] गरुड[11] ससि सूर सल्ल[12] णवरंग मणोहरु[13]
गअणु[14] रअणु[15] णरु[16] हीरु[17] भमरु[18] सहेरु कुसुमाअरु[19]॥
ता दिप्पु[20] संखु[21] वसु सद्द[22] मुणि णाअराअ पिंगलु[23] कहइ।
छप्पअ[24] णाम[25] एहत्तरिहि[26] छंदआर पत्थरि[27] लेहइ[28]॥
१२३[29] ॥ छप्पअ ।

---

१८, कोकिलः १९, खरः २०, कुंजरः २१, मदनः २२, मत्स्यः २३, ताडंकः २४, शेषः २५, सारंगः २६, पयोधरः २७, कुंदः २८, कमलं २९, वारणः ३०, शरभः ३१, भमलो — भ्रमरः भास्करश्च ३२, जांगलः ३३, शरः ३४, सुसरः ३५, समरं ३६, सारसः ३७, सरसः ३८, इत्थ — इति छप्पअ णाम — षट्पदनामानि ठवि —

---

१२३। १ मअर (E). २ कलअल (A). ३ कमलाकर (E), कमलाअ (F). ४ धवलु (B & C). ५ मणउ (D & F). मअण (E). ६ कण (A & B), धण (C), कणअ (E) ७ किसउणु (A), किसइ (B), किसअ (C), कीसणु (F). ८ रंजण (A). ९ मेहाअु (E). १० गिम्ह (A & D), गीम्ह (B) ११ गरुअ (A), गरुअ (B & C). १२ मल्लण (A), मल्ल (C). १३ पओहर (A). १४ गअण (A), गअणु (D). १५ रअण (A), रअणु (D). १६ रणु (D). १७ हार (A). १८ भमाअ (D) १९ कुसुमाअर (B) २० ता दीप्पु (D), ता दिप्प (C & F), ता दिप्पं (E) २१ संख (D), स (E) २२ सकु (B), सद्द (C). २३ पिंगल (A & F). २४ छप्पअइँ (D), छप्पइ (E). २५ णाम (B). २६ एहत्तरहि (B & C) २७ पत्थरि (A). २८ लहइ (A & D), किज्जइ (B & C), कहइ (F) २९ १० (A), १३ (F).

स्थापयित्वा लेहर—लभ्यंत इति पिंगल कहइ—पिंगलः कथयति ॥ (E).

१२२ । अथ नामान्याह ॥ अजयः १, विजयः २, बलिः ३, कर्णः ४, वीरः ५, वेतालः ६, वृहन्नलः ७, मर्कटः ८, हरिः ९, हरः १०, ब्रह्मा ११, इंदुः १२, चंदनं १३, शुभंकरः १४, श्वा १५, सिंहः १६, शार्दूलः १७, कूर्मः १८, कोकिलः १९, खरः २०, कुंजरः २१, मदनः २२, मत्स्यः २३, तालंकः २४, शेषः २५, सारंगः २६, पयोधरः २७, ततः कुंदं २८, कमलं २९, वारणः ३०, शरभः ३१, जंगमः ३२, धुतीष्टः ३३, दाता ३४, शरः ३५, सुशरः ३६, समरं ३७, सारसः ३८, सरटः ३९, षट्पदनामानि पिंगलः कथयति ॥ २२ ॥ (G).

१२३ । मेरुः मकरः मृगः सिद्धिर्बुद्धिः करतलं कमलाकरः धवलो मलयो ध्रुवो धर्म्मः किसलयो व्यजनं[?] मेधाकरः ग्रीष्मः गरलं[?] शशी सूरः मन्दो नवरङ्गः मनोहरो ग[ग]नं रत्नं नरः हीरं भ्रमरः शेखरः कुसुमाकरः ततो दीपः शङ्खः वसुः सत्यः शृणु नागराजपिङ्गलः कथयति षट्पदनामान्येकसप्ततिं छन्दसां परं कथयति ॥ (C).

१२३ । मेरुः ३९, मकरः ४०, मदः ४१, सिद्धिः ४२, बुद्धिः ४३, करतलं ४४, कमलाकरः ४५, धवलः ४६, मदनः ४७, ध्रुवः ४८, कनकं ४९, कृष्णः ५०, रंजनः ५१, मेधाकरः ५२, ग्रीष्मः ५३, गरुडः ५४, शशी ५५, शूरः ५६, शल्यं ५७, नवरंगः ५८, मनोहरः ५९, गगनं ६०, रत्नं ६१, नरः ६२, हीरः ६३, भ्रमरः ६४, सेखरः ६५, कुसुमाकरः ६६, दिपः ६७, शङ्खः ६८, वसुः ६९, शब्दः ७०,

जत्ते[1] सव्वहि[2] होइ लहु अह विसज्जहु[3] ताम[4]।
तह वि[5] विसज्जहु[6] एक्कसरु[7] एहि[8] पमाणे[9] णाम॥ १२४[10]॥
दोहा। इति षट्पदप्रकरणम्॥

मुनिः ७१, इति एहत्तरिहि—एकसप्ततिः षट्पदनामानि छंद-ग्गार—छंदःकारकः पत्थरि—प्रस्तार्य्य लेहइ—लभते, इति पिंगलः कहइ—कथयति॥ (E).

१२३। मेरु इति॥ मेरुः ४०, मकरः ४१, मदः ४२, सिद्धिः ४३, बुद्धिः ४४, करतलं ४५, कमलाकरः ४६, धवलः [४७,] म[द]नः ४८ ध्रुवः ४९, कनकं ५०, कूर्म्मः[?] ५१, रंजनः ५२, मेधाकरः ५३, ग्रीष्मः ५४, गरुडः ५५, शशी ५६, सूर्यः ५७, शल्यं ५८, नवरंगः ५९, मनोहरः ६०, गगनं ६१, रत्नं ६२, नरः ६३, हीरः ६४, भ्रमरः ६५, शेखरः ६६, कुसुमाकरः ६७, ततः दीपः ६८, शंखः ६९, वसुशब्दः ७०, मुनिः ७१॥ नागराजः पिंगलः कथयति॥ षट्पदे नामान्येकसप्ततिः छंदस्कारः प्रस्तार्य्य कथयति॥ २३॥ (G).

१२४। तथाहि यावद्भवति सर्व्वैर्लघुभिरर्द्धं विसर्जय। तथापि एकं शरम् एतत्प्रमाणं नाम॥ सर्व्वैर्लघुभिर्द्वि[र्द्वि]पञ्चाशदधिकं [शतं] तस्यार्द्धंदूरीकरणे षट्सप्ततिरवशिष्यते। तत्रैकपञ्चसंख्यायां

१२४। १ जेत्ते (B, C & E), जवे (D), जंग (F). २ सव्वर (B & C). ३ विसज्जइ (B & C), विसज्जिविं (D). ४ ताहु (F). ५ पुणवि (A), तथंवि (D). ६ विसज्जइ (B & C), विसज्जिविं (D), विसज्जहं (E), विसज्जाउ (F). ७ एक्कक्सरु (B), एक्कसर (C & F). ८ एक (A), एम (B & C). ९ पमाणे हि (B & C), परमाणे (D). १० १२ (A), १४ (F).

दूरीकृतायामेकसप्ततिनामानि भवन्तीत्यर्थः। इति षट्पदप्रकरणम् ॥ (C).

१२४। अथैतेषां प्रकारांतरेण संख्यामाह जत्ते इति। यावंतः सर्व्वे लघवो भवंति अर्द्धं विसृज्यतां तन्मध्ये। तचापि विसृज एकं शरं पंचकं, शर इति पंचसंज्ञा, एतत्प्रमाणेन नामानि विद्धीति शेषः॥ अयमर्थः, द्विपंचाशदुत्तरं शतं लघवः अंतिमभेदे ये, तन्मध्ये अर्द्धत्यागे षट्सप्ततिरवशिष्यते, तत्र पंचत्यागे एकसप्ततिरवशिष्यते, तत्प्रमाणेन एकसप्ततिप्रमाणानि नामानि भवंतीत्यर्थः।

अथैते भेदाः स्वरूपतो लिखित्वा प्रदर्श्यंते। गुरु ७० लघु १२ अजयः, गुरु ६९ लघु १४ विजयः, गु ६८ ल १६ बलिः, गु ६७ ल १८ कर्णः, गु ६६ ल [२०] वीरः, गु ६५ ल २२ वेतालः, गु ६४ ल २४ वृहन्नटः, गु ६३ ल २६ मर्कटः, गु ६२ ल २८ हरिः, गु ६१ ल ३० हरः, गु ६० ल ३२ ब्रह्मा, गु ५९ ल ३४ इंदुः, गु ५८ ल ३६ चंदनं, गु ५७ ल ३८ शुभंकरः, गु ५६ ल ४० श्वा, गु ५५ ल ४२ सिंहः, गु ५४ ल ४४ शार्दूलः, गु ५३ ल ४६ कूर्मः, गु ५२ ल ४८ कोकिलः, गु ५१ ल ५० खरः, गु ५० ल ५२ कुंजरः, गु ४९ ल ५४ मदनः, गु ४८ ल ५६ मत्स्यः, गु ४७ ल ५८ ताडंकः, गु ४६ ल ६० शेषः, गु ४५ ल ६२ सारंगः, गु ४४ ल ६४ पयोधरः, गु ४३ ल ६६ कुंदः, गु ४२ ल ६८ कमलं, गु ४१ ल ७० वारणः, गु ४० ल ७२ शरभः, गु ३९ ल ७४ भमलः, गु ३८ ल ७६ शांगलः, गु ३७ ल ७८ शरैः, गु ३६ ल ८० सुसरः, गु ३५ ल ८२ समरं, गु ३४ ल ८४ सारसः, गु ३३ ल ८६ सरसः,

अथ पज्झटिका छंदः । (D).

चउ[1]मत्त करहु[2] गण चारि ठाइँ[3]
ठइ अंत[4] पओहर पाइँ पाइँ ।
चउ[5]सट्ठि[6] मत्त पज्झलइ[7] इंदु
सम[8] चारि पाअ पज्झटिअ[9] छंदु ॥ १२५[10] ॥

---

गु ३२ ल ८८ मेरुः, गु ३१ ल ९० मकरः, गु ३० ल ९२ मदः, गु [२९ ल ९४ सिद्धिः, गु २८ ल ९६] बुद्धिः, गु २७ ल ९८ करतलं, गु २६ ल १०० कमलाकरः, गु [२५ ल] १०२ धवलः, गु २४ ल १०४ मदनः, गु २३ ल १०६ ध्रुवः, गु २२ ल १०८ कव[न]कं, गु २१ ल ११० कृष्णः, गु २० ल ११२ रंजनः, गु १९ ल ११४ मेधाकरः, गु १८ ल ११६ ग्रीष्मः, गु १७ ल ११८ गरुडः, गु १६ ल १२० शशी, गु १५ ल १२२ सूरः, गु १४ ल १२४ शल्यं, गु १३ ल १२६ नवरंगः [गु १२ ल] १२८ मनोहरः, गु ११ ल १३० गगनं, गु १० ल १३२ रत्नं, गु ९ ल १३४ नरः, गु ८ ल १३६ हीरः, गु ७ ल १३८ भ्रमरः, गु ६ ल १४० शेखरः, गु ५ ल १४२ कुसुमाकरः, गु ४ ल १४४ दिपः, गु ३ ल १४६ शंखः, गु २ ल १४८ वसुः, गु १ ल १५० शब्दः, ल १५२ मुनिः ॥ ७१ ॥ (E).

---

१२५ । १ चो (E). २ करहि (D & E), करऊ (F). ३ मच (D), चारि (F). ४ चांत (E). ५ चौ (E & F). ६ सट्ठि (C). ७ पज्झरइ (B, C, D & E). ८ एम (A, B, C, D & E). ९ पज्झटिअ (A, B & C). १० २२ (A), २१ (F).

१२४। पुनः प्रकारांतरेण नामसंख्या[न]यनमाह ॥ अन्ते इति ॥ यावंतः सर्वे भवंति लघवः अर्धं विसर्जय तेषु। तत्रापि विसर्ज्ज्यैकवारं शरान् अनेन प्रमाणेन नामानि ॥ यथा षट्पदसर्वलघवः १५२, तेषामर्धं ७६, तत्रापि [५] पंच त्याज्याः, अवशिष्टाः ७१ इति प्रकारेण जातानि नामानीत्यर्थः ॥ इति षट्पदप्रकरणम् ॥ (G).

१२५। अथ प्रोज्झटिकाच्छन्दः ॥ चतुर्मात्राः क्रियन्तां गणाश्चत्वारः अन्ते पयोधरः स्थाप्यतां पादे पादे। चतुःषष्टिमात्रं प्रज्झरतीन्दुरिव चतुर्भिः पादैः प्रोज्झटिकाच्छन्दः ॥ पादे पादे चतुर्मात्राश्चत्वारश्चत्वारो गणाः क्रियन्तां, तत्रान्त्यो गणो मध्यगुरुः, पयोधरशब्दो मध्यगुरुवाची। यथेन्दुरमृतं प्रोज्झति, एवं प्रोज्झटिकशब्दोऽप्यमृतं चरतीत्यर्थः ॥ पज्झटिकेति केचिद्वदन्ति ॥ (C).

१२५। अथ पज्झटिकावृत्तं लक्षयति चउमत्तेति। अंत — अंते, पओहर — पयोधरं मध्यगुरुं जगणमिति यावत् ठइ — स्थापयित्वा, अंतस्थं चतुर्मात्रिकं जगणस्वरूपमेव विधायेत्यर्थः, पाइ पाइ — पादे पादे प्रतिचरणमिति यावत् चारि ठाइ — चतुःसंख्याकान् चउमत्त — चतुर्मात्रिकान् गणान् करहि — कुरुष्व। एम — एवं, चारि पाअ — चतुःपादे चउसट्ठि मत्त — चतुःषष्टिमात्राकं पज्झटिअ छंद — पज्झटिकाच्छंदः भवति, एतत् श्रुत्वेति शेषः इंदुः पज्झरइ — प्रस्रवति ॥ प्रथमं त्रयश्चतुष्कलास्तदनंतरमेको जगण एवं षोडश मात्राः प्रतिचरणं यत्र पतंति, तत्पज्झटिकावृत्तमिति फलितार्थः ॥ (E).

१२५। अत्र चतुःषष्टिमात्रकं भेदत्रयं, तत्र पर्यंटिकामाह ॥

जहा, जे गंजिअ गोलाहिवइ[1] राउ[2]
उद्दंड[3] ओड्ड[4] जसु[5] भअ[6] पलाउ[7] ।
गुरुविक्कम विक्कम जिणिअ[8] जुज्झ[9]
ताकस्स परक्कम[10] कोइ[11] बुज्झ ॥ १२६[12] ॥
पज्झलिआ[13] । (A & F).

घउ इति ॥ चतुर्मात्राः कार्या गणाश्चत्वारश्चत्वारः स्थापयांते पयोधरं पादे पादे ॥ चतुःषष्टिमात्राभिः पर्यटिका भवति इंदुसमाश्चत्वारः पादाः पर्यटिकाच्छंदसि ॥ अंत इति ॥ चतुर्थो गणो-जगणरूपः कार्य इत्यर्थः ॥ २६ ॥ (G).

१२६ । उदाहरति ॥ यो गञ्जितगौडाधिपतिराजः उद्दण्डओड्रो यस्य भयेन पलायते । गुरुविक्रमं विक्रमं जित्वा युध्यते तत् कस्यपराक्रमं क इह बुध्यते ॥ ओड्रः—ओड्रदेशीयो राजा, विक्रमं राजानं युद्धे न त्यजतीत्यर्थः । (C).

१२६ । अथ [प]ज्झटिकामुदाहरति जे इति । येन पराक्रमेण गोलाहिवइ—गौडाधिपतिः राउ—राजा गंजिअ—गंजितः, हत इति यावत्, जसु भअ—यस्य पराक्रमस्य भयेन उद्दंड

१२६ । १ गउडाहिव (A), मोलाहिवइ (B), गोलणहिवइ (C), गोउवइ (F). २ दाउ (D). ३ उड्डउ (D). ४ दंड (A), चोड्ड (C), चोड (E), मोड्ड (F). ५ इस (D & F). ६ जस (A), भए (B & C). ७ पमाउ (A), पलाइ (B), पराउ (D & F). ८ जिणु (A). जीणिअ (C), जिणिअ (D). ९ जज्झ (F). १० परिक्कम (B). ११ इह (C). १२ ११ (A), १० (F). १३ पज्झटिका (B & C), इति पज्झलिया (F).

अथाडिल्ला छंदः । (D).

सोलह[1] मत्ता पाउअलि लह[2]
बेबि जमक्का[3] भेउ अलिल्लह[2] ।
हो ण[4] पओहर[5] किंपि अलिल्लह[2]
अंत सुपिअ[6] भण[7] छंदु[8] अलिल्लह ॥ १२७[9] ॥

---

—समरदुर्द्धर्षः ओड—उत्कलदेशाधिपतिः पलाउ—पलायितः। येन च जुज्झ—युद्धे, इदं सर्वत्र चेति, गुरुबिक्कम—गुरुविक्रमः गुरुरन्यैरनतिक्रमणीयः विक्रमः पराक्रमो यस्य स तादृश इत्यर्थः, बिक्कम—विक्रमः विक्रमनामा कश्चित्प्रसिद्धः राजा, जिणिअ—जितः, ताकण्ण परक्कम—तत्कर्णपराक्रमं कोऽपि बुज्झ—जानाति, अपि तु न कोऽपीत्यर्थः ॥ (E).

१२६ । यथा ॥ येन गंजितो गौडपतिः राजा, बङ्गः[?] उत्कलः सभयं पलायितः । गुरुविक्रमो विक्रमो जितो युद्धे कर्णपराक्रमं को बुध्यते ॥ २७ ॥ (G).

१२७ । षोडश मात्राः पादावली लभते द्वयोर्यमकं भेदं कल-यत । भवति पयोधरः किमप्यलं ह अंते सुप्रियः भण छन्दोऽलि-ल्हाम् ॥ पादावली पादचतुष्टयं षोडश मात्राः लभते, तथाच

---

१२७ । १ सोलंह (A), सोलाह (E). २ चलिश (D). ३ जमक्का (F). ४ होइ (A, B & C). ५ पयहर (E), पयोहर (F). ६ सुपिअ अंत (A, B & C), सुपिअंते (D), सुपिअ अंते (F). ७ अइ (D, E & F). ८ छंद (A & B). ९ २४ (A). २८ (F).

षोडशमात्रं पद्मित्यर्थः, द्वयोर्द्वयोरन्ते यमकं, भेदं विशेषं कलयत जानीत, पयोधरो जगणो भवति चेत्, किमपि क्वचिदपीत्यर्थे अलं व्यर्थं, तस्माज्जगणो न देय इत्यर्थः। ह-शब्दः पादपूरणे। सुप्रियो द्विकलः सर्व्वलघुः। तत्र चतुष्कलगणत्रयं, ततो द्विकलगणस्ततो द्विलघुरिति साम्प्रदायिकी परिपाटी। (C).

१२७। अथ अलिल्लहवृत्तं लक्षयति सोलह मत्तेति। अत्र, सोलह मत्ता — षोडशमात्रिकाः षोडश मात्रा यस्यां सा तादृशीत्यर्थः, पाउअलि — पादावली, लह — लभ्यते, बेबि — द्वयोरिति शेषः, जमक्का — ज[य]मकौ भेउ — भवत इति, अलिल्लह कथयेत्यर्थः। किंपि कुत्रापि चरणे इत्यर्थः, अलोलह[?] — अप्रयोजकइत्यर्थः। अयं च देशीशब्दः। पओहर — पयोधरः मध्यगुरुर्जगण इति यावत्, ण हो — न भवति, अत्र जगणो न देय इति भावः, अंते पादांते सुपिअ — सुप्रियः द्विलघुर्गण इत्यर्थः पततीति शेषः। क्रियमाणासु षोडशमात्रासु अंतिम[मा]त्राद्वयं यत्र लघुरूपमेव पतति, न तु षोडशमात्रातिरिक्तः सुप्रियो देय इति भावः, तत् अलिल्लह छंदु — अलिल्लहनामकं छंदः भण — कथय इत्यर्थः ॥ (E).

१२७। सोलेति॥ षोडश मात्राः पादावली लभतां द्वेअपि यमके भेद इति ज्ञायतां॥ भवति पयोधरः किमपि अश्लाघ्यः सुप्रियोऽंते यत्र छंदः अलिल्लह॥ प्रतिपादं षोडश मात्राः, द्वयोश्चरणयोर्यमकं, जगणो न कर्त्तव्यः, अंते लघुद्वयं च, तत् अभि[लि]ल्लह छंदइत्यर्थः॥ २८॥ (G).

जहा, जहि[1] आसावरि[2] देसा[3] दिण्हउ[4]
सुत्थिर[5] डाहर[6] रज्जा लिह्लउ[7] ।
कालंजर[8] जिणि[9] कित्ती[10] थप्पिअ[11]
धणुआ[12] वज्जिअ[13] धम्मक[14] अप्पिअ[15] ॥ १२८[16] ॥

अलिल्लह । (F).

---

१२८ । येनाशापूर्य्यै देशो दत्तः सुस्थिरडाहरराज्यं गृहीतं । कालञ्जरं जित्वा कीर्त्तिः स्थापिता धनदाररराज्यं धर्म्मायार्पितम् ॥ आशापूरी काचन देवी, डाहरो देशविशेषः । (C).

१२८ । अथ अलिल्लहमुदाहरति जिणि इति । जिणि — येन आसावरिनामको देशः, दिण्हउ — दत्तः, सुत्थिर — सुस्थिरं, वैरिकृतास्कंदनाभावादव्याकुलजनमिति भावः, डाहर रज्जा — डहाररराज्यं डहारः पर्वतविशेषस्तस्य राज्यमित्यर्थः, लिह्लउ — गृहीतं । कालिंजरे येन कीर्त्तिः स्थापिता, धणु आवज्जि — धनम् आवर्ज्य दशदिग्भ्य एकीकृत्येत्यर्थः, धम्मके — धर्माय अप्पिअ — अर्पितम् ॥ अत्र दिण्हउ लिह्लउ, थप्पिअ अप्पिअ इति दलद्वये यमकवत्त्वं स्फुटमेव ।

---

१२८ । १ जिणि (B & C), जिणिँ (D), जिन्हि (E). २ आसा (B), आसापरि (C). ३ देसा (A, B & C). ४ दिग्गउ (C), दिण्हउ (F). ५ सुत्थिर (A), सुत्थिर (B). ६ डाहल (B). ७ लिह्लउ (A), लिण्हउ (B), लिहउ (C), लिण्हउ (D). ८ कालिंजर (A). ९ जिणि (F). १० कीत्ती (C). ११ तप्पिअ (D), थप्पीअ (E). १२ धणआ (A & B), धणअ (C). १३ वज्जीअ (E). १४ धम्मके (A, D & E). १५ अपिअ (B), अप्पिअ (D). १६ १५ (A), १९ (F).

लहु[1] गुरु[1] एक्क[2] णिअम[3] णहि जेहा[4]
पअ पअ लेक्खउ[5] उत्तम[6] रेहा ।
सुकइ फणिंदह कंठह[7] वलअं
सोलह[8] मत्तं[9] पाआउलअं[10] ॥ १२९[11] ॥

अत्र जिह्मीति संयुक्तपरोऽपि जकारः लघुर्बोध्यः, 'कत्थवि संजुत्तपरो वण्णो लहु होइ', इति पूर्वमुक्तत्वात् । [Vide श्लोक ४, p. ६. —Ed.] धम्मके इति एकारोऽपि लघुर्बोध्यः, 'एओ शु[सु]द्धाअ वण्ण मिलिआ वे'ति पूर्वमुक्तत्वात् । [Vide श्लोक ५, p. 7.—Ed.] अन्यथा तत्तच्चरणे मात्राधिक्यं स्यादिति बोध्यम् । (E).

१२८ । यथा ॥ जहीति ॥ येनाशावरौदेशा दत्ताः, सुस्थिरं डहाररा्ज्यं गृहीतम् । कालंजरं जित्वा कीर्त्तिः स्थापिता, धनमर्जयित्वा धर्मार्थमर्जि[र्पि]तम् ॥ २९ ॥ इत्यडिल्लहनामकच्छंदः ॥ अडिल्लहेति, अरिल्लहेति क्वचित्पाठः ॥ (G).

१२९ । लघुगुरोरेको नियमो नास्ति यत्र, पदे पदे लिख्यतामुत्तमरेखा । सुकविफणीन्द्रस्य कण्ठवलयं षोडशमात्रं पादाकुलकम् ॥ (C).

१२९ । अथ पादाकुलकं वृत्तं लक्षयति लहु गुरु एक्क णि[अ]-

१२९ । १ Transposed in (F). २ Non est (B). ३ णिम्म (A, B, C & D), णेम्म (E), णियम (F). ४ जाहा (B & C). ५ लेक्खु (A), लेक्खह (B & C), लेक्खउ (D), लेक्खिअइ (E). ६ उत्तिम (A). ७ कण्ठा (B & C), कंठ (F). ८ सोरह (D). ९ मत्ता (A). १० कुलअं (B, C & D), पादाकुलअं (E), पादाउलअं (F). ११ २९ (A), ३० (F).

जहा, सेर एक्क[1] जइ[2] पावउ[3] घित्ता
मंडा बीस पकावउ[4] णित्ता ।
टंकु[5] एक्क[6] जउ[7] सेंधव[8] पात्रा[9]
जो[10] हउ[11] रंको[12] सो हउ[13] राआ ॥ १३०[14] ॥
पादाकुलकम्[15] ।

मेति । जेहा—यत्र, लक्ष गुरु एक्क णि[खे]ग्न—लघु गुर्वैक-नियमः णत्थि—नास्ति, यत्र षोडशापि मात्रा अष्टगुरुरूपेणैव पतंति, अथवा षोडशलघुरूपेणैव पतंतीति नियमो नास्तीत्यर्थः, किंतु पत्र पत्र—पादे पादे प्रतिचरणमिति यावत् उत्तम रेहा—उत्तमा रेखा मात्रा लघुगुर्वंतरिता इति भावः लेक्खिए—लिख्यंते स्थाप्यंते इत्यर्थः। सुकविफणींद्रकंठवलय[मि]ति पिंगल-कंठाभरणतुल्यमित्यर्थः, कंठाभरणं यथा सस्नेहं कंठे स्थाप्यते, तथे-दमपि सस्नेहं पिंगलेन कंठे धृतमित्यर्थः, सोलहमत्तं—षोडश-मात्राकं, प्रतिचरणं षोडश मात्रा यस्मिंस्तत्तादृशमित्यर्थः, पादा-कुलग्रं—पादाकुलकनामकं वृत्तं भवतीति शेषः ॥ पादे मात्राः

१३० । १ एक्कु (D). २ जउ (D), जो (E). ३ पावउ (A & D), पावहि (B), पावइ (F). ४ पकावउँ (A), पकाविस (B), पचावउ (F). ५ टंक (A, B & C). ६ एक्कु (F). ७ ज (B), जइ (C, E & F). ८ सिन्धव (B & C), सेंधउ (E). ९ पावा (A). १० सो (A). ११ हउं (A), हुँ (D). १२ रंक (A & E), रङ्कु (D & F). १३ सोइ हउ (A, E & F), सो उह (D). १४ ९० (A), ९१ (F). १५ पादाकुलकम् (B & C).

लिख्यंते इत्युक्तं, तत्र कियंत्यो मात्रा इत्यपेक्षायां षोड़शमात्राक-मिति हेतुगर्भं विशेषणम् । (E).

१२९ । गुरुवर्ण[गुरूणां] लघूनां वा एकोऽपि नियमो न हि यत्र पदे पदे लेखय उत्तमा रेखाः । सुकवेः फणींद्रस्य कंठवलयं षोडशमात्रं पादाकुलकं ॥ पदे मध्ये, रेखा लघवः ॥ ३० ॥ (G).

१३० । उदाहरति । सेर एको यदि प्राप्यते घृतस्य, मण्डा-विंशतिः पच्यते नित्यं । टंकैकमितं यदि सैन्धवं प्राप्यते, यो भवति रङ्कः स भवति राजा ॥ मण्डा पिष्टकं, सेरटङ्कौ परिमाणविशेषौ । दीनस्येयमुक्तिः । (C).

१३० । अथ पादाकुलकमुदाहरति सेर एक्केति । सेर एक्क जौ [जउ] पावउ घित्ता — सेरकैकं यदि प्राप्नुया[द्] घृतं, मंडा वीस पकावउ णित्ता — तदा विंशतिं मंडकान् पचामि नित्यं । तत्र च अह — यदि टंकु एक्क सेंधव पाआ — टंक एकः सैंधवः प्राप्तः, तदा जो हउ रंक सोइ हउ राआ — योऽहं रंकः स एव अहं राजा ॥ (E).

१३० । यथा ॥ सेरेति ॥ शेरैकं यदि प्राप्यते घृतं, मंडविंशतिं पचामि नित्यं । टंकैकं यदि सैंधवं प्राप्यते, योऽहं रंकः स एवाहं राजा ॥ रंकोक्तिरियम् ॥ ३१ ॥ इति पादाकुलकम् ॥ (G).

[This differs from the Pádákulakam of Pingala's Sanskrit Treatise. Vide Ghosha's compendium, pp. 22-24.—Ed.]

अथ चउबोला छंदः । (D). Non est (B & C).

सोलह[१] मत्तह[२] बेवि[३] पमाणह[४]
बीअ चउत्थह[५] चारिदहा ।
मत्तह[६] सट्ठि समग्गल जाणह[७]
चारि पआ[८] चउबोल[९] कहा ॥ १३१[१०] ॥

१३१ । चौ[चउ]बोलां लक्षयति सोलह मत्तेति । सोलह मत्तह— षोडशमात्राभि. बेवि—द्वावपि द्वितीयचतुर्थयोरग्रे उपादानात्प्रथमतृतीयावित्यर्थः चरणाविति शेषः [पमाणह—] प्रमाणयत, बीअ चउत्थह— द्वितीयचतुर्थयोश्चरणयोः चारिदहा—चतुर्दश मात्रा-इति शेषः प्रमाणयतेति पूर्वेणान्वयः, मत्तह सट्ठि—षष्टिर्मात्राः समग्गल जाणह—समग्राः जानीत, चारि पआ—चतुष्पादं चौ[चउ]-बोल कहा—चौबोलं कथय ॥ तत्र प्रथमचरणे षोडश, द्वितीये चतुर्दश, तृतीयेऽपि षोडश, चतुर्थे च चतुर्दश मात्राः पतंति, ततः चौबोलानामकं वृत्तमिति फलितार्थः । (E).

१३१ । षोडश मात्रा द्वयोः पादयोः [प्र]माणय ॥ द्वितीय-[चतुर्थ]योः स्थानयोश्चतुर्दश ॥ मात्राणां षष्टिः समग्रा जानीत चतुर्षु पदेषु चौबोलं कथय ॥ द्वयोः प्रथमतृतीययोः षोडश, द्वितीय-चतुर्थयोश्चतुर्दशेत्यर्थः ॥ तच्चौबोलं नाम छंदः ॥ (G).

१३१ । १ सोरहँ (D), सोलह (E). २ मत्तहँ (D). ३ वेब (A), वेपच (F). ४ पमाणहु (D). ५ इउठव (A), चउट्ठहँ (D), चउठाह (F). ६ मत्तहउ (D), मत्ता (F). ७ जाण (A), जाणहुँ (D). ८ चारो पच (E). ९ चौबोल (E & F). १० ११ (F).

जहा, रे धणि मत्त मअंगज[1] गामिणि
खंजण[2]लोअणि[3] चंदमुही[4] ।
चंचल जुव्वण[5] जात[6] ण जाणहि[7]
छइल[8] समप्पहि[9] काइ णही[10] ॥ १३२[11] ॥
चउबोला[12] ।

१३२ । अथ चौबोलामुदाहरति रे धणीति । रे धणि — धन्ये, मत्त मअंगज गामिणि — मत्तमतंगजगमने खंजनलोचने चंद्रमुखि चंचलं गच्छद्यौवनं ण जाणहि — न जा[ना]सि, अतः तत् छइ-लेभ्यः विदग्धेभ्यः काइ णही — कुतो न समप्पहि — समर्पयसि । अथवा यतः चंचलम् अतएव गच्छद्यौवनं छइलेभ्यो न समर्पयसि, अतः त्वं काइ णही — किमपि न जानासि, यदि तु समर्पयसि तदा अभिज्ञा भवसीति भावः ॥ (E).

१३२ । यथा रे इति ॥ हे वनिते मत्तमतंगजगामिनि खंजनलोचने चंद्रमुखि ॥ चंचलं यौवनं याति न जानीहि चतुरे समर्पयसि कार्यं किं वा न हि ॥ ३२ ॥ इति चौ[बो]ला छंदः ॥ (G).

१३२ । १ मतंगज (D). मयंगय (F). २ षंजण (A), षंजय (F). ३ लोचण (A). ४ चंमुही (E). ५ जोव्वण (E). ६ जात (E). ७ जाणह (A), जाणहिं (D), हि (E). ८ छइल (A), छइ (E). ९ समप्पछ (A), समप्पहिं (D). १० काइँ (A), काइँ णही (D), काइ णाही (E). ११ ३२ (F). १२ चौबोला (F).

अथ रड्डा छंदः । (D).

पढम बिरमइ[1] मत्त दह[2] पंच, पत्र बीत्र[3] बारह ठवहु[4],
तीत्र ठाँइ दहपंच जाणहु[5], चारिम एग्गारहहिँ[6],
पंचमे हि[7] दहपंच आणहु[8] ।
अट्ठा[9]सट्ठी[10] पूरवहु[11] अग्गे दोहा देहु[12] ।
राअसेण[13] सुपसिद्ध[14] इत्र[15] रड्डु[16] भणिज्जइ[17] एहु[18] ॥
१३३[19] ॥ [राजसेना]

---

१३३ । अथ नवपदप्रकरणम् ॥ प्रथमविरतिं मात्रा[सु] पञ्चदशसु, द्वितीये द्वादशसु स्थापय, तृतीये स्थाने पञ्चदशसु जानीहि, चतुर्थे चैकादशसु, पञ्चमे पञ्चदशसु आनय । अष्टषष्टिं पूरयाग्रे दोहां देहि । राजसेनं सुप्रसिद्धं रड्डं भण्यते तत् ॥ अत्र चोक्तलक्षणैः पञ्चभिः पदैः अष्टषष्टिर्मात्रा भवन्ति, अग्रे च दोहापादचतुष्टयेन मिलिता नवपदी ॥ नवपदच्छन्दसः सप्त भेदा भवन्ति, तत्रेदं राजसेननामकं रड्डमित्युच्यते । (C).

१३३ । अथ रड्डां[रडां] लक्षयति पढमेति । भो शिष्याः पढम—

---

१३३ । १ विरइ (A), विरइच (D). २ दह (E). ३ बीच (C). ४ ठवज (E). ५ जाणु (B), जाणच (C). ६ एग्गारहि (A), एग्गारहहिं (B & C), एग्गारहिं (D). ७ ठ (A & E), च (C). ८ आणज (A & C), आणङ्क (B). ९ एस चइ (F). १० सट्ठा (B & C), सट्ठा (D), सट्ठि (F). ११ संठवज (A), पुरच (F). १२ देउ (F). १३ राचसेर (B), राचसेणि (A), राजसेण (F). १४ सपसिध (E). १५ चच (A, B & C). १६ रत्तं (C), चड्डज (D), रंड (F). १७ भणिज्जच (B & C). १८ एच (C). १९ १८ (A), १४ (F).

प्रथमचरण इत्यर्थः दहपंच मत्त — पंचदशसु मात्रासु विरमइ — विरमति विरामं समाप्तिं प्राप्नोतीत्यर्थः, प्रथमचरणे पंचदश मात्राः कर्त्तव्या इति भावः। बीअ — द्वितीये पअ — पदे बारह — द्वादश मात्रा इति शेषः, सर्वत्र यथा यथा योजनीयः, ठवऊ — स्थापयत। तीअ ठाइ — तृतीये स्थाने तृतीयचरणे इत्यर्थः दह-पंच मात्राः आणऊ — आनीत। चारिम — चतुर्थे चरणे इति शेषः, इदं च यथापेक्षमन्यत्रापि योज्यं, एग्गारहहि — एकादश मात्राः आनीतेति पूर्वेणान्वयः। पंचमे उ — पंचमेऽपि चरणे दहपंच — पंचदश मात्राः आणऊ — आनयत। एवंप्रकारेण अट्ठासट्ठी — अष्ट-षष्टिर्मात्राः पूरवऊ — पूरयत, अग्गे अष्टषष्टिमात्रांते दोहा — द्विपदिकां तेरह मत्तेत्यादिना पूर्वमुक्तां देऊ — ददत। एऊ — एषा रड्डा, [इअ —] इयं सुपसिद्ध — सुप्रसिद्धं यथा स्यात्तथा राअ-सेण — राजसेना इत्यपि भणिज्जइ — भण्यते॥ एतस्या राजसेना इति नामांतरमपि कथ्यत इत्यर्थः। (E).

१३३। अथ रड्डामाह॥ पढमेति॥ प्रथमा विरतिर्मात्रासु दशपंचसु, पादे द्वितीये द्वादशसु स्थापय, तृतीयस्थाने दशपंचसु आनीहि, चतुर्थ एकादशसु, पंचमे दशपंच मानय। एवमष्टषष्टिं पूरय, अग्रे दोहां देहि॥ राजसेनसुप्रसिद्धिता रड्डा भण्यते एषा॥ प्रथमतृतीयपंचमे पादे पंचदश मात्रा द्वितीये द्वादश चतुर्थे एकादशेति द्वा[अष्ट]षष्टिर्मात्रा भवंति, तदुपरि दोहा देयेति॥ राजसेनो राजसेनप्रसिद्धिं प्रापित इति केचित्, राजसेनेति नामां-तरप्रसिद्धिं प्रापितेत्यन्ये॥ सा रड्डेति भण्यते॥ ३४॥ (G).

विसम तिकल[१] संठवहु तिस्मि पाइक्क[२] करहु[३] लइ[४]
अंत[५] णरेंद[६] कि विप्प पढम[७] बेमत्त अवर[८] पइ[९] ।
सम पत्र तित्र पाइक्क सव्वलहु[१०] अंत विसज्जहु[११]
चउठा चरण[१२] बिआरि[१३] एक्क लहु कट्टित्र लिज्जहु ॥
इम[१४] पंच पात्र[१५] उट्टवण[१६] कइ
वत्थु[१७] णाम पिंगल[१८] कहइ[१९] ।
ठवि दोसहीण[२०] दोहाचरण
राअसेण[२१] रड्डउ[२२] भणइ ॥ १३४[२३] ॥ छप्पअ ।

१३४ । तत्र गणव्यवस्थामाह । विषमे त्रिकलं संस्थापय, त्रीन् पदातिकान् कुरु नीत्वा प्रथमे नरेन्द्रः किं विप्रोऽन्ते द्विमात्रोऽपरपदे । समे पदे त्रयः पदातिकाः सर्व्वलघुरन्ते विसृज्यतां, चतुर्थचरणे विचार्य्य एकलघुर्दृष्टा नीयताम् ॥ एवं पञ्चपदोत्थापनं वस्तुनाम पिङ्गलः कथयति । स्थापयित्वा दोषहीनान् दोहाचरणान् राजसेननामा रड्डा भण्यते ॥ विषमे प्रथमे तृतीये पञ्चमे पादे

१३४ । १ तिकल (B). २ पाइक (D). ३ Non est (F). ४ लइ (E). ५ अंत and पढम transposed in (E). ६ णरिंदु (D), णरेंदु (E & F). ७ पढमे (B & C). ८ अवर (B & C). ९ पअ (B, C & E), मइ (F). १० लहु (F). ११ विज्जइ (B), विसलहु (D), विसहु (E). १२ चउ चरण (C & F), चौथा चरण (E). १३ थपि (A), विचारित्र (C). १४ एम (A, B, C, D & F), ए short. Vide श्लोक ५, p. 7. १५ पाए (D). १६ उट्टवणु (D), उट्टवण (F). १७ वत्थु (A), वत्थु (B). १८ पिंगलु (D & F). १९ कुमइ (A, B, C & D), कहइ (E). २० दोसहिण (B). २१ राअसेण (B). २२ रड्डइ (B), रडइ (C), रड्डउं (D), रड्डउ (E), रड्डउ (F). २३ १९ (A).

एकस्त्रिकलस्त्रयः पदातिकाश्चतुष्कलगणाः कार्य्याः, नीला माला, प्रथमपादे तु नरेन्द्रः किंवा विप्रश्चरमगणः। नरेन्द्रो जगणः, विप्रश्चतुर्लघुः। अपरपदे तृतीये पञ्चमे चान्ते द्विमात्रो द्विलघुत्वेन चरमो यः चतुष्कलस्तृतीयपञ्चमयोरुक्तः स भगणं इति वदन्ति। समपादे द्वितीये चतुर्थे च त्रयश्चतुष्कलाः, तत्रान्तिमः सर्व्वलघुश्चतुर्थचरणस्यैकादशमात्रत्वात् चतुष्कलगणत्रयं [न] सम्भवत्येव, अतोऽन्तिमगणे लघुरेको विकर्षणीयः। वस्तित्यपि एतस्य छन्दसो नाम। नाम प्राकाश्ये। (C).

१३४। अथ रंडायां तावत्तावन्मात्रा तत्तच्चरणे देया इत्युक्तं, तत्र विप्रा[न्या]सप्रकारमाह विसमेति। विसम — विषमे पादे प्रथमे तृतीये पंचमे चेत्यर्थः, आदौ तिकल संठवऊ — त्रिकलं स्थापय, ततश्च त्रिकलानंतरमित्यर्थः तिण्णि पाइक्क — त्रीन् पदातीन् चतुष्कलानित्यर्थः करऊ — कुरुत, पढम — प्रथमे पादे अंत — अंते प्रथमपादांते इत्यर्थः णरिंद कि विप्प — नरेंद्रं मध्यगुरुं जगणं किंवा विप्रं चतुर्लघ्वात्मकं गणं कुरुतेति पूर्व्वेणान्वयः, तथाच प्रथमे चरणे त्रिकलानंतरं कर्त्तव्येषु त्रिषु चतुष्कलेषु तृतीयश्चतुष्कलो जगणस्वरूपो विप्ररूपो वांते कर्त्तव्यः न तु पृथगिति हृदयं। अवर पअ — अपरपादे विषमचरणगणविचारस्यैव प्रक्रांतत्वात्प्रथमादपरस्मिन् विषमे तृतीये पंचमे च पादे इत्यर्थः बे मत्त — द्वे मात्रे द्वौ लघू इत्यर्थः, उदाहरणानुरोधादत्र मात्राशब्दो लघुवाची, अंते देये इत्यर्थः, तथाच तृतीयपंचमकामंतरदेयेषु चतुष्कलेषु तृतीयो गणः भगणो देय इति भावः तस्यैव द्विलघ्वंतत्वात्।

अथ विषमचरणव्यवस्थां विधाय समचरणव्यवस्थामाह सम पश्च इति ।। सम पश्च—समे पादे द्वितीये चतुर्थे चेत्यर्थः आदौ बिग्न पाइक्क—द्वौ पदाती चतुष्कलावित्यर्थः, अंत—अंते चतुष्कलद्वयांते पादांते चेत्यर्थः सब्बलहु—सर्वलघु विसज्जह—विसृजत, चौ[चउ]त्था चरण—चतुर्थचरणे अंते इति पूर्वतनमनुषंजनीयं, विचार्य सावधानतया एक्कलहु—एकं लघुं कड्ढिअ लिज्ज—निष्कास्य गृह्णतां द्वितीयचरणांतिमगणापेक्षया चतुर्थचरणांतिमगणे एको लघुर्न्यूनः कर्त्तव्यः, तत्र एका मात्रा न देयेति हृदयं ॥ तथाच समे पदे चतुष्कलद्वयांते सर्वलघ्वात्मकगणदानमुक्तं, तत्र चतुर्थचरणे चतुष्कलद्वयानंतरं सर्वलघुः त्रिकलो देयः, द्वितीये च सर्वलघुश्चतुष्कलो देय इति व्यवस्था ।

इम पंच पाअ उट्टवण कइ—एवं पंचपादोट्टवनं कृत्वा, उट्टवनं विन्यासः, तथाच एवं पंचपादविन्यासं कृत्वेत्यर्थः, दोसहीण दोहाचरण—दोषहीनदोहाचरणान् जस्सेत्यादिना [Vide श्लोक ८४, p. 145.—Ed] पूर्वोक्तप्रथमतृतीयजगणवत्त्वरूपदोषरहितान् दोहाचतुश्चरणानित्यर्थः, ठवि—स्थापयित्वा पूर्वोक्तचरणपंचकानंतरं दोहां दत्त्वेत्यर्थः, पिंगलः बत्थुणाम—वस्तुनामकं वृत्तं कहेइ—कथयति, एतदेव राअसेण रड्डउ—राजसेनरड्डा च एतस्यैव राजसेना रड्डेति च नामांतरं भणइ—भणति ॥ (E).

१३४ । अथोट्टवनिकामाह ॥ विसमेति ॥ विषमेषु त्रिक[लः] संस्थाप्यतां, त्रयः पदातयस्ततः, अंते नरेंद्रः किं विप्रः, प्रथमे द्वे मात्रे, अवर—मध्ये ॥ विषमेषु प्रथमतृतीयपंचमेषु चरणेषु, पदातिश्चतु-

जहा,

भमइ महुअर[1] फुल्ल[2] अरविंद[3], णवकेसु[4] काणण फुल्लिअ[5],
सव्वदेस पिकराव[6] चुल्लिअ, सिअल पवण लहु वहइ,
मलअ कुहर णव[7] वल्लि[8] पेल्लिअ ।
चित्त[9] मणोभव सर[10] हणइ दूर दिगंतर[11] कंत ।
किम[12] परि अप्पउ वारि[13] हउ एम[14] परि पलिअ[15] दुरंत ॥
१३५[16] ॥ राजसेना ।

---

क्कलः ॥ तत्र प्रथमे पादे द्वौ [?] इति तृतीये न कार्य इत्यर्थः, एवं च द्वितीये द्वादश चतुर्थे एकादश मात्रेति निष्कर्षः ॥ तृतीयचतुष्कल-स्थाने जगणश्चतुर्लघुर्वा देयः ॥ अवरयोस्तृतीयपंचमयोरंते लघुद्वयं देयमित्यर्थः ॥ समयोः पादयोः द्वौ पदाती सर्वत्र लघुमंते विच-क्षणेय ॥ चतुर्थचरणे विचार्य एकं लघुमाकृष्य क्रियतां ॥ एवं पंच-पादोद्भवनं कृत्वा वस्तुनाम पिंगलः कथयति, स्थापयित्वा दोहकोनं दोहाचरणं राजसेनरंडामिति भणति ॥ (G).

---

१३५ । १ मउअर (F). २ फुल्ल (A), पओ (F). ३ चरविंद (D). ४ णव-किसु (F). ५ फुल्लिअ (D), पुल्लिअ (F). ६ पिकराव (A), पिकरवे (B & C), पिक राव (D), पिक राव (F). ७ मलअअ कुहर णव (C). ८ वल्लिअ (D). ९ चेउ (B & C). १० सरे (B). ११ दिगंत (F). Three letters dropt after म in (C). १२ केम (A), के (B & C). १३ वारि (C), वाहिरि (E). १४ पा एव (C), ए short. Vide श्लोक ४, p. 7. १५ पलि (A), पलिअ (C), मलि (F). १६ १० (A), ३९ (F).

१३५। उदाहरति। भ्रमति मधुकरः फुल्लमरविन्दं, नवकिंशुककाननं स्फुटितं, सर्व्वदेशः पिकरावेण घूर्णितः, शीतलपवनो लघु वहति, मलयकुहरवनवल्लीः प्रेरयति। चित्तं मनोभवशरो हन्ति, दूरदिगन्तरे कार्य्यः[न्तः]। किमुपर्य्यात्मानम् उद्धरिष्यामि, अयं पतितो दुरन्तः॥ किमुपरि किमु[पा]लम्बेन उद्धारयिष्यामि जीविष्यामीति यावत्, दुरन्तः समय इति यावत्। विरहिण्याः उक्तिरियम्। (C).

१३५। रड्डामुदाहरति भमईति। मडुअर—मधुकराः भमइ—भ्रमंति, फुल्ल अरविंद—पुष्पितान्यरविंदानि, काणण—काननानि [णबकेसु—] नवकिंशुकैः जुलिअ—ज्वलितानीव भांती[ति] शेषः, सब्बदेस—सर्वदेशः पिकराव चुलिअ—पिकरावैश्चुलुकितः निपीत-इति यावत्, कोकिलालापानाकर्ण्य संजातकंदर्पबाधया सर्वोऽपि देशि[शो] निःपीत इव भातीति भावः, मलअ कुहर णव वल्लि पेल्लिअ—मलयकुहरनववल्लीः प्रेषयित्वा ताः कंपयित्वेत्यर्थः, सिअल अवण—शीतलः पवनः लहु—लघु मंदं यथा स्यात्तथा वहइ—वहति। चित्त मणोभव सर हणइ—चित्तं मनोभवः शरैर्हंति, कंत—कांतः दूरे दिगन्तरे एव, दुरंतः दुष्टः अंतो यस्य [स] तादृशः समय इति शेषः परिपलिअ—परिपतितः, अप्पउ—आत्मानं किम परि—कया परिपाट्या रक्खिहउ—रक्षिष्यामि॥ (E).

१३५। यथा॥ भमेति॥ भ्रमंति मधुकराः, फुल्लान्यरविंदानि, नवं किंशुककाननं पुष्पितं, सर्वदेशे पिको रागं वंदते, शीतलः पवनो लघु वहति, मलयकुहरनववल्लीः प्रेषयित्वा। चित्तं मनोभव-

**करही णंदा मोहिणी[1] चारुसेणि[2] तह भद्द।**

**राअसेण तालंक[3] पिअ[4] सत्त वत्थु[5] णिप्पंद[6] ॥ १३६[7] ॥**

**दोहा।**

---

अरो इति, दूरं दिगंतरे कांतः। केन प्रकारेणात्मा वारणीयः एवं दुरंतः एवं प्रकारेण दुरंतः ॥ ३६ ॥ (G).

१३६। करभी नन्दा मोहिनी चारुसेनी तथा भद्रः। राजसेनः ताड़ङ्कः प्रियाणि सप्त वस्तूनि निष्पन्नानि ॥ कवीनां प्रियाणि। (C).

१३६। अथैतस्यैव भेदानां सङ्ख्यां नामान्याह करहीति। पिअ — हे प्रिये करभी नंदा मोहिनी चारुसेना तथा भद्रः। राजसेनः तालंकिनी इति सत्त — सप्त वत्थु णिप्पंद — वस्तुनिस्पंदाः वस्तु-नामकस्य पूर्वोक्तवृत्तस्य निस्पंदा भेदा इत्यर्थः ॥ रड्डाया एव वस्तु राजसेन इति च नामांतरम्। (E).

१३६। दोहांतस्य रड्डेति जातिनाम्नो वृत्तस्य भेदानाह ॥ करहीति ॥ करभी १, नंदा २, मोहिनी ३, चारुसेना ४, तथा भद्रा ५। राजसेना ६, तालंकिनी [७] प्रिये सप्त वस्तुभेदाः ॥ प्रिये इति संबुद्धिः ॥ ३७ ॥ (G).

---

१३६। १ मोहणी (A & F). २ चारुसेणी (A, B & C), चारुसेण (E). ३ तालंकु (E). ४ किअ (A). ५ वत्थु (A). ६ णिप्पण्ण (B), णिप्पण (C), णिप्फंद (D), णिप्फुण (E). ७ ११ (A), १० (F).

पढम तीअ[1] पंचम पअह तेरह मत्ता जासु ।
बीअ चउत्थ[2] एगारहिं[3] करहिं[4] भणिज्जइ[5] तासु ॥ १३७[6] ॥
दोहा ॥ [इति] करही[7] । (C).

१३७ । प्रथमतृतीयपञ्चमपादेषु चयोदश मात्रा यस्यां । द्वितीय-चतुर्थयोरेकादश करभी भण्यते सा ॥ अत्र चान्ते दोहा सर्व्वचैव बोध्या, पादपञ्चक एव विशेषः क्रियते, तत्र च त्रिकल-चतुष्कल-द्वय-द्विकलगणाः कार्य्याः, समे चतुष्कलद्वयं त्रिलघु चेत्येवमन्यत्रापि विचार्य्य व्यवस्थेयम् । (C).

१३७ । तेषु प्रथमं करभीं लक्षयति पढमेति । जासु — यस्याः प्रथमतृतीयपंचमपादेषु तेरह मत्ता — चयोदश मात्राः । बीअ चउत्थ — द्वितीयचतुर्थयोश्चरणयोरिति शेषः, एआरहहि — एकादशैव मात्रा भवंतीत्यर्थः, तासु — तस्याः करहि — करभीति नामेति शेषः भणिज्जइ — भण्यते ॥ अयमभिप्रायः, पूर्ववस्तुच्छंदसि प्रथमे चरणे पंचदशमात्राः द्वितीये द्वादश तृतीये पंचदश चतुर्थे एकादश पंचमे पंचदश देया इति फलितं, तत्रैव प्रथमतृतीयपंच-मचरणेषु प्रथमोपात्तत्रिकले मात्राद्वयं दूरीकृत्य द्वितीयचरणे चांतोपात्तसर्वलघुचतुर्मात्रिके एकां मात्रां दूरीकृत्य चतुर्थं च पूर्व[व]देव संस्थाप्याग्रे दोहां दत्वा करभी वाच्या, न तु [?] विषम-पादेषु प्रथमोपात्तत्रिकले मात्राद्वयं न्यूनं कर्त्तव्यम् । अंतोपात्त-

१३७ । १ तीअच (C), तीए (D). २ चउब (A). ३ एआरहि (A), इआर-हहि (B & C), एआरहिं (D), एआरहहि (E). ४ करह (F). ५ भणिज्जउ (B & C), भणिज्जउ (F). ६ १२ (A), १८ (F). ७ करहि (B).

पढम तीअ पंचम पअह मत्त होइ[1] दहचारि।
बीअ[2] चउत्थ[3] एगारहहिं[4] छंद भणिज्ज[5] बिआरि॥ १३८[6]॥
दोहा। [इति] छंद। (A, B & C).

---

जगणभगणेषु चेत्यच किं विनिगमकमिति चेत्, सत्यं, सामान्या-नाश्रि[गि]तविशेषाभावात् पूर्वोक्तं रड्डानियमानामुत्तरचाप्यावश्यक-तया करभ्यामपि प्रथमचरणांते जगणविप्रान्ध्यतरस्य, तृतीयपंच-मयोश्च भगणस्यावश्यं स्थापनीयत्वात्प्रथमपरित्यागे मानाभावाच्च प्रथमोपात्तचिकलमध्यत एव मात्राद्वयं न्यूनं विधेयं, द्वितीये च समचरणे अंते सर्वलघुर्देय इति नियमस्य पूर्वमुक्तत्वात् अंते सर्व-लघुस्थापनमावश्यकमिति चतुर्थचरणसाम्यतया द्वितीयचरणस्थापने बाधकाभावादंतिमसर्वलघ्वात्मकगणमध्यत एव च[ए]का मात्रा न्यूना विधेयेति न कश्चिद्दोष इत्यसमत्तातचरणोपदिष्टः पंथाः सुधीभिर्विभावनीयः। यत्तु विषम आद्युपात्तचिकलमध्ये मात्राद्वयं न त्याज्यमेककलगणाभावादिति, तन्न आर्यायामुत्तरार्द्धे षष्ठस्थे-याचापि प्रथमस्यैककलस्य स्थापने बाधकाभावात्। (E).

१३७। पढमेति॥ प्रथमतृतीयपंचमे पादे चयोदश मात्रा यस्य। द्वितीयचतुर्थयोरेकादश करभी भण्यते सा॥ अंते दोहा देयेति सर्वत्र शेषः॥ ३८॥ (G).

---

१३८। १ बी (A). २ बिअ (A). ३ चउत्थ (A), चतुत्थ (F). ४ एगा-रहहिं (A), एगारहहि (B), एगारहर (C), एगारहहिं (D), एगारहहि (E). ५ भुणिज्ज (A & C), भुणिज्जह (B). ६ ११ (A), १९ (F).

पढम तीअ पंचम पअह णवदह मत्ता जासु ।
बीअ[1] चउत्थ[2] एगारहि[3] तं[4] मोहिणि मुणि[5] आसु॥ १३९[6]॥
दोहा । [इति] मोहिणी । (B & C).

---

१३८। विषमे मात्रा भवन्ति चतुर्दश। समे एकादश नन्दा भण्यते विचार्य्य ॥ (C).

१३८। अथ नंदां लक्षयति पढमेति। यत्र प्रथमतृतीयपंचमपादेषु दहचारि—चतुर्दश मत्त होइ—मात्रा भवंति। बीअ चउत्थ एआरहहि—द्वितीयचतुर्थयोरेकादशैव मात्रा भवंतीति पूर्वतनानुषंगः, तं विआरि—विचार्य णंद भणिज्ज—नंदां भण॥ अत्रापि पूर्वोक्तरीत्या विषमपादेषु प्रथमोपात्तचिकलमध्यत एव एकां मात्रां दूरीकृत्य द्वितीयपादे चांतस्थचतुर्लघ्वात्मकगणमध्यत एकां मात्रां त्यक्त्वा चतुर्थं पूर्ववदेव स्थापयित्वाग्रे दोहां दत्त्वा नंदा वाच्या इति निष्कर्षः। (E).

१३८। पढेति॥ चतुर्दशमात्राभिर्नंदेति। शेषं पूर्ववत्। एवमग्रेऽपि॥ ३९। (G).

१३९। विषमे नवदश मात्रा यस्यां। समे एकादश सा मोहिनी ज्ञायतामियम्॥ (C).

१३९। अथ मोहिनीं लक्षयति पढमेति। यस्यां प्रथमतृतीयपंचमपादेषु णवदह मत्ता—एकोनविंशतिर्मात्राः। बीअ चउत्थ

---

१३९। १ बीए (D). २ चउथ (A), चतुथ (F). ३ एचारहर (A), एचारहि (B), एचारहहिँ (D), एचारहहि (E). ४ दं (A). ५ कुणि (A), भणि (E). ६ १४ (A). ४० (F).

पढम तीअ पंचम पअह मत्त[1] पणरह[2] जासु ।
बीअ चउत्थ[3] एआरहि[4] चारुसेणि[5] मुणि आसु[6] ॥ १४०[7] ॥
दोहा । [इति] चारुसेणी । (B & C).

---

एआरहहि — द्वितीयचतुर्थयोरेकादशैव मात्रा भवंति, तं — तां आसु — एनां मोहिणी [— मोहिनीं] मुणि — जानीहि ॥ अत्र विषमेषु त्रिकलानंतरं चत्वारश्चतुर्मात्रिका विधेयास्तेष्वेव प्रथमपादांते जगणो विप्रो वा विधेयस्तृतीयपंचमयोश्चांति[म]भगण एव विधेयो द्वितीये चांतिममध्यत एव एकां मात्रां निष्कास्य चतुर्थं च पूर्ववदेव संस्थाप्याये दोहां दत्त्वा मोहिनी वाच्येति व्यवस्था । (E).

१३९ । पढेति ॥ एकोनविंशतिस्तां मोहिनीं जानीत ॥ ४० ॥ (G).

१४० । विषमे मात्राः पञ्चदश यस्याः । समे एकादश चारुसेनी ज्ञायतामियम् ॥ (C).

१४० । अथ चारुसेनां लक्षयति । जासु — यस्याः प्रथमतृतीयपंचमपादेषु पणरह — पंचदश मत्त — मात्राः । बीअ चउत्थ — द्वितीयचतुर्थयोः पादयोः एकादशैव मात्रा भवंतीति शेषः, आसु — एनां चारुसेनां भण — कथय ॥ अत्र विषमचरणान् वस्तुन इव संस्थाप्य द्वितीयचतुर्थौ चरणौ करभ्या इव विधायाये दोहां दत्त्वा चारुसेना वाच्येति निष्कर्षः । (E).

१४० । पढेति ॥ पंचदश चारुसेना ज्ञेया ॥ ४१ ॥ (G).

---

१४० । १ मत्ता (F). २ पणर (B), पणरह (F). ३ चउथ (A). ४ एआरहहि (A, D & E), एआरहहि (B & C). ५ चारुसेणो (B), चारुसेन (D & E). ६ भणु तासु (A). ७ ३५ (A), ४२ (F).

पढम तीअ पंचम पअह मत्ता दहपंचाइँ ।
बीअ चउत्था[१] बारहहि[२] भद्द णाम कहि आइँ ॥ १४१[३] ॥

दोहा । [इति] भद्द । (B & C).

पढम तीअ पंचम पअह मत्त पखरह[१] जासु[२] ।
सम बारह अरु[३] एकदह राअसेण[४] भण[५] तासु[६] ॥ १४२[७] ॥

दोहा । [इति] राअसेण । (B & C).

---

१४१ । विषमे मात्राः पञ्चदश । समे द्वादश भद्रनाम उच्यते भण्यते वा ॥ (C).

१४१ । अथ भद्रं लक्षयति पढमेति । प्रथमतृतीयपंचमपादेषु मात्राः पंचदश, द्वितीयचतुर्थयोर्द्वादश मात्राः भवंति, आदं — एतस्य भद्रेति नाम कथितम् ॥ अत्र चतुर्थे चयस्तुर्मात्रिका अन्ये वस्तुनवदेति निष्कर्षः । (E).

१४१ । पढेति ॥ द्वितीयचतुर्थयोर्द्वादश, भद्रा नाम कथ्यते ॥ ४२ ॥ (G).

१४२ । विषमे मात्राः पञ्चदश । द्वितीये द्वादश, चतुर्थे एकादश, राजसेनो भण्यताम् ॥ (C).

१४२ । अथ पूर्वं विसम तिकलेत्यनेन [Vide श्लोक ११४ p. 230.] लक्षितमपि राजसेनापरनामकं वस्तु वृत्तं करही मंदेत्यत्र तदन्य-

---

१४१ । १ चउतथे (A). २ बारहर (A), बारह (B & C). ३ ९९ (A), ४१ (F).

१४२ । १ पञ्चर (B), पचरह (F). २ जाचु (A), जात (D). ३ चरह (A). ४ राजचेन (E). ५ भनु (B, C & D). ६ तासु (A), मता (D). ७ १० (A), ४१ (F).

पढम तीअ पंचम पअह मत्ता सोलह आसु।
सम बारह अह[1] एक्कदह तालंकिणि भणु[2] तासु॥ १४३[3]॥
दोहा। [इति] तालंकिनी[4]। (A).
इति रड्डाप्रकरणम्[5]। (A, B & C).

---

एत राजसेनः कथित इति भ्रमनिरासार्थं पुनस्तमेव लक्षयति पढमेति। प्रथमतृतीयपंचमपादेषु मात्राः पंचदश यत्र। समे चरणे द्वादश अह—अथच एक्कदह—एकादश राजसेनं भणत च॥ एतन्निष्कर्षस्तु पूर्वमेव कृतः। (E).

१४२। पढेति॥ समे द्वादशान्यदेकादश राजसेना भण्यते सा॥ समे प्रथमे[द्वितीये] अन्यत् चतुर्थेऽर्थः॥ ४२॥ (G).

१४३। विषमे मात्राः षोडश, द्वितीये द्वादश, चतुर्थे एकादश, ताडङ्किनी भण्यताम्॥ (C).

१४३। अथ ताडं[लं]किनीं लक्षयति पढमेति। यस्याः प्रथमतृतीयपंचमपादेषु सोलह—षोडश मात्रा भवंतीति शेषः। समे—द्वितीये चतुर्थे च द्वादश अथच एक्कदह—एकादश मात्रा भवंतीति शेषः, यथायथं योजनीयः। द्वितीये द्वादश मात्रा भवंतीत्यर्थः। तासु—तां ताडं[लं]किनीं भण॥ अत्र विषमपादेषु [ज]गणांता विप्रांता वा चत्वारश्चतुष्कलाः कार्य्याः, समौ च पूर्ववत्, अग्रे दोहां दत्वा ताडं[लं]किनि[नौ] वाच्येति निष्कर्षः। * इति श्रीपिंगलप्रकाशे रंडाप्रकरणम्॥ * (E).

१४३। पढमेति। * * * तालंकिनी भण्यते सा॥ ४४॥ (G).

---

१४३। १ वा (A, B & C). २ भणि (B), भण (D). ३ १८ (A), ४४ (F). ४ तालकी (B & C). ५ इति रंडा (F).

अथ पद्मावती छंदः । (D).

भणु[१] पउमावत्ती[२] ठाणं ठाणं
चउ[३]मत्ता गण[४] अट्ठाआ[५],
धुअ कण्णो करअल[६] बिप्पो चरणो
पाए[७] पाअ उकिट्ठाआ[८] ।
जइ पलइ[९] पओहर[१०] किमइ[११] मणोहर[१२]
पीडइ[१३] तह णाअक्क[१४]गुणो[१५],
पिअरहि[१६] संतासइ कइ[१७] उब्भासइ
इअ[१८] चंडालचरित्त गणो ॥ १४४[१९] ॥

---

१४४ । भण पद्मावतीं स्थाने स्थाने चतुर्मात्रा गणा अष्टौ । अत्र के गणा इत्याह, ध्रुवं कर्णः करतलं विप्रश्चरणः पादे पादे उत्कृष्टस्थाप्याः । यदि पतति पयोधरः किमयं मनोहरः पीडयति तथा नायकगुणं तथा न यो जनं प्रियवत्संस्थापयति, कविमुद्भासयति, अयं चण्डालचरितगणः ॥ कर्णो द्विगुरुः SS, करतलमन्त-

---

१४४ । १ भण (B & C). २ पोमावत्ती (A) पउमावत्ती (B & C), पोमावत्ती (E), पोमावत्तौ (F). ३ चउ (A), चौ (E & F). ४ गणा (F). ५ अट्ठाआ (B & C), अठाआ (F). ६ करअलु (B & C). ७ पाअ (A). ८ उकिट्ठाआ (B & C), उक्किट्ठाआ (F). ९ पइ (A). १० पओहर (B & C). ११ किमउ (F). १२ माणोहर (A), मणोहर (C). १३ पीडउ (C). १४ णारक्क (F). १५ गुणा (F). १६ पिअरह (A, B & C), पिअरहौ (E). १७ कवि (F). १८ इह (B & C). १९ ९९ (A), ४५ (F).

गुरु ॥ऽ, विप्रः सर्व्वलघुः ।।।।, चरण आदिगुरुः ऽ॥, एते यथेच्छं स्थाप्या न तु क्रमनियमः । अत्र च जगणः सर्व्वथा न कार्य्यः । (C).

१४४ । अथ पद्मावतीं लक्षयति भणु पोमावत्तीति । यत्र कणो — कर्णः गुरुद्वयात्मको गण इत्यर्थः, करअल — करतलं गुर्वंतः सगण इत्यर्थः, विप्पो — विप्रश्चतुर्लघुको गण इत्यर्थः, चरणः गुर्वादिर्भगण एत एवेति शेषः चउमत्ता — चतुर्मात्रिकाः अट्ठाआ — अष्टौ गणाः पाए पाअ — [पादे पादे] देयाः प्रतिचरणमित्यर्थः, ठाणं ठाणं — स्थले स्थले, उक्किट्ठाआ — उत्कृष्टाः अधिका बहुश इति यावत् पतंति । यत्र प्रतिचरणं स्थापनीया अष्टौ गणाः कर्णसगणविप्रभगणस्वरूपा एव पतंति नान्य एत एव पौर्वापर्य्येण पुनः पुनः वाराष्टकं पततीति यावदित्यर्थः, तां पोमावत्ती — पद्मावतीं भण पद्मावतीनामकं तद्वृत्तं कथयेत्यर्थः । अत्र जइ — यदि पओहर — पयोधरः मध्यगुरुर्जगण इत्यर्थः पलइ — पतति, तह — तदा किमपि मनोहरं सम्यक् न भवतीति शेषः, किंतु चंडालचरित्रः इअ — अयं जगणाख्यो गणः णाअक्कगुणो — नायकगुणं पीडयति, पिअरहि — पितरं संत्रासयति, अतएव कइ उब्बासइ — कविमुद्रासयति ॥ अत्र जगणे पतिते यस्य कविलमेतच्छंदमा भवेत्स राजा नश्येत्, नष्टे च तस्मिन्नेतादृशकवित्वनिर्माणकर्त्रा कविनापि बंधनताडनादिव्यथा प्राप्तव्येति, अत्र जगणः सर्वथा न देय इति भावः । (E).

१४४ । भणु इति । भण पद्मावतीं स्थाने स्थाने चतुर्मात्र[त्रि]कं गणाष्टकं ॥ मात्रा गण[य]ति ॥ धुवेति ॥ ध्रुवं कर्णः करतलं विप्र-

जहा, भअ भंजिअ[1] बंगा भंगु[2] कलिंगा
तेलंगा[3] रणमुक्कि चले,
मरहट्ठा[4] धिट्ठा[5] लग्गिअ[6] कट्ठा[7]
सोरट्ठा भअ[8] पाअ पले।
चंपारण कंपा पब्बअ[9] झंपा
ओत्था[10] ओत्थी[11] जीव हरे[12],
कासीसर[13] राणा[14] किअउ[15] पआणा[16]
विज्जाहर भण[17] मंतिबरे[18] ॥ १४५[19] ॥ पद्मावती।

चरणः पादे पादे उत्कृष्टः, यदि पतति पयोधरः किमपि न मनोहरं, पीडयति तथा नायकगुणं, पितरमपि संतापयति, कवि-मुदासयति इति चंडालचरित्रो गणः, जगण इत्यर्थः॥ द्विगुरुः कर्णः, करतलं सगणः, विप्रश्चतुर्लघुश्चरणो भगणः॥ तत्र जगणस्य दुष्ट-फलत्वान्न कार्य इति॥ दशाष्टचतुर्दशसु यतिः॥ ४५॥ (G).

१४५। उदाहरति। भयभग्ना वङ्गा भग्नाः कलिङ्गाः तैलङ्गा-रणमत्ताश्चलिताः, महाराष्ट्रा धृष्टा नम्रकोष्ठाः सौराष्ट्रा भयात्पदे

१४५। १ भञ्जिअ (C & E). २ भजु (A), भङ्ग (C), भग्ग (E). ३ तेरंगा (C). ४ मरहट्ठा (B & C), मरहट्ठु (E). ५ ढिट्ठा (A). ६ लग्गिअ (E). ७ कट्ठा (B & C), कंठा (F). ८ भअ (A), पअ (B & C). ९ पव्वअ (C). १० ओत्था (A), ओत्थी (D & F). ११ ओत्थी (A). १२ जीअ हरे (A & C), जीवहर (F). १३ कासीसर (C). १४ राणा (D), राणा (F). १५ किअ (A), किअउ (E). १६ पआणा (F). १७ भणु (B & C). १८ मान्तवरे (B), मंतिवरे (E). १९ ४० (A), ४६ (F).

पदे पतिताः । चन्दनेन[?] कम्पिताः पर्व्वतसर्पा उत्थितोत्थिताः जीवितं त्यापितवन्तः काशीश्वरराणाः कृतोपयानाः विद्याधरोभणति मन्त्रिवरः ॥ राणाः तत्तद्देशीयाः चर्चयाः पराजिताः पर्व्वते कृतः सर्पा यैः ते तथा कृतोपयानाः कृतपलायनाः । कस्यचिद्राज्ञः स्तुतिरियम् । (C).

१४५। अथ पद्मावतीमुदाहरति भञ्ज भञ्जिञ्ज इति । यदा कासीसर राणा — काशीश्वरेण दिवोदासेन राज्ञा, पञ्चाणा — प्रयाणं किएउ — कृतं, तदा बंगा — वंगदेशीया राजानः भञ्ज भञ्जिञ्ज — भयेन भग्नाः कृताः, भग्ग कलिंगा — पलायिताः कलिंगाः, तेलंगा रण मुक्कि चले — तैलंगाः रणं मुक्का चलिताः, धिट्ठा — धृष्टा रणनिर्भीका इत्यर्थः मरहट्ठ — महाराष्ट्राः कट्ठा — काष्ठासु दिचु लगिञ्ज — लग्नाः पलाय्य दिगंतं गता इत्यर्थः, सौराष्ट्रा भयेन पादपतिताः, पव्वञ झंपा — पर्वतझंपाः कंपा — कंपाः कंपनशीला इत्यर्थः चंपारणाः ओत्था ओत्थी -- उत्थायोत्थाय पौनःपुन्येन कंपवशात्पूर्वं पतित्वा अनंतरं उत्थायोत्थायेत्यर्थः, जीव हरे — जीवं स्वप्राणान् हरंति त्यजंति इति, विद्याधरः मंत्रिश्रेष्ठो भणति ॥ अत्र प्रथमचरणे तृतीयः पंचमः षष्ठो गणः कर्णस्वरूपः, प्रथमो द्वितीयश्चतुर्थः सप्तमोऽष्टमश्च सगणस्वरूपः, द्वितीयचरणे च द्वितीयतृतीयपंचमषष्ठगणाः कर्णस्वरूपा अन्ये च सगणस्वरूपाः, तृतीये चरणे च प्रथमतृतीयपंचमषष्ठसप्तमगणाः कर्णस्वरूपा अन्ये च सगणरूपाः, चतुर्थे च प्रथमपंचमौ गणौ कर्णरूपौ षष्ठतृतीयौ भगणरूपौ अन्ये च सगणरूपाः, इत्थं गणाः पतिताः,

अथ कुंडलिआ छंदः । (D).

दोहा लक्खण पढम पढि[1] कव्वह[2] अद्ध णिरुत्त ।
कुंडलिआ बुहअण मुणह[3] उल्लाले[4] संजुत्त ॥
उल्लाले संजुत्त[5] जमक[6] सुद्धउ[7] सलहिज्जइ[8]
चउ[9]आलह सउ[10] मत्त सुकइ दिढ बंधु[11] कहिज्जइ[12] ।
चउ[13]आलह सउ[14] मत्त जासु तणु[15] भूसण सोहा[16]
एम[17] कुंडलिआ जाणहु[18] पढमपडि जह[19] दोहा॥१४६[20]॥

---

विप्रस्तु न कचिदपि पतितस्तथापि सोऽपि यदि पतति तदापि बाधकं नास्तीति । (E).

१४५ । भग्न इति ॥ भयभग्ना वंगा भग्नाः कलिंगास्तेलिंगा रणं मुक्त्वा चलिताः ॥ महाराष्ट्रा धृष्टा लीनकंठाः सौराष्ट्रा भयेन पादयोः पतिताः ॥ चंपारणाः कंपिताः पर्वतनिलीना उत्थायोत्थाय जीवाः पतंति ॥ काशीश्वर राजन् कृता उपाया विद्याधरेण बहु [भण्यते] मंत्रिवरेण ॥ ४६ ॥ (G).

---

१४६ । १ पढ (F). २ कव्वहि (F). ३ मुणउ (A, B & E). ४ उल्लले (E). ५ Non est (B & E). ६ जमघ (F). ७ सुद्दइ (B). ८ सुलहिज्जसु (B), सलहिज्जसु (C). ९ चौ (E & F). १० सौ (E & F). ११ बंध (A & E). १२ कहिज्जसु (B), कहिज्जइ (F). १३ चौ (F). १४ सौ (F). १५ भण (B). १६ सेहा (C). १७ तं (B & C), एमइ (E). १८ जाण (A, B & C), मुणउ (D & E). १९ पढम अहि पढिए (A). पढम पाठ चार पुडि (B), पढम पढि चार पढि (C) पढम पढि चार जहँ (D & E). २० ४१ (A).

१४६ । दोहालक्षणं प्रथमं पठित्वा काव्यस्यार्द्धं निरुक्तं । कुण्डलिकां बुधजना जानीत उल्लालेन संयुक्ताम् । यमकशुद्धां श्लाघ्यचतुश्चत्वारिंशत्शतमात्राः कविना दृढबन्धाः कथ्यंते, चतुश्चत्वारिंशत्शतं मात्रा यस्यां तथा भूषणशोभां तां कुण्डलिकां जानीहि प्रथमं पठ्यते दोहा ॥ एतस्य छन्दसः संपूर्णा दोहैव प्रथमार्द्धं, काव्यच्छन्दः संपूर्णं परार्द्धं, पादचतुष्टयादधिकपादस्य उल्लालसंज्ञा, यमकमत्रानुप्रासः पुनरावृत्त्या भवति यमकेन शुद्धः, अतएव श्लाघाविषयः, दृढवन्धता झढधघभादिमहाप्राणाक्षरयोगात्, भूषणमुपा[पमा]द्यलङ्कारः । प्रथमं दोहां पठित्वा कुण्डलिकेत्यर्थः ॥ (C).

१४६ । अथ कुंडलिकां लक्षयति दोहा लक्खणेति । बुहअण — बुधजनाः यस्याः पढम — प्रथमम् अड्ढ — अर्द्धं, तथाच पूर्वार्द्धमित्यर्थः, दोहा लक्खण — द्विपदिकालक्षणं पठि — पठित्वा, णिरुत्त — निरुक्तं, द्विपदिकास्वरूपमेव यस्याः पूर्वार्द्धमित्यर्थः, द्वितीयं चेति शेषः अर्द्धमिति पूर्वानुषंगः, तथाच द्वितीयम् अर्द्धम् उत्तरार्द्धमित्यर्थः कब्बह — काव्येन निरुक्तं — काव्यस्वरूपं यस्याः उत्तरार्द्धमित्यर्थः उल्लाले संजुत्त — उल्लालेन संयुक्ताम् । उल्लालनम् उल्लालः कतिपयवर्णानां परावृत्य पठमित्यर्थः कब्ब [— काव्येन] तेन सहितामित्यर्थः, तां कुंडलिआ — कुंडलिकां मुणऊ — जानीत, इयं च उल्लाले संजुत्त जमअ — उल्लालसंयुक्तयमका उल्लालेन संयुक्तानि यमकानि शैमादृशवंत्यक्षराणि यस्यां तादृशीत्यर्थः, सुद्धउ — शुद्धा, सलहिज्जइ — श्लाघ्यते, तथाच न केवलमुल्लालयुक्तैवेयं विधेया किंतु यमकान्यपि देयानीति भावः । चौ[चउ]-

आलह सउ मत्त सुकिअ दिढ बंधु — चतुश्चत्वारिंशदधिकशत-मात्रासुकृतदृढबंधा चतुश्चत्वारिंशदधिकशतमात्राभिः सुतरां कृतः दृढः बंधो योजनं यस्यां सा तादृशीत्यर्थः कहिज्जइ — कथ्यते। क्वचित्तु सुकइ दिढ बंधु इति पाठस्तत्र सुकविदृढबंधुनाम-कवि-परममित्रेण पिंगलेनेति यावत्। चतुश्चत्वारिंशदधिकं शतं मात्राः अत्र कथ्यंत इति भिन्नं भिन्नमेव योजनीयं, चउआलह सउ मत्त — चतुश्चत्वारिंशदधिकं शतं मात्राः जासु — यस्यां, तणु भूसण सोहा — तनुभूषणशोभाः शरीरभूषणानां शोभा इत्यर्थः जनयंतीति शेषः। एम कुंडलिआ मुणह — एवं कुंडलिकां जानीत, पढम पठि जह दोहा — प्रथमं पठ्यते यत्र दोहा इति योजना॥ भावार्थस्तु — पूर्वार्द्धं पूर्वोक्तदोहावृत्तेन विधेयमुत्तरार्द्धं च पूर्वोक्त-काव्यवृत्तेन विधेयमित्युक्तं। तत्र यद्यपि दोहायां काव्ये च उल्लाल-यमकयोर्नियमो नोक्तस्तथाप्यत्र उल्लालो यमकं चेति द्वयमवश्यं विधेयमिति विशेषः। एवं च दोहाचरणचतुष्टयस्य अष्टचत्वारिंश-न्मात्राः काव्यचरणचतुष्टयस्य च षण्णवतिमात्रा एकीकृत्य चतु-श्चत्वारिंशदधिकशतं मात्राश्चरणाष्टकस्य इहावसेया इति विभाव-नीयम्। (E).

१४६। दोहेति॥ दोहालक्षणं प्रथमं पठ काव्येनार्द्धं निरुक्तं॥ कुंडलिकां बुधजना जानीत उल्लालेन संयुक्तं॥ उल्लालेन संयुक्तं यमकं शुद्धं श्लाघ्यते॥ चतुश्चत्वारिंशत् शतं मात्राः सुकविना दृढबंधाः क्रियंते, चतुश्चत्वारिंशन्मात्रा यत्र तनुभूषणशोभा॥ एवं कुंडलिकां जानीत प्रथमं पठ्यते यत्र दोहा॥ उल्लालेन परावृत्त्या

जहा,

ढोल्ला[1] मारिअ ढिल्लि[2]मह[3] मुच्छिअ मेच्छ[4] सरीर ।
पुर जज्जल्ला[5] मंतिवर[6] चलिअ[7] बीर हम्मीर[8] ॥
चलिअ[7] बीर हम्मीर[8] पाअभर मेइणि[9] कंपइ
दिग मग णह अंधार धूलि सुरह रह[10] झंपइ ।
दिग मग णह[11] अंधार आणु[12] खुरसाणक[13] ओल्ला[14]
दरमरि दमसि[15] बिपक्ख मारु[16] ढिल्लि[17]मह ढोल्ला ॥
१४७[18] ॥ कुंडलिआ ।

स्वर[स]विशेषेण च दोहाकाव्याभ्यां कुंडलिका छंदः उल्लालयमकाभ्यां युक्ता श्लाघ्या भवति । प्रतिमात्रं संघट्टनादिगुणैरलंकारैश्च संयुक्ता चेत्प्रशस्ततरेति निष्कर्षः ॥ उल्लालेत्यादि पादपूर्त्यर्थमिति केचित् ॥ उल्लालः पदावृत्तिः, स्वरसविशेषश्च ॥ ४७ ॥ (G).

१४७ । उदाहरति । ढोल्लं मारयित्वा ढिल्लीमध्ये मूर्च्छितम्लेच्छशरीरः पुरोजुज्जुल्लामल्लवरश्चलितः वीरः हम्बीरः । चलितवीरहम्बीरपदभरेण मेदिनी कम्पते, दिङ्मार्गनभांस्यन्धकारः धूलिः

१४७ । १ बेला (D). २ ढिल्लि (B) ३ महि (F). ४ मच्छ (F).
५ जुज्जुला (C), बिच जज्जल (F). ६ मल्लवर (A, B & C). ७ चलि (A).
८ हमीर (A), हम्बीर (B & C), no repetition in (F). ९ मेचणि (F).
१० सुराहर (A), सुरहर (B), सुरज रह (D & E), the pāda ending in
झंपइ dropt in (C). ११ दिगमगण (F). १२ आण (E), आणु (F).
१३ खुरसाणक (A). खुरसाणक (D). १४ ओला (F). १५ दलमलिअ दमसि
(A), दरमलि दमसु (B & C), दर दमिअ (F). १६ मार (A, B, D & E),
मह (C). १७ ढिल्लि (F). १८ ४९ (A), ४८ (F).

सूर्य्यस्य रथं झम्पयति । दिङ्मार्गनभोऽन्धकारे आनीतः खुरशानस्य ओल्लः दलयित्वा दृष्टा पत्नं मारितो ढिल्लीमध्ये ढोल्लः ॥ ढोल्लं वाद्यविशेषं मारयित्वा संताड्य, ढिल्लीति इन्द्रप्रस्थस्य संज्ञा, मूर्च्छितानि म्लेच्छशरीराणि येन स तथा, जज्जुल्ला नाम सेनापतिः स एव मल्लवरः सः [पुरो यस्य स] तथा, दिङ्मार्गनभांसि झम्पयत्याच्छादयति । ओल्लशब्दः पतिवाचकः । (C).

१४७ । अथ कुंडलिकामुदाहरति ढोल्लेति । पुर जज्जल्ला मंतिवर—पुरोजज्जल्लमंत्रिवरः पुरोऽग्रे जज्जल्लनामा मंत्रिवरो यस्य स तादृश इत्यर्थः वीरहंमीरः चलित इति यदा ढिल्ली मह—ढिल्लीमध्ये ढोल्ला—आनकः डिंडीरवाद्यमिति भावः मारिअ—मारितस्ताडित इत्यर्थः, तदा मेच्छ शरीर—म्लेच्छशरीराणि मुच्छिअ—मूर्च्छितानि । अग्रेसरजज्जल्लाख्यमंत्रिवरो हंमीरनामा स्वनगराच्चलित इति फुत्कृत्य सर्वजनानां सावधानतासंपादनाय ढिल्लीमध्ये यदा डिंडीरवाद्यं पटहस्ताडितः तदा तच्छ्रुत्वा हंमीराग-मनचकिता म्लेच्छा मूर्च्छिता इति भावः ॥ चलिअ वीर हंमीर पाअभर—* * पादभरेण मेदिनी पृथ्वी कंपइ—कंपते, धूलि—धूलिभिः सैन्यपादाघातोत्थरजोभिरित्यर्थः सूरज—सूर्यस्य [रह—] रथः झंपइ—आच्छाद्यते, ततश्च दिग मग णह—दिङ्नभोमार्गे अंधार—अंधकारः जात इति शेषः । दिग मग णह—दिङ्नभो-मार्गे अंधार—अंधकारे सति खुरसाणक—खुराशानस्य देशस्य ओल्ला—दंडप्रतिनिधिभूताः पुरुषा आण—आनीता इति यद्यपि, तथापि हे वीर सुरत्राणेति संबोधनमध्याहर्त्तव्यं, त्वं दरमरि—

पढमहि दोहा चारि पत्र चउ[1]पत्र कव्वह[2] देहु[3]।
एम[4] कुंडलिआ अट्ठपअ पअपअ जम कुणेहु[5] ॥१४८[6]॥
दोहा। [इति] कुंडलिआ। (A).

---

चरणतलैर्विमर्द्य विपक्ष—विपक्षान् [दमयि—] दमयमि, अतः दिल्ली मह—दिल्ला मध्ये ढोल्ला—पटहं माह—ताड्य। यद्यपि हंमीरश्चलित इति श्रुत्वा अन्ये म्लेच्छा मूर्च्छिताः खुरासानदेशीयैश्च दंडप्रतिनिधिभूता मनुष्याः समर्पिताः, तथापि त्वया न भेतव्यं किंतु योद्धृणां रणसज्जीभावाय पुनर्द्वितीयो डिंडीरवः त्वया कारणीय-इति किंचिद्दायसधैर्य्यं सुरत्राणं प्रति कस्यचिन्मंत्रिण उक्तिः। (E).

१४७। यथा॥ ढोल्लाख्यो देशो मारितः, शिथिला मही, मूर्च्छितं म्लेच्छशरीरम्, अत इति शेषः पुरः कृत्वा जज्जलं मंत्रिवरं चलिते वीरहम्मीरे चलितानां वीराणामक्रमक्रमिकया पादभरेण मेदिनी कंपते दिग्गगनमंधकारयंत्या धूल्या सूर्यस्य रथ आच्छाद्यते॥ दिग्मार्गेष्वंधकारेऽन्यत्खुर[सा]णः कंपितो दरेण वरं कंपितो विपक्षताड़ितो दिल्लीमध्ये दुंदुभिः॥ ४८॥ (G).

१४८। अथ दो[हा]छन्दसः पादचतुष्टयेन काव्यछन्दःपाद-चतुष्टयेन च कुण्डलिकाष्टपदा भवतीति सिद्धम्। तदेव स्पष्ट-यति। प्रथमतो दोहायाश्चत्वारि पदानि [चतुष्पदानि] काव्यस्य देहि, एवं कुंडलिकाष्टपदा पदे पदे यमकं कुरु॥ (C).

---

१४८। १ चौ (E & F). २ कव्वर (A), कव्वउ (C), काव्वर (E), कव्वर (F). ३ देहि (E), देर (F). ४ एव (C). ५ कुणेह (E), कुणेहि (F). ६ ४९ (A), ४८ (F). This verse is not found in (B).

अथ गगनांगच्छंदः । (D).

पत्र पत्र ठवहु जाणि[1] गगणंगउ[2] मत्त[3] बिहूसिणा[4]
भावउ[5] बीस[6] कलत्र[7] सर अग्गल[8] लहु गुरु सेसिणा[9] ।
पढमहि मत्त चारि गण[10] किज्जहु[11] गणह[12] पत्रासित्रो[13]
बीसक्खर सत्रल[14] पत्रह[15] पित्र[16] गुरु अंत पत्रासित्रो[17] ॥
१४९[18] ॥

---

१४८ । अथ दोहावृत्तेन पुनः स्पष्टीकृत्य कुंडलिकालचणमाह पढमहि इति । पढमहि—प्रथमे अर्द्धे इति भावः दोहा चारि पत्र—दोहायाश्चत्वारि पदानि ततो द्वितीयार्द्धे कव्वह—काव्यस्य चउपत्र—चत्वारि पदानि देहि, एवं कुंडलिका अष्टपदी, तत्र पादे पादे यमकानि क्रियन्तां ॥ यमकानीति उल्लालाना-मप्युपलचकम् । इदं चोदाहरणानंतरं लचणकथनमनौचित्यमावह-तीति चेपकमिवाभाति इति बोध्यम् । (E).

१४८ ॥ पढेति ॥ प्रथमेषु दोहां चतुःपदेषु, चतुःपदेषु काव्यं देहि ॥ एवं कुंडलिकाष्टपदा पदे पदे यमकं कुरु ॥ ४९ ॥ इति कुंडलिका ॥ (G).

---

१४९ । १ जाम (B). २ गमणंक (C). ३ मम (C). ४ विभूसिया (B & C), विऊसिया (E). ५ तावउ (A), भावउ (B & C), भावइ (E). ६ बीसइ (D & F). ७ कल (D & F), करइ (E). ८ अग्ग (E). ९ सेसिया (C). १० गण चारि मत्त (B & C), मत्त चारि गण (D), चारि मत्त गण (E). ११ किज्जइ (D & E), दिज्जइ (F). १२ गणउ (A & C), गणक (B). १३ पत्राणि (C). १४ स सत्र (B & C), समत्र (D), सभ (E), सर सत्र (F). १५ गणह (E). १६ पि (F). १७ पत्रइत्रो (B). १८ ४४ (A), ५० (F).

१४८। अथ गगनाङ्कः॥ पदे पदे स्थापय ज्ञात्वा गगनाङ्कं मात्राविभूषणं भागो विंशतिकलाः प[श]राधिकाः लघुगुरु-शोभिताः। प्रथमे चतुर्मात्रो गणः क्रियतां गणाः प्रकाशिताः विंशत्यक्षराणि स लभते पदे प्रिये गुरुरन्ते प्रकाशितः॥ मात्राविभूषणादिकमित्यनेन मात्रानियम एव नलच गणनियम-इत्युक्तं भवति। विशेषमाह, भागः पादः, शराधिकाः पञ्चाधिका-स्तेन पञ्चविंशतिकलाः पादाः लघुगुरुलक्षिता लघुगुरुविशोधि-[भि]ताः, लघवो गुरवश्च यथेच्छं देया इति भावः, लघुयुक्तो गुरुरन्ते देय इत्यपरे। (C).

१४८। अथ गगनांगनामकवृत्तं लक्षयति पश्र पश्र इति। हे पिश्र—प्रियाः शिष्याः यत्र पढमहि—प्रथमपादादाविति यावत् चारि मत्त गण—चतुर्मात्रकः गणः किज्जइ—क्रियते, ततो यथेच्छं चतुष्कलैर्वेत्यध्याहारः, गणह—गणैः, यत् पश्राशिश्रो—प्रकाशितं, यत्र च गुरु श्रंत पश्राशिश्रो—श्रंतप्रकाशितगुरूणि श्रंते समाप्तौ प्रकाशितो गुरुर्येषु तादृशानीत्यर्थः, तथाच कर्त्तव्येषु विंशतितममक्षरं गुरुरूपमेव कार्यमिति भावः, वीसक्खर—विंशत्य-क्षराणि, सभ पश्रह—सर्वेषु पादेषु प्रत्येकं पतन्तीति शेषः, तत् पश्र पश्र—पादे पादे प्रतिचरणमित्यर्थः, मत्त विहूसिणा—मात्राविभूषितं गश्रणंगउ—गगनांगं गगनांगनामकं वृत्तं जाणि—ज्ञात्वा ठवहु—स्थापयत। कियतीभिर्मात्राभिर्विभूषितमित्य-पेक्षा[या]माह भावउ इति। अत्र लहु गुरु सेविणा—लघुगुरु-सेविता लघुगुरुभ्यां समाप्तिं नीता इत्यर्थः सर श्रग्ग—शराधिकाः

पढमहि[1] चक्कलु[2] होइ गण अंतहि[3] दिज्जहु[4] हार[5]।
बीसक्खर गअणंग[6] भणु[7] मत्त पचीस[8] बिआर ॥
१५०[9]। दोहा।

---

शराः पंच तथाच पंचाधिका इत्यर्थः, बीसइ कल — विंशतिरेव कलाः भावउ — भावयत, तथाच पंचविंशतिर्मात्रा अत्र प्रतिचरणं पतंति, तास्वेव चांतिमं मात्राद्वयं लघुगुरुरूपं कार्यमित्यर्थः। अत्र च चतुर्ष्वपि चरणेषु पादादौ चतुष्कल एव गणः कार्यः, अनंतरं च चतुष्कलैः पंचकलैर्वा, यथा चरणे विंशत्यक्षराणि पंचविंशतिर्मात्राश्च पतंति, पादान्ते चावश्यं क्रमेण लघुगुरुश्चायाति तथैव गणा देया इति तात्पर्यार्थः। (E).

१४९। पअ इति ॥ पदे पदे स्थापय शाला गगनांगणे मात्राविभूषिते भाव्यंतां विंशतिकलाः शराधिका लघुगुरुमिश्रिताः ॥ प्रथमं मात्राचतुष्टयरूपो गणो दीयतां ॥ गणाः प्रकाशमानाः अन्ये इति शेषः ॥ विंशतिरक्षराणि शराः [?] सर्वाणि पादे प्रिये गुरुरंते प्रकाशितः ॥ आदौ लघुचतुष्टयमंते गुरुः शेषाणि विंशतिरक्षराणि[?] यथेच्छं कार्याणीति भावः ॥ ५० ॥ (G).

१५०। विशेषान्तरमाह प्रथम इति। प्रथमे चतुष्कलो भवति गणोऽन्ते क्रि[दी]यते हारः। विंशत्यक्षरं गणं(ग)नाङ्गं भण मात्राः

---

१५०। १ पढमउ (B & C). २ चक्कल (A & D). ३ अंतड (C), अंतर (F). ४ दिज्जउ (C), दिज्जइ (D), दिज्जइ (E & F). ५ हार (A), ताव (D). ६ गअणंग (B), गअंग (C), गअगअण (F). ७ भण (A). ८ चौस (F). ९ ४५ (A).

जहा,

भंजिअ मलअ चोल वइ णिवलिअ[1] गंजिअ गुज्जरा[2]

मालव राअ[3] मलअगिरि लुक्किअ परिहरि[4] कुंजरा ।

खुरासाण[5] खुहिअ रण मह मुहिअ[6] लंघिअ[7] साअरा

हम्मीर[8] चलिअ हारव[9] पलिअ[10] रिउगणह[11] काअरा[12] ॥

१५१[13] ॥ गगणांग[14] । (B).

---

पञ्चविंशतिं विचारय ॥ पदे प्राथमिको गणश्चतुर्मात्रः, परे गणाः प्रकाशिताः प्रकटा यथेच्छं कार्य्या इत्यर्थः । स ग[ग]नाङ्गपादो विंशत्यक्षराणि लभते, तेनात्र पञ्च गुरवः पञ्चदश लघवो भवन्ति, प्रिय सम्बोधनं, अन्ते च गुरुः कार्य्यः । तमेवार्थं निष्कृष्याह पढमेति । हारो गुरुः, पञ्चविंशतिमात्राः प्रतिपादं देयाः । (C).

१५० । अथैनमेवार्थं द्विपदिकया स्पष्टीकृत्याह पढम इति । यत्र पढमहि — प्रथमं पादादौ चक्कलु गण — चतुष्कलो गणः होइ — भवति, अंतहि — अंते पादांते दिज्जइ हार — दीयते हारः गुरुः, तत् गअणंग — गगनांगं भण — कथय, अत्र च वीसक्खर — विंशत्यक्षराणि, पचीस मत्त — पंचविंशतिर्मात्राः, विआरह — विचारय ॥ (E).

---

१५१ । १ च चलिअ (B & C). २ गुंजरा (B, C & E). ३ राउ (F). ४ परिहरिअ (D), परिहर (F). ५ खुरसाण (A & E), खुरसाणा (B & C), खुराशाणा (D). ६ मह चलिअ (D & F). मुहि चलिअ (E). ७ लंघिअ (C). ८ हम्मीर (C). ९ हार (A), हारव (E). १० चलिअ (F). ११ रिउगणाह (A), रिउगण (B), चरिअग (C). १२ कादरा (F). १३ ४९ (A), ५१ (F). १४ गअणंग (A).

१५० । पुनः प्रकारांतरेणाह ॥ पढमेति ॥ प्रथमं चतुष्कलो भवति गणः अंते दीर्घतां हारः । विंशत्यचराणि गगनांगणे भण मात्राः पंचविंशतिं विचार्य ॥ ५१ ॥ (G).

१५१ । उदाहरति । भग्नो मलयचोलपतिश्च पलितः, गञ्जित-गुञ्जरमालवराजो मलयगिरौ लुक्कायितः परिहृत्य कुञ्जरान् । खुरसाणाः चुभिताः रणमध्ये मोहं प्राप्ता लङ्घितसागराः हम्मीर-चलितः हारवः पतितः अरिगणाः कातराः ॥ (C).

१५१ । अथ गगनांगमुदाहरति भंजिअ इति । अहिअ लंघिअ साअरा — लंघितसागराहिते लंघितः सागरो येस्तादृशा-अहिता यस्य तादृशे इत्यर्थः हंमीर चलिअ — हंमीरे चलिते सति, मलअ चोल वइ — मलयचोलपती मलयाधिपचोलदेशाधि-पश्चेति द्वावित्यर्थः भंजिअ — भग्नौ, गुज्जरा — गुर्जराः गुर्जरदेशीयाः राजानः णिबलिअ — निर्बलीकृत्य गंजिअ — गंजिताः, मालव राअ — मालवराजः परिहरि कुंजरा — परिहृत्य कुंजरान् मलअगिरि — मलयगिरौ लुक्किअ — निलीनः, खुरसाण — खुर-सानः खुरसानदेशीयः राजा रण मुहि — रणे मुग्धीभूय खुहिअ — चुभितः, काअरा — कातरे पलायितुमप्यसमर्थे तस्मिन्नित्यर्थः रिउगण — रिपुगणे हारवः पतितः ॥ (E)

१५१ । यथा ॥ भंजिअ इति ॥ भग्नो मलयचोलपतिर्निर्बलो गंजितो गुर्जरः । मालवराजो मलयगिरौ निलीनः परिहृत्य कुंजरान् ॥ खुरासानः चुभित्वा रणमध्येऽभितो लंघितः सागरं, हम्मीरे चलिते हा रवन्तो[रवो] रिपुगणेषु कातरेषु ॥ ५२ ॥

अथ द्विपदीच्छंदः। (D).

आइग[1] इंदु अत्थ[2] हो[3] पढमहि[4]
दिज्जइ[5] बेवि[6] धणुहरं[7]।
तह पाइक्क[8] जुअल परिसंठवहु[9]
विविह[10] चित्त[11] सुंदरं ॥ १५२ ॥

सरसइ[12] लइ[13] पसाउ[14] तहि[15] पुहविहि[16]
करहि[17] कइत्त[18] कइअणा[19]।
महुअर[20] चरण अंत लइ[21] दिज्जहु[22]
दोअइ[23] भणहु[24] बुहअणा ॥ १५३[25] ॥

१५२—१५३। अथ द्विपदीच्छन्दः। आदाविन्द्रो यत्र भवति प्रथमं दीयेते द्वावपि धनुर्द्धरौ], तथा पदातिकयुगलं परिस्थापय विविध-चित्रसुन्दरं ॥ सरस्वत्याः लब्ध्वा प्रसादं तर्हि पृथिव्यां कवित्वं कुरुत कविजनाः। मधुकरचरणोऽन्ते गृहीत्वा दीयतां द्विपदीं

१५२-१५३। १ आइरि (A), आइगह (E). २ अतम (A). ३ Non est (C). ४ पढम (F). ५ दिज्जिअ (A), दिज्जहि (C). ६ विवि (D & F). ७ धणुहरं (D & E). ८ पाइक (B). ९ परिसंठउ (A). १० विवि (D & F). ११ चिंतिअ (A, C & D), चिंतिअ (B), चिंतिअ (F). १२ सरद (E). १३ Non est (B), लइ (E). १४ पसाए (A). १५ तवँ (D), तव (F). १६ पुहविहि (A), पुहवीो (D), पुहवी (F) १७ कर (A), करउ (D & F), करहु (E). १८ कवित्त (A & D), कवित (F). १९ कइअण (F). २० महुअर (D & F). २१ लै (E), लेइ (F). २२ दिज्जइ (E), दिज्जउ (F). २३ दोअइ (E). २४ भणइ (B), बुज्झइ (D & F), बुज्झउ (E). २५ ४७ (A), ५१ (F).

भणत बुधजनाः ॥ इन्द्रशब्दो मध्यदिलघुषट्कलवाची, धनुर्द्धरश्चतुष्कलः, पदातिकोऽपि चतुष्कलः, मधुकरचरणः षट्कलः । (C).

१५२—१५३ । अथ[द्वि]पदीनामकं वृत्तं लक्षयति आइगेति । हे बुहअणा — बुधजनाः, जत्थ — यत्र पढम[हि]—[प्रथमे] चरणे, इदं चोपलक्षणं द्वितीयेऽपि बोध्यम्, आइग — आदिगः आदिस्थः पादाद्य-इति यावत् इंदुः — षट्कलो भवति, ततश्च वेवि धणूहरं — द्वौ धनुर्द्धरौ चतुष्कलाविति यावत् दिज्जइ — दीयेते, तथा पाइक जुअल — पदातियुगलं पुनरपि चतुष्कलयुगलमेवेत्यर्थः परिसंठवऊ — परिस्थापयत, अंत — अंते पादांते महुअरचरण — मधुकरचरणः षट्कल इत्यर्थः दिज्जइ — दीयते, एवं दोवइ - द्विपदीं भणत, तहि — तया हे कइअणा — कविजनाः, सरसा ले[लु]इ पसाअ[उ] — सरस्वत्याः सकाशाल्लीला प्रसादं पुहविहि - पृथिव्यां विविह चित्त सुंदरं — विविधचित्तसुंदरं विविधानि अनेकप्रकाराणि यानि चित्तानि तेषां रमणीयं सर्वलोकमनोहरमित्यर्थः कइत्त — कवि[वि]त्वं अनेन च वृत्तेनेति शेषः करइ - कुरुत, अनेन छंदसा निर्मितं कवित्वं सर्वजनमनोहरं भवतीति भाव इति योजना ।

अत्र यद्यपि इंदुशब्दः लघुद्वयोत्तरगुरुद्वयात्मक-षट्कलवाची तथाप्यत्र षट्कलसामान्यपरोऽवसेयः, उदाहरणे तथैव दर्शनात् मधुकरचरणशब्दस्य यद्यपि षट्कलनामसु पूर्वं नोपात्तस्तथापि मधुकरचरणानां षट्त्वसंख्यावत्त्वादत्रापि तत्पुरस्कारेणैव षट्कल परो बोध्यः । क्वचित्तु दिज्जइ तिण्णि धणुहरमिति पाठः,

छक्कलु मुह[1] संठावि[2]कहु[3] चक्कलु पंच ठवेहु[4] ।
अंतहि एक्कइ[5] हार दइ[6] दोअइ[7] छंद[8] कहेहु[9] ॥
१५४[10] ॥ दोहा ।

---

प्रामादिकः, एवं सति पादांते षट्कलगणालाभेन मङ्गर चरण अंत लेह दिज्जसु इत्ययेतनेन विरोधात् । एतत्पाठानुसारेणैव केश्चिदग्रे मङ्गर चरणेति पाठं प्रकल्प्य तत्र च मुग्धशब्दस्य गुरुनामसूपात्तत्वात्तत्पर्यायत्वान्मधुरोगुरुस्तथाच मधुरो गुरुः अंत— चरणांते दीयतामित्यर्थः कृतस्तदपि भ्रमविलसितं, लक्षणस्यापि लक्ष्यतायां मङ्गर चरणेति पाठे कल्प्यमाने एकमात्रान्यूनतया लक्षणासंगतेः । (E)

१५२—१५३ । अथ द्विपदीमाह ॥ आईति ॥ आदिगुरुरिंदुर्यत्र भवति प्रथमं दीयते त्रयो धनुर्द्धराः ॥ ततः पदातियुगलं परिसंस्थापय विधिना विहितं सुंदरं ॥ सरसेति । सरसत्वा गृहीत्वा प्रसादं ततः पृथिव्यां कुरुत कवित्वं कविजनाः । मधुरं चरणमंते गृहीत्वा दीयतां द्विपदीं जानीत बुधजनाः ॥ मधुरो गुरुः ॥ (G).

१५४ । उक्तार्थमेव स्पष्टीकुर्व्वन् विशेषान्तरमाह षट्कलमिति । षट्कलं मुखे संस्थाप्य चतुष्कलान् पञ्च स्थापय । अन्ते एकं हारं

---

१५४ । १ छक्कल मुह (A), छक्कलुअ मुह (B), छप्पल मुह (D). २ संठावि (F). ३ कर (D), कर (E), चवि (F). ४ करेहु (D & F), कारेहि (E). ५ चरेंद (A), एक्कवि (B & C). ६ देर (A, D & E). ७ दीचर (D). ८ चंदु (B). ९ करहु (A, B & C). १० १५८ (A), १५४ (F).

जहा,

दाणव[1]देव वेवि दुक्कंतउ[2] गिरिवर[3] सिहर कंपिओ[4] ।
हअ गअ पाअ[5] घाअ उट्टंतउ धूलिहि गअण[6] झंपिओ[7] ॥

१५५[8] ॥ दोअइ । (A, B, C & F).

दृष्टा द्विपदीच्छन्दः कथय ॥ मुखे आदौ, हारं गुरुं, पूर्वं यः षट्कलः अन्ते दातव्यत्वेनोक्तः तत्रायं विशेषः चतुष्कलान्ते गुरुरेक इति । (C).

१५४ । अथ उट्टवणिकांतरं मनसि विधाय दोहान्तेन पुनर्द्विपदीं लक्षयति छक्कलु इति । छक्कलु—षट्कलं मुह संठाविकइ—मुखे आदौ संस्थाप्य, पंच चक्कलु—चतुष्कलान् करेहु—कुरुत, अंतहि—पादांते एक्कहि—एकमेव हारं गुरुं देइ—दत्त्वा, दोवइ छंद कहेहु—द्विपदीच्छंदः कथयत । पूर्वं षट्कलानंतरं चत्वारश्चतुष्कलास्तदनंतरं च पुनः षट्कल इत्युक्तम्, इदानीं तु पादांतस्थषट्कलांतर्गतं चतुष्कलं चित्ते कृत्वा षट्कलानंतरं पंच चतुष्कला उक्तास्तदनंतरं च षट्कलांतर्गतस्य मात्रायुगलस्योर्वरितत्वात्तस्यैवैको गुरुर्देय इत्युक्तमित्युट्टवणिकाकृतः एवं पूर्वापरयोर्भेदः । इदं च वृत्तं द्विपादमेव न [च]तुष्पादं, उदाहरणानुरोधादिति केचित् । अन्ये तु यदीदं द्विपादमेव, तर्हि लक्षणं पादचतुष्टयेन कथं कृतमिति इदं चतुष्पादमेव, न चोदाहरणविरोधस्तस्य चरणद्वयेनापि संभवात्, न चैतादृशमन्यत्र न दृष्टमिति वाच्यं, षोडशकलगाथायाश्चतुःपादिकाया एकस्यैव चरणस्योदाहृतत्वादित्याहुः ।

१५५ । १ दाणव (E). २ ढुक्कंतउ (D). ३ गिरिवरु (D). ४ कंपओ (C). ५ पअ (D). ६ गअण (D). ७ चोंपिओ (F). ८ ९८ (A), ५५ (F).

अथ झुल्लणा छंदः । (D).

पढम दह दिज्जिआ, पुणवि तह किज्जिआ,
पुणवि दहसत्त तह[1] विरइ जाआ ।
एम परि विविहु दल[2], मत्त सततीस पल[3],
एहु कह[4] झुल्लणा[5] णाअराआ[6] ॥ १५६ ॥*

परे तु लक्षणं दृत्तद्वयेन कृतमितीदमुदाहरणानुरोधाद्द्विपद-
मित्यादः । (E).

१५४ । दोहया पुनरन्यत् प्रकारांतरेणाह ॥ छक्केति ॥ षट्कल-
मादौ स्थापयित्वा चतुष्कलान् पं[च] कुरु । अंते एकं हारं दत्त्वा
द्विपदीच्छंदः कथय ॥ ५४ ॥ (G).

१५५ । उदाहरति । देवदानवाभ्यां द्वाभ्यामपि डौकमानं
गिरिशिखरं कम्पितं, हयगजपदघातादुत्थितैर्धूलिभिर्गगनं
झम्पितं ॥ डौकमानं मल्लमानं, झम्पितमाच्छादितम् । (C).

१५५ । अथ द्विपदीमुदाहरति दा (E). [Here evidently some-
thing has been left out by the scribe.—Ed.]

१५५ । यथा ॥ दाणेति ॥ दानवदेवौ द्वावपि मिलितौ
गिरिवरशिखरं कंपितं । हयगजपादघातैरुत्थिताभिर्धूलिभिर्गगन-
माच्छादितम् ॥ ५५ ॥ इति द्विपदी ॥ (G).

१५६ । अथ झुल्लणानामकं वृत्तं लक्षयति पढम दहेति ।
जह—यथ, विरइ—विरतिः पढम—प्रथमम् आदौ दह—

१५६ । १ जह (E). २ दल (E). ३ च (D). ४ Dropt in (E).
५ भलह (F). ६ रा dropt in (F). * This sloka and the next
are not found in (A, B & C).

जहा, सहस मअमत्त[1] गअ, लाख[2] लख[2] पक्खरिअ,
साहि दुइ साजि खेलंत गिंदू[3] ।
कोप्पि[4] पिअ जाहि तहि, थप्पि[5] जसु बिमल महि,
जिणइ[6] णहि[7] कोइ[8] तुअ तुलक हिंदू ॥ १५७ ॥

इत्यस्य मात्राणिति शेषोऽत्रापि योजनीयः, दिज्जिआ — दत्ता पुणवि — पुनरपि तह — तथा तेनैव प्रकारेण इत्यस्यैव मात्राणित्यर्थः किज्जिआ — कृता, पुणवि — पुनरपि दहसत्त — सप्तदशसु मात्रासु जाआ — जाता, एम परि — एवं परिपाट्या बिबिहु दल — द्वयोर्दलयोः प्रत्येकमिति शेषः, सततीस — सप्तत्रिंशत् मत्त — मात्राः पल — पतंति, एह — एनां [णाअराआ]— नागराजः झुल्लणां कह — कथयति ॥ (E)

१५६ । अथोल्लणा ॥ पढमेति ॥ प्रथमं दश दत्ताः, पुनरपि तथा कृताः, पुनरपि सप्तदश तथा विरतिर्जाता ॥ एवं प्रकारेणापि द्वितीये दले मात्राः सप्तविं[च]शत्पतंति, एनां कथयत्युल्लणां नागराजः ॥ उल्लणा झुल्लणा उल्पणेति पाठत्रयम् ॥ ५६ ॥ (G).

१५७ । अथ झुल्लणामुदाहरति महसेति । सहस मअमत्त गअ — सहस्रं मदोन्मत्तगजान् लक्ख लक्ख — लक्षं लक्षम् अश्वांश्चेति शेषः पक्खरिअ — वारवाणेमावगुंठ्य साजि — सज्जीभूय साहि दुइ — सार्वभौमद्वयं गिंदू — कंदुकं खेलंत — क्रीडतः, हे प्रिय, तहि — तत्र

१५७ । १ मअमत्त (D). २ लक्ख (E). ३ This part non est (F). ४ कोप्पी (E). ५ थप्पि (D), थप्पु (E). ६ जिणइ (D). ७ णिहइ (F). ८ कोवि (E).

अथ खंजछंदः । (D).

धुअ[1] धरिअ[2] दिअवर[3] णवगण[4] कमलणअणि
बुहअण[5] मण सुहइ[6] जु जिम[7] ससि रअणि सोहइ ।
पुणविअ[8] विरइ विहु पअ[9] गअवरगमणि
रगणपर[10] फणिवइ[11] भण[12] सुमइ[13] बुहअण[14] मोहइ ॥
१५८[15] ॥

कोप्पि — प्रकुप्य जाहि — गच्छ, विमलं जसु — यशः महि — मह्यां [मह्यां] थप्पु — स्थापय, तुअ — त्वां कोइ — कोऽपि तुलुक — तुरुष्कः हिंदु — [हिन्दु]को वा णहि जिणइ — नहि जेष्यति ॥ (E).

१५७ । यथा ॥ मइमत्तेति ॥ मत्तान् मदमत्तान् गजान् लक्षम् अश्वान् कृतपल्ययनान् स्वामिदयं मन्यीकृत्य खेलति गेंदुकं । कुपित्वा प्रिय याहि तत्र स्थापय यशो विमलं मह्यां जेष्यति न कोऽपि त्वां तुरुष्को हिंदुकः । ५७ ॥ (G)

१५८ । अथ खञ्जा ॥ ध्रुवं धारय द्विजवरनवगणान् कमलनयने बुधजनमनसि शोभते यथा शशिरजनी शोभते, पुनरपि विरतिर्द्वयोः पदयोः गजवरगमने रगणपरा भणति फणिपतिः

१५८ । १ धुव (B). २ धरि (D & F). ३ दिअवर (A). ४ णवगण (A), dropt in (B), गण (D). ५ बुहअण (C), विबुह (D & F). विबुहअण (E). ६ सहइ (C). ७ जिमि (D & F). ८ पुणवि (C). ९ पअ (A), पुअ (B), प्रअ (E), दअ (F). १० रगण पर (D, E & F). ११ फणिवइ (D & E). १२ भणु (D & F). १३ भुअ (E). १४ मणु (D & F). १५ ५० (A), ५८ (F).

स्मर बुधमनो मोहयति ॥ ध्रुवं निश्चितं धारय, द्विजवरः सर्वलघुः चतुष्कलस्तादृशान् नव गणान्, शशिमुखा रजनी शशिरजनी । पुनर्विशेषः द्वयोरपि पादयोर्विरती रगणपरा रगणः ऽ।ऽ परो-ऽन्तो यस्याः सा तथापरेति सर्वत्र्यमेतदिति भावः । (C).

१५८ । अथ संज्ञानामकं वृत्तं लक्षयति धुअ धरिअ इति । हे कमलणअणि — हे कमलनयने, अत्र विअ पअ — पादद्वये प्रत्येकमिति शेषः दिअवर णवगण — द्विजवरनवगणान् षट्त्रिंश-ल्लघूनित्यर्थः धरिअ — धृत्वा अवलंब्येति यावत् विरइ — विरति-र्भवतीति शेषः, पुणविअ — पुनरपि च तदनन्तरं चेत्यर्थः रअण — रगणः मध्यलघुर्गण इत्यर्थः बुहअण मोहए — बुधजनं मोहय-तीति भावः, जु — यतः बुहअण मण सुहइ — बुधजनमनः सुख-यति, यथा रजन्यां शशी सोहए — शोभते, तत् संज्ञावृत्तमिति शेषः, हे गजवरगमने त्वं सुमरु — स्मर पौनःपुन्येन भावयेत्यर्थः, इति वर फणिवइ — वरः फणिपतिः पिंगलः भणइ — भणति इति योजना ॥ अत्र षट्त्रिंशल्लघ्वनन्तरं रगणः प्रतिचरणं पतति तत् संज्ञानामकं वृत्तमिति फलितोऽर्थः । इदं च द्विपदमेवेति ध्येयम् । (E).

१५८ । धुअ इति ॥ ध्रुवं धृत्वा द्विजवरान् नवगणान् कमल-नयने विबुधजनमनः सुखयति यथथा शशी रजन्यां शोभते । पुनरपि च विरतिर्द्वयोर्द्वयोर्गजगमने रगणो वरः फणिपति-र्भणति स्मरणं बुधमनो मोहयति ॥ षट्त्रिंशल्लघूत्तरं रगणः कार्य इत्यर्थः, सा संज्ञेति भावः ॥ (G).

विहु[1]दल णव पल विप्पगण जोहल[2] अंत ठवेहु[3] ।
मत्त इआलिस[4] खंज पअ दहगण[5] तत्थ[6] मुणेहु ॥
१५८[7] ॥ दोहा ।

१५८ । एतदेव स्पष्टयन् विशेषान्तरमाह । द्वयोर्द्वयोर्नव पतन्ति विप्रगणा ओहलमन्ते स्थापय । मात्रा एकचत्वारिंशत् खञ्जायां पदे पदे यमकं कुरुत ॥ द्वयोरिति पूर्व्वपदेऽपि तथेत्यर्थः, ओहलो मध्यलघुः पञ्चकलः । एवं क्रमेण खञ्जायां प्रतिपादमेकचत्वारिंशन्मात्रा भवन्ति । यमकमनुप्रासः । (C)

१५८ । अथ दोहावृत्तेन स्पष्टीकृत्य खंजां लक्षयति बिहु दलेति । बिहु दल — द्वयोर्दलयोः प्रत्येकमिति शेषः णव बिप्पगण — [नव] विप्रगणान् पल — प्रकटयत, अंत — पादांते ओहलु — योद्धारं मध्यलघुं रगणमित्यर्थः ठवेहु — स्थापयत, एवं खंज पअ — खंजापादे खंजानामकस्य वृत्तस्य चरणे इत्यर्थः एआलिस मत्त — एकचत्वारिंशन्मात्राः, दहगण — दश गणान् तत्थ — तत्थं मुणहु — जानीत ॥ (E).

१५८ । लक्षणांतरमाह ॥ बिउदलि ॥ द्वयोर्दलयोर्नव पतंति विप्रगणा ओहलमंते स्थापय । मात्रा एकचत्वारिंशत्, खंजापादे दश गणान् तथा जानीत ॥ ५८ । (G)

१५८ । १ बिउ (F) २ ओहलु (B, C A E) ३ ठवेहु (D) ४ एआलिस (A), एआलिस (B, C A E). ५ पअ जमअ (C) ६ तत्थि (A) तत्थ (C) ७ ५१ (A).

This is different from the metre of the same name in the Sanskrit treatise of Pingala. Vide Ghosha's Compendium, p. 56.

जहा,

अहि[1] ललइ महि[2] चलइ[3] गिरि खसइ[4] हर खलइ
ससि घुमइ अमिअ वमइ[5] मुअल जिवि[6] उट्ठए ।
पुणु[7] धसइ पुणु[7] खसइ पुणु[7] ललइ[8] पुणु[7] घुमइ[9]
पुणु[10] वमइ जिविअ[11] विविह परि समर[12] दिट्ठए ॥

१६०[13] ॥ खंजा (A, B & C).

१६० । उदाहरति । मही लोलते, अहिश्चलति, गिरिः पतति, हरः स्खलति, शशी घूर्णते, अमृतं वमति, भटा जीविलो-भिष्ठन्ते । पुनर्द्धावति, पुनः स्खलति, पुनर्लोलते, पुनश्चलति, पुनर्घूर्णते, अमृतं वमति, विविधप्रकारो रणो दृश्यते ॥ कस्यचि-द्युद्धं वर्ण्यते, तत्र युद्धे भूकम्पादयो वर्ण्यन्ते । (C).

१६० । अथ खंजामुदाहरति अहीति । अहि ललइ—अहिः शेषः चल[य]ति स्थानच्युतो भवतीत्यर्थः, योद्धॄणां पादाघातेनेति भावः । अतएव महि—मही पृथ्वी चलइ—चलति, अतएव मह्याश्रितः गिरिः कैलासः खसइ—पतति, ततश्च तदाश्रितो हरः खलइ—स्खलति, ततश्च तदा[श्र]यः शशी घुमइ—कू[घू]र्णते, अतएव अमिअ वमइ—अमृतं वमति, ततश्चामृतसंपर्कात्

१६० । १ महि (A, B & C). २ अहि (A, B & C). ३ पलइ (A & B). ४ चलइ (A, B & G), रपल (F). ५ Dropt in (A), वमइ (F). ६ मुअ जिवइ (A), भड जिविअ (B), भड जिविअ (C), मुअल जिविअ (E). ७ पुण (E & F). ८ चलइ (C). ९ पुणु चलइ (A). १० चलिअ (A, B & C), पुण (E & F). ११ Non est (A, B & C), जीविअ (E), विजिअ (F). १२ रण (A, B & C). १३ ६१ (A), ९० (F).

अथ सिखा छंद । (D).

ससिवअणि गअगमणि पअ पअ
दिअ छगण[१] पअहर[२] सह[३] सिक्ख ।
पढ पढम वि विहलहु[४] पअलि दिअगण
सहिअ[५] जुअल[६] दल भणइ[७] स सिक्ख ॥ १६१[८] ॥

---

मुअल—मृताः जिविअ—जीविता उट्ठए—उत्तिष्ठंति, ततश्च जीवितानामेषां चरणाघातेन पुणु धसइ—पुनरधो गच्छति मही, पुणु खसइ—पुनः स्खलति कैलासः, पुणु ललइ—पुनर्लल[य]ति स्थानच्युतो भवति शिवः, ततश्च पुण घुमइ—पुनर्घूर्णते शशी, पुण वमइ—पुनर्वमत्यमृतं, पुनश्च जिविअ—जीविता उत्थिता मृताः इति समरे विविधकौतुकं परिदिट्ठए—परिदृश्यते ॥ (E).

१६० ॥ यथा भवीति ॥ अहिर्लल[य]ति, मही चलइ[ति], गिरिः पतति, हरः स्खलति, शशी घूर्णते, अमृतं वमति, मृताः जीवंतो भवंति ॥ एवं भतीति शेषः पुन * * ति, पुनः स्खलति, पुनर्लल[य]ति, पुनः घूर्णति, पुनर्वमति, जीविता विविधाः, एवं प्रकारेण समरो दृश्यते ॥ १० ॥ (G).

---

१६१ । १ छ अब (A), चव अब (B & C), अब छ (E) २ पओहर (D). ३ ब (B & F), च ब (C, D & E). ४ बड़ विविह (D), ब dropt in (F). ५ सहिअ (B & C), सरिस (D), सरिस (E), सरिस (F). ६ जुअल (D & E). ७ भणहि (B). ८ ६१ (A), ९१ (F). Vide metre of the same name, but of a different character, in the Sanskrit treatise of Pingala. Ghosha's Compendium, pp. 26 and 56.

१६१ । अथ शिखाच्छन्दः ॥ शशिवदने गजगमने पदे पदे द्विजाः षड्गणाः पयोधरसशिखाः । पठ प्रथमं विविधलघुकं प्रकाश्य द्विजवरगणमधिकं भण शिचख ॥ द्विजः सर्व्वलघुश्चतुष्कलः, तादृशाः षड्गणाः आदौ यत्र पयोधरः जगणः, तत्र शिखा । द्वितीयदले द्विद्विलघून् पूर्व्वोक्तान् प्रकाश्य पठत, तत्र द्विजवरगणं सर्व्वलघुचतुष्कलमधिक भण, तेन द्वितीयदले सप्तद्विजवरगणा अन्तर[अन्ते] जगण इति विशेषः, एवं शिखाच्छन्दः शिचखेत्यर्थः ॥ (C).

१६१ । अथ शिखां लचयति ससिवअणीति । हे शशिवदने गजगमने पअ पअ — पदे पदे प्रतिचरणमित्यर्थः पअहरह समिक्ख — सपयोधरशिखान् पयोधरो मध्यगुरुर्जगणस्तथा च सपयोधरा सजगणः शिखा अग्रभागो येषां तादृशान् अंतस्थितजगणानित्यर्थः दिअगण क — द्विजगणान् चतुर्लघ्वात्मकगणान् षट् पढ — पठ द्वयोरपि दलयोः षड्द्विजगणानंतरं जगणं स्थापयेत्यर्थः । परंतु जुअह दल — द्वितीयदलं पढम — प्रथमम् आदौ बि बिलहू — द्वौ द्विलघू द्वौ द्विलघ्वात्मकगणावित्यर्थः पअलि — प्रकटीकृत्य अपरमेकं द्विजगणं प्रकटीकृत्येत्यर्थः, दिअगण सहिअ — जगणसहितं द्विजगणैः पूर्वोक्तप्रकारेणाग्रस्थितजगणैः षड्भिर्युक्तमिति भावः, पठ इत्यनुषंगः । प्रथमं लघुद्वयात्मकगणद्वयं संस्थाप्य अनंतरमंतस्थितजगणैः षड्द्विजगणैः सहितं द्वितीयं दलं पठेत्यर्थः, तथाच प्रथमदले अंतस्थजगणाः षडेव द्विजगणाः पतंति, द्वितीयदले तु अंत्यजगणाः सप्त द्विजगणाः पतंतीति

मत्त अठाइस[1] पढमो[2] बीए बत्तीस मत्ताइँ ।
पअ पअ अंते लहुआ सुद्धा सिक्खा विआणेहु[3] ॥१६२[4]॥

गाहू ।

भावः, सिक्ख—शिखां विद्धि इति शेषः, इति स प्रसिद्धः पिंगलः भणइ—भणति ॥ (E).

१६१ । अथ शिखा ॥ ससीति ॥ शशिवदने गजगमने पदे पदे द्विजाः षड्गणाः पयोधरसशिखाः । पठ प्रथमं द्वितीये खलु प्रपतति द्विजगणो लघुर्द्वयो युगलदलयोर्भण्यते सा शिखा ॥ सशिखाः सहिताः ॥ द्विजश्चतुर्लघुः ॥ पयोधरः ज[ज]गणः ॥ प्रथमे षड्द्विजा अंते जगणः, द्वितीये सप्त द्विजा अंते जगणः इति भावः ॥ ६१ ॥ (G).

१६२ । उक्तार्थं स्पष्टयन्नाह । मात्रा अष्टाविंशतिः प्रथमे, द्वितीये द्वावि[त्रिं]शन्मात्राः । पदे पदे जगणोऽन्तलघुकां शुद्धां जानीहि शिखाम् ॥ (C).

१६२ । अथ गाहूच्छंदसा प्रकटीकृत्य पुनः शिखां लक्षयति मत्त अठाइसेति । यत्र पढम[हि]—प्रथमे पअ—पदे मत्त अठाइस—मात्रा अष्टाविंशतिः पतंतीति शेषः, बीए—द्वितीये पअ—पदे बत्तीस—द्वात्रिंशत् मत्ताइँ—मात्राः पतंति, अंते—पादांते लहुआ—लघुः जगणस्येति भावः नियमेन पतति, तां शुद्धां शिखां विजानीत ॥ अत्र अंते लहुआ इति दलद्वयेऽप्यंते

१६२ । १ अठाइस (A) २ पढमे (A), पढमहि (E), पढम (F). ३ विआण (E). ४ ६६ (A), ६२ (F).

जहा, फुल्लिअ[1] महु[2] भमर[3] बहु[4] रअणि पहु
किरण लहु[5] अवअरु[6] बसंत ।
मलअगिरि कुहर[7] धरि पवण[8] वह
सहब[9] कह[10] सुणु[11] सहि णिअल णहि कंत ॥
१६३[12] ॥ सिक्खा । (A, B & C).

---

जगणोऽवश्यं देय इति सूचनीयं, षड्द्विजगणानां चतुर्विंशतिर्मात्रा अंत्यजगणस्य च मात्राचतुष्टयमेवमष्टाविंशतिर्मात्राः प्रथमचरणे, सप्तद्विजगणानामष्टाविंशतिर्मात्रा अंत्यजगणस्य च मात्राचतुष्टयमेवं द्वात्रिंशन्मात्रा द्वितीयचरणे पतंति यत्र, तत् शिखानामकं वृत्तमिति फलितार्थः । (E).

१६२ । तदेव गाहष्कंदस्याह ॥ मत्तेति ॥ मात्रा अष्टाविंशतिः प्रथमे, द्वितीये द्वात्रिंशन्मात्राः । पदपदयोरंते लघुः, शुद्धां शिखां विजानीत ॥ ६२ ॥ (G).

१६३ । उदाहरति ॥ फुल्लति मधुके भ्रमरा बहवः रजनिप्रभुकिरणा मलयावतीर्णो वसन्तः । मलयगिरिकुसुमं धृत्वा पवनो वहति, सोढव्यः कथं शृणु भण सखि निकटे न हि कान्तः ॥ धृत्वा गृहा । (C).

---

१६३ । १ फुल्लिच (A & F). २ मच (A). ३ भमच (E). ४ रज (D). ५ च (C), बपज (D), बज (F). ६ चचर (A), dropt in (F). ७ कुसुम (C). ८ पुवच (B). ९ Dropt in (C), सचच (F). १० कत (D). ११ सुच (A), भच (C, D & F). १२ ६५ (A), ६२ (F).

अथ मालाच्छंदः। (D).

पढम चरण ससिवअणि मिअणअणि[1] णव दिअगण[2]
पअल पुणबि तह[3] रअण[4] ठवहु[5] अंतए कण्णो।
पिंगल णाअ भणंता[6] माला सेसम्मि[7] गाहस्स[8] ॥१६४[9]॥

१६३। अथ शिखामुदाहरति फुल्लिअ इति। भमर बहु—बहुभ्रमराः मऊ—मधूका मधूकवृक्षाः फुल्लिअ—पुष्पिताः, रअणि पहु—रजनीप्रभुश्चंद्रः किरण लहु—लघुकिरणः, वसंतः अवअरु—अवतीर्णः। मलयगिरिगह्वरं धृत्वा स्पृशति यावत् पवण वह—[पवनः] वहति, सहब कह—सहिष्ये कथं शृणु सखि निकटे नास्ति कांतः॥ (E).

१६३॥ यथा फुल्लेति॥ पुष्पितो मधूको भ्रमरा बहवो रजनीपतेः किरणा बहव आयातोऽन्यद्वसंतः। मलयगिरिकुहरं धृत्वा पवनो वहति, सोढव्यं कथं भण सखि निकटे नास्ति कांतः॥६३॥ इति शिखा॥ (G).

१६४। अथ मालाच्छन्दः॥ प्रथमचरणे शशिवदने मृगनयने नव द्विजगणाः प्रकटाः, पुनरपि तथा रगणः स्थाप्यतामन्ते कर्णः। पिङ्गलनागो भणति मालां शेषमपि गाथायाः॥ सर्व्वलघुचतुष्कलनवगणानन्तरं रगणस्ततः कर्णो गुरुयुगमेवं पञ्चचत्वारिंशन्मात्रः प्रथमः पादः, गाथाशेषार्द्धं शेष इत्यर्थः। (C).

१६४। १ मअणमणि (A). २ दिअगण (F). ३ गअ (A), पुण (B), तहव (C). ४ रअ (C). ५ ठव (E), ठवणि (F). ६ भणला (D). ७ सेसंपि (D), सेसंपि (F). ८ गाहअ (A), गाहस्स (F). ९ ६९ (A), ६० (F).

पढम होइ णव विप्पगण ओहल[1] कस ठवेहु ।
गाहा[2] अद्धा अंत दइ[3] माला छंद कहेहु[4] ॥ १६५[5] ॥
दोहा ।

---

१६४ । अथ मालावृत्तं लक्षयति पढमेति । हे शशिवदने मृगनयने यत्र पढम चरण—प्रथमचरणे णव दिअगण—नव द्विजगणाः नव चतुर्लघ्वा[घ्वा]त्मका गणाः पअल—पतंति, पुणवि—पुनरपि नवद्विजगणानंतरमित्यर्थः तह—तथा रअण ठव—रगणं मध्यलघुगणं स्थापय, अंतए—अंते रगणांते पादांते वा कण्णो—कर्णो गुरुद्वयात्मको गणः पतति इति शेषः, ततः गाहस्स—गाथायाः सेसम्मि—शेष उत्तरार्द्धमिति यावत् पततीत्यनुषंगः, सा माला हि—तन्मालानामकं वृत्तमिति पिंगल णाअ—पिंगलनागः भणंता भणति ॥ (E).

१६४ । अथ मालामाह ॥ पढमेति ॥ प्रथमे चरणे शशिवदने मृगनयने नव द्विजाः पतंति, पुनरपि ततो रगणः स्थाप्योऽंते कर्णः । पिंगलनागो भणति मालां शेषं विगाथायाः ॥ द्विजश्चतुर्लघुः, द्वितीये सप्तविंशतिर्मात्रा इत्यर्थः ॥ ५४ ॥ (G).

१६५ । अमुमेवार्थं स्पष्टयति । प्रथमतो भवन्ति नव विप्रगणाः ओहलकर्णं स्थापय । गाथाया अर्द्धमन्त्यपदं मालाच्छन्दो जानीहि ॥ ओहलो रगणः । (C).

---

१६५ । १ ओहलु (B & C). २ गाह (A). ३ देइ (A & E), देखा (F). ४ करेहु (A). ५ ६० (A), ६५ (F).

जहा,

बरिस जल भमइ घण गअण सिअल[1] पवण मणहरण
कणअ पिअरि णचइ[2] बिजुरि[3] फुल्लिआ णीवा[4]।
पत्थर[5] वित्थर[6] हिअला[7] पिअला[8] णिअलं[9] ण आवेइ[10] ॥
१६६[11] ॥ माला (A, B & C).

---

१६५। अथ दोहावृत्तेन स्पष्टीकृत्य पुनर्मालां लक्षयति पढमेति। पढम — प्रथमे चरणे णव विप्पगण — नव विप्रगणाश्चतुर्लघ्वात्मकगणाः होइ — भवंति, ततश्च जोहलु कण — योद्धकर्णौ रगणगुरुद्वयात्मकगणौ ठवेहु — स्थापयत। ततः गाहा — गाथायाः अंत — अंत्यम् अद्धा — अर्द्धम् उत्तरार्द्धमित्यर्थः देइ — दत्त्वा, मालाच्छंदः कहेहु — कथयत ॥ अत्र देइ इत्येकारो ह्रस्वो ज्ञेयः। यत्र प्रथमचरणे नवचतुर्लघ्वात्मकगण-रगण-गुरुद्वयात्मकगणाः पतंति द्वितीयदलं च गाथोत्तरार्द्धस्वरूपं भवति, तन्मालानामकं वृत्तमिति फलितार्थः। (E).

१६५। पढेति॥ प्रथमं भवंति नवविप्रगणा जोहलकर्णं स्थापय। गाथार्द्धमंतिमे मालाच्छंदः कथ्यताम् ॥ जोहलो रगणः, कर्णो द्विगुरुः ॥ ६५ ॥ (G).

१६६। १ सअल (A, B & C). २ णचइ (A). ३ विजुरी (F). ४ णीवा (F). ५ पत्थर (A). ६ वित्थर (A). ७ हिअआ (B & C), हिअआ (E). ८ पिअआ (C & F). ९ णिअलं (B & C), णिअला (D & F). १० आवेइ (A & E). ११ ६८ (A). ६६ (F).

अथ चुलिआला छंद । (D).

चुलिआला जइ देइ[1] किमु[2]
दोहा उप्पर[3] मत्तइ[4] पंचइ ।
पअ पअ उप्पर संठवहु
सुद्ध कुसुमगण अंतहि[5] दिज्जइ[6] ॥ १६७[7] ॥

१६६ । उदाहरति । वर्षति जलं भ्रमति घनः गगने, मलयपवनो मनोहरणः, कनकपीता नृत्यति विद्युत्, फुल्लिता नीपाः । प्रस्तरविस्तारहृदयः प्रियो निकटं नायाति ॥ प्रस्तरविस्तार इति काठिन्यद्योतनार्थम् । (C).

१६६ । मालामुदाहरति बरिसेति । घण — घनः मेघः गअण — गगने भमइ — भ्रमति, जल — जलं बरिस — वर्षति, मणहरण — मनोहरः सिअल — शीतलः पवण — पवनः वातः वातीति शेषः, कणअ पिअरि — कनकपीता विजुरि — विद्युत् णच्चइ — नृत्यति, णीवा — नीपाः कदम्बाः फुल्लिआ — पुष्पिताः । पत्थर वित्थर हिअआ — प्रस्तरविस्तीर्णहृदयः पिअआ — प्रियः णिअलं — निकटे ण आवेइ — नायाति ॥ (E).

१६६ । यथा ॥ बरीति ॥ वर्षति जलं भ्रमति घनो गगने, शीतलः पवनो मनोहरः, कनकपीता नृत्यति विद्युत्, पुष्पिता नीपाः । प्रस्तरविस्तृतहृदयः प्रियो निकटे नायाति ॥ ६६ ॥ इति माला ॥ (G).

१७० । १ देहि (B & C). २ किम (A), किम (B & C) ३ उप्परि (A). ४ मत्तहि (E & F). ५ अमत (A), अन्नत (B), अंतहि (C & F). ६ दिज्जइ (A). दिज्जइ (B). पअहि (C). ७ ६८ (A). ६० (F).

१६७ । चूलिकाला यदि ददासि किमु दोहोपरि [मात्राः] पञ्च । पदे पदेऽन्ते संस्थापय शुद्धं कुसुमगणमन्तेऽपि ॥ संपूर्णदोहा-नन्तरं मात्रापञ्चकमिति । इयं हि द्विपदी, तत्र दोहापूर्व्वार्द्धा-नन्तरं मात्रापञ्चकदाने एकः पादः, एवं द्वितीयेऽपि पञ्चकलः । कीदृश इत्यत्राह कुसुमगण इति । लघ्वादिलघुद्वयान्तो गुरु-रित्यर्थः । (C).

१६७ । अथ चुलिआलानामकं वृत्तं लक्षयति, चुलिआलेति । दोहा उप्पर—दोहोपरि दोहायामिति यावत् मत्तहि पंचह—मात्राः पंच यदि देह—दीयते, तदा चुलिआला कह [?]—चुलि-आलां कथय । नच[नु] दोहायां किं प्रतिचरणे उत प्रतिदले वा क देयाः पंचमात्रा इत्यत आह, पअ पअ उप्परेति,—पद-पदोपरि, अत्र पदशब्दो दलवाची उदाहरणानुरोधात्, तथाच एकैकदले इत्यर्थः, संठवहु—संस्थापयत पंचमात्रा इत्यनुषंगः । ननु सर्वलघुरूपा उत गुरुलघुरूपा चेति कीदृश्य एकैकदलेऽन्ते आदौ वा स्थाप्या इत्यत आह, सुद्धेति,—शुद्धः कुसुमगण आदौ एको लघुस्तत एको गुरुस्ततो लघुद्वयमेतादृशो गण इत्यर्थः । अंतह—अंते दिज्जइ—दीयते ॥ एवं च दोहाया एकदलांते यदि पंचमात्राः कुसुमगणस्वरूपा दीयंते, तदा चुलिआलानामकं वृत्तं भवतीति फलितार्थः । (E).

१६७ । अथ चूलिका ॥ चुलीति ॥ चुलिआला [?] यदि दीयते किं दोहाया उपरि मात्राः पंच । पदे पदे उपरि संस्थापय शुद्धं कुसुमगण[?]मंते दीयते ॥ एकोनचिंशन्मात्राः पदे पदे कार्यास्तत्राद्ये

दोहा संखा[1] संठवहु उप्परि[2] पंचइ[3] मत्त ।
अट्ठदहुप्परि[4] बीसदुइ[5] चुलिआला उक्खित्त[6] ॥ १६८[7] ॥
दोहा ।

---

अंतिमाः पंचमात्राः कुसुमगणरूपा इति ॥ कुसुमं लघुगुरुद्विलघुरूपं ।ऽ॥ बोध्यम् ॥ ६७ ॥ (G).

१६८ । उक्तार्थं स्पष्टयति । दोहासंख्यां [संस्था]पय उपरि पञ्चकमात्राः । अष्टादशोपरि विंशतिद्वयं चुलिआला उत्क्षिप्ता ॥ दोहासंख्या दोहार्द्धमात्रासंख्या, तथाच दोहार्द्धे चतुर्विंशतिमात्रास्तत्र मात्रापञ्चकदाने ऊनत्रिंशन्मात्रा भवन्ति, एतद्द्विगुणे अष्टपञ्चाशन्मात्रा भवन्ति । एतदेवोत्तरार्द्धेनाह । उत्क्षिप्ता उत्थिता । (C).

१६८ । अथैनमेवार्थं दोहावृत्तेन पुनराह, दोहालक्खणेति । आदौ दोहालक्खण — दोहालक्षणम् उप्परि — उपरि तदनंतरमित्यर्थः पंचइ मत्त — पंचैव मात्राः संठवऊ — [सं]स्थापयत, एवं अट्ठदऊप्परि बीसदुइ — अष्टादशोपरि विंशतिद्वयेन मात्राणामिति शेषः, अष्टपंचाशन्मात्राभिरित्यर्थः, चुलिआला उक्खित्त — उक्ता ।

---

१६८ । १ संक्खा (C), लक्खण (E). २ उप्पर (A, B & C). ३ पंचइ (C). ४ अट्ठदऊपरि (A), अट्ठइ उप्परि (C), अट्ठदुऊप्परि (D). ५ बीसदइ (B), विसदुइ (C). ६ उक्खिट्ठ (A), उक्खित्तु (B). ७ १० (A), १८ (F).

जहा, राआ लुद्ध[1] समाज खल[2]
बहु कलहारिणी[णि][3] सेवक धुत्तउ ।
जीवण[4] चाहसि सुक्ख जइ[5]
परिहर[6] घर जइ[7] बहुगुणजुत्तउ ॥ १६६[8] ॥
चुलिआला । (A, B & C).

---

क्वचिद्दोहासंखा संठवहु इति पाठस्तत्र आदौ दोहासंखा — दोहासंख्यां दोहामात्रासंख्याकमात्रामिति यावत् इति व्याख्येयम् । (E).

१६८ । दोहेति ॥ दोहासंख्यां स्थापयोपरि पंचमात्राः । अष्टादशोपरि विंशतिद्वयं चुलिआलायां व्याख्यातम् ॥ अष्टपंचाशन्मात्राः कार्या इत्यर्थः ॥ ६८ ॥ (G).

१६९ । उदाहरति । राजा लुब्धः, समाजः खलः, वधूः कलहकारिणी, सेवको धूर्त्तः । जीवने चाहसि [?] सुखं यदि, परिहर गृहं यदि बहुगुणयुक्तम् ॥ वधूः स्त्री, परिहर त्यज, बहुतरानर्थसम्भवादित्यर्थः । (C).

१६९ । चुलिआलामुदाहरति राआ लुद्धेति । राजा लुब्धः, समाजः खलः, वधूः कलहकारिणी, सेवको धूर्त्तः । अतः जइ — यदि बहुगुणजुत्तउ — बहुगुणयुक्तमपि बहुभिः कीर्त्तिप्रतिष्ठा-

---

१६९ । १ लुद्ध (F). २ ल dropt in (A). ३ कारिणाणि (A, D & E). ४ जिवण (A). ५ जउ (A), इह (B), चाहइ (F). ६ परिहरु (E & F). ७ बहु रहं (D). ८ ६१ (A), ९९ (F).

## अथ सोरट्ठा छंद । (D).

सो सोरट्ठउ[1] जाण[2] जं[3] दोहा बिबरीअ[4] ठिअ[5] ।
पअ पअ जमक[6] बखाण णाअराअ पिंगल[7] कहिअ[8] ॥ १७०[9] ॥

---

प्रमुखैर्गुणैः वञ्चितमपीत्यर्थः जीवंतः[वन्] अथच सुखं वाञ्छसि—वांछसि, तह—तदा घर—गृहं परिहर—त्यजेत्यर्थः ॥ (E).

१६९ । यथा ॥ राआ इति ॥ राजा लुब्धः, समाजः खलः, वधूः कलहकारिणी, से[व]को धूर्त्तः । जीवनं वांछसि सुखं च यदि, परिहर गृहं, तर्हि बहुगुणयुक्तः ॥ ६९ ॥ (G).

१७० । अथ सौराष्ट्रम् । तत् सौराष्ट्रं जानीहि यद्दोहाविपरीतं स्थितं । पदे पदे यमकं नागराजपिंगलेन कथितम् ॥ प्रथमतृतीयपादयोरेकादशमात्रात्वं, द्वितीयचतुर्थयोस्त्रयोदशमात्रात्वमिति दोहावैपरीत्यं, पदे पदे इति प्रथमतृतीयपादयोरन्ते द्वितीयचतुर्थयोरन्ते च, यमकमनुप्रासं व्याचष्ट कथय कुर्व्विति यावत् । (C).

१७० । अथ सौराष्ट्रनामकं वृत्तं लक्षयति सो सोरट्ठ इति । जं—यत् दोहा बिबरीअ ठिअ—दोहाविपरीतस्थिति दोहातो

---

१७० । १ सोरट्ठउ (A). २ जाणु (E). ३ जह (A). ४ बिबरिअ (A), बिपरिअ (B), बिपरीआ (C), बिररो (E). ५ Non est (C), ठिअ (E), ठिअ (F). ६ जमअ (D). ७ पिंगलु (D), पिंग (E). ८ कहइ (D & F), कुणइ (E). ९ ६२ (A), ७० (F).

जहा,

सो माणिअ पुणवंत[1] जासु भत्त पंडिअ तणअ ।
जासु घरिणि[2] गुणवंति[3] सो[4] वि[5] पुहवि सग्गह[6] णिलअ ॥
१७१[7] ॥ सोरट्ठा । (A, B & C).

---

विपरीता स्थितिश्चरणानां स्थापनं यस्य तादृशमित्यर्थः, सो — तत् सोरट्ठउ — सौराष्ट्रं सौराष्ट्रनामकं वृत्तं जाणु — जानीहि, तच्च पअ पअ — पादे पादे प्रतिचरणमित्यर्थः जमक बखाण — यमकं आचक्ष्व इति णाअराअ पिंगल — नागराजपिंगलः भणइ — भणति ॥ अयं भावः — दोहायाः प्रथमतृतीयचरणयोस्त्रयोदशमात्राः द्वितीयचतुर्थयोश्चैकादशमात्रा देया इति दोहालक्षणेनोक्तं, तद्वैपरीत्येनात्र द्वितीयचतुर्थचरणयोस्त्रयोदशमात्राः प्रथमतृतीययोश्चैकादशमात्रा देया इति । (E).

१७० । सो इति ॥ तत्सौराष्ट्रं जानीहि यद्विपरीतं दोहास्थिति । पदे पदे यमकं व्याख्याहि नागराजः पिंगलः कथयति ॥ यमकमनुप्रासः ॥ विपरीतेति ॥ एकादश त्रयोदशेति भावः ॥ ७० ॥ (G).

१७१ । उदाहरति । स मन्यते पुण्यवान् यस्य भक्तः पण्डितस्तनयः । यस्य गृहिणी गुणवती तस्य पृथिवी स्वर्गनिलयः ॥ (C).

---

१७१ । १ पुणवंत (A), पुणमन्ति (B), पुनमंत (C & E). २ घरणि (E & F). ३ गुणमन्ति (B), गुणवन्त (C), गुणमति (D), गुनमंत (F). ४ से (E & F). ५ विअ (F). ६ सम्ग (C & F). ७ ६९ (A). ७१ (F).

## अथ हाकलि छंद। (D).

सगणा भगणा दिअगण ई[1] मत्त चउद्दह[2] पअ पलई[3]।
संठइ[4] बंको बिरइ[5] तहा[6] हाकलि[7] रूअउ[8] एम[9] कहा॥
१७२[10]॥

---

१७१। अथ सौराष्ट्रमुदाहरति सो माणिअ इति। स मान्यः पुण्यः गुणवंत—गुणवान् यस्य भक्तः पंडित[सु]तनयः, यस्य ग्टहिणी गुणवती, से वि—सोऽपि पुहवि—पृथ्वी सग्गह णिलअ—स्वर्गनिलयः स्वर्गवास इत्यर्थः॥ (E).

१७१। सो माणीति॥ स मान्यः पुण्यवान् यस्य भक्तः पंडितसुतनयः। यस्य ग्टहिणी गुणवती तस्यैव पृथिव्यां स्वर्गनिलयः॥ [स्वर्गे] निवासः॥ ७१॥ सौराष्ट्रम्॥ (G).

१७२। अथ हाकलीच्छन्दः। सगण-भगण-द्विजगणा मात्राश्चतुर्दश पदे पतन्ति। संस्थाप्य विरतौ वक्रं तथा हाकलीरूपम् एतत् कथितम्॥ अर्थात् पिङ्गलेन। अयमर्थः। सगण-भगण-द्विजगणाः स्थाप्याः, नत्वेषां स्थाने नियमः, किन्तु पदानामन्तगुरुत्वं नियतं, सगणद्वयान्ते भगणद्वयान्ते द्विजगणास्ततो गुरुरेवं क्रमेण एकादशाक्षराणि भवन्ति। यदि द्विजगणं विहाय सगणभगणाभ्यां यथेच्छं गणद्वयं कृत्वाप्यन्ते गुरुर्दीयते तदा

---

१७२। १ भामस अ दिअगणइ (D). २ चउदह (D). ३ पलइ (B & D). ४ संठ (C). ५ विरई वङ्क (B & C), बंका बंत (F). ६ जहा (D). ७ हाकलिअ (B). ८ रूअउ (E & F). ९ एङ्ग (D). १० ९४ (A), ७१ (F).

दृशाक्षराणि भवन्ति, किन्त्वन्तिमगुरोः पूर्व्वं सगणो न देय इति सम्प्रदायः । (C).

१७२ । अथ शाकलीनामकं वृत्तं लक्षयति सगणेति । जहा — यत्र सगणा — सगणो गुर्वन्तश्चतुष्कल इत्यर्थः, भगणा — भगणो गुर्वादिश्चतुष्कल इत्यर्थः, दिअगण — द्विजगणश्चतुर्लघ्वात्मको गण इत्यर्थः, ई — एते गणा इत्यर्थः, अथच मत्त चउद्दह — मात्राश्चतुर्दश पञ्च पलई — पादे पतन्ति पादान्ते चेति शेषः, वंको — वक्रमेकं गुरुं संठइ — संस्थाप्य, विरइ — विरतिर्भवति, अन्तिमगुरोः प्रागेव विरतिरित्यर्थः । एअ — एतत् शाकलिरूअह — शाकलीरूपं शाकलिनामकवृत्तस्य स्वरूपमित्यर्थः कहा — कथितम् । अत्र सगण-भगण-द्विजगणातिरिक्तो गणो [न] भवतीति, एते एव च स[म]स्ता व्यस्ता वा पतन्तीति नियमस्तथाच यदि सगणत्रयानन्तरं भगणत्रयानन्तरं द्विजगणत्रयानन्तरं वा एको गुरुः स्थाप्यते प्रतिचरणं, तथापि शाकलीवृत्तं भवति । अथ एकस्मिंश्चरणे सगणत्रयानन्तरमेकं गुरुं · [सं]स्थाप्य तदितरचरणेषु भगणत्रयानन्तरं द्विजगणत्रयानन्तरं परस्परसंसृष्टैतद्द्वयानन्तरं वा गुरुः स्थाप्यते, तदाप्येतद्वृत्तं भवति । अथ एकस्मिंश्चरणे भगणत्रयानन्तरं द्विजगणत्रयानन्तरं वा एकं गुरुं संस्थाप्य तदितरेषु परस्परसंसृष्टैतत्त्रयानन्तरं गुरुः स्थाप्यते तथाप्येतद्वृत्तं भवतीति न विभावनीयम् । (E).

१७२ । सगणो भगणो द्विजगणो मात्राश्चतुर्दश पदे पतन्ति । संस्थापय वक्रमन्ते तथा शाकलिरूपमेवं कथय ॥ वक्रो गुरुः ॥ ७२ ॥ (G).

मत्त चउद्दह पढम दल[1] एआरह[2] वसेहि[3] ।
दह अक्खर उत्तर दलहि[4] हाकलि[5]छंद[6] कहेहि ॥*
१७३[7] ॥ दोहा ।

१७३ । मात्राश्चतुर्दश पदे पदे पतन्ति, एकादशवर्णैः । दशा-क्षराण्युत्तरदले हाकलिच्छन्दः कथय ॥ (C).

१७३ । अथ नियमांतरमंगीकृत्य पुनर्हाकलीवृत्तं लक्षयति, मत्त चउद्दहेति । पढम दल—प्रथमदले पूर्वार्द्धे इति यावत् प्रतिचरणमिति शेषः, क्वचित्तु पअह पअ इति पाठस्तत्र पादे पादे अर्थात्पूर्वार्द्धस्य, उत्तरदले इत्यग्रे उक्तत्वादिति बोध्यम्, एग्गारह वसेहि—एकादशवर्णैः कृत्वा मत्त चउद्दह—मात्राश्चतुर्दश, उत्तर दलहि—उत्तरदले उत्तरार्द्धे इत्यर्थः प्रतिचरणम् इत्यनुषंगः, दह अक्खर—दशाक्षरैश्चतुर्दशमात्राः इत्यनुषंगः यत्र पतंतीति शेषः, तत् हाकलि छंद कहेहि—हाकलीनामकं छंदः कथय ॥ अत्र च प्रथमद्वितीयचरणयोर्द्विजगणैर्देय एव, अन्यथा एकादशाक्षरोत्पसंभवापत्तिः । तृतीयचतुर्थयोश्च द्विजगणेनैव देयः अन्यथा दशाक्षरोत्पसंभवापत्तिः, इति नियमे तात्पर्यमुन्नीयते । तथाहि क्रमेण विपर्ययेण वा सगण-भगणौ अथवा सगणद्वयमेव

१७३ । १ पढम प्रथ (C), पअ पअहि (F). २ इग्गारह (C), एगारह (D), एग्गारह (E). ३ वसेति (E). ४ दलह (B & C). ५ हाकि (C), हाकलि (F). ६ छन्द (B & C), छंदु (E). * This śloka is not found in (A). ७ ७१ (F).

जहा,

उच्चउ छाअण[1] बिमल घरा[2] तरुणी घरिणी[3] बिणअपरा[4]।
वित्तक पूरल[5] मुद्दहरा[6] वरिसा[7] समआ सुक्खकरा ॥
१७४[8] ॥ हाकलि। (A, B, C & F.)

---

भगणद्वयमेव वा [सं]स्थाप्य यदि द्विजगणो दीयते अंते च गुरुर्दीयते, तदैवाक्षरषट्कं सगणभगणयोरक्षरचतुष्टयं च द्विजग[ण]स्य एकमक्षरं च गुरोरेवमेकादशाक्षराणि पूर्वार्द्धे प्रतिचरणं पतंति, उत्तरार्द्धेऽपि चेदेवं द्विजगणः स्थाप्यते तत्राप्येकादशाक्षराणि स्युः, तस्मादुत्तरार्द्धे सगणत्रयोत्तरं भगणत्रयानंतरं वा परस्परसंसृष्टैतत्त्रयानंतरं वा गुरुः प्रतिचरणं स्थाप्यते तदैवोत्तरार्द्धे दशाक्षराणि पतंति, एवं च प्रथम-द्वितीयचरणयोर्द्विजगणदानमंगीकृतपूर्वं लक्षणकृता,**तदनंगीकारेण चैतल्लक्षणमित्यसन्तातचरणोपदिष्टः पंथाः सुधीभिर्विभाव्यः। (E).

१७३। मत्तेति ॥ मात्राश्चतुर्दश पदे पदे एकादशवर्णाः। दशा-क्षराण्युत्तरदले हाकलिच्छंदः कथय ॥ ७३ ॥ (G).

१७४। उदाहरति। उच्चोठानकं विमलं गृहं, तरुणी गृहिणी विनयपरा। वित्तेन पूर्णं मुद्राग्रहं, वर्षासमयः सुखकरः ॥ ठाण-शब्दोऽङ्गनवाची, मुद्राग्रहं कोषागारम्। अत्र च यदि तदेत्यध्या-हार्य्यम्। (C).

---

१७४। १ उच्चउ छावण (A), उच्च उठावण (C), उच्चउ च्छावणि (D & F). २ घरा (A). ३ घरणी (A), घवणी (F). ४ बिणयकरा (B & C). ५ पूरल (B & C). ६ मुदंघरा (D), मुद्दघरा (F). ७ बरिखा (A), बरीसा (D). ८ १५ (A), ७१ (F).

## अथ मधुभारच्छंदः । (D).

जसु पलइ[1] सेक्ख[2] पअहरह[3] एक्क[4] ।
चउमत्त[5] बेवि[6] महुभार[7] एवि[8] ॥ १७५[9] ॥

---

१७४ । अथोत्तरलक्षणाभिप्रायेण छाकलीमुदाहरति उच्चेति । यस्य उत्तमाच्छादितं विमलं गृहं, तरुणी विनयपरा गृहिणी कांता, वित्तपूर्णं मुद्रागृहं के[को]ग्रभांडमित्यर्थः, तस्य वर्षासमयः सुखकरः ॥ (E).

१७४ । यथा ॥ उच्चेति ॥ उच्चमाच्छादनं विमलगृहं, तरुणी गृहिणी विनयपरा । वित्तपूर्णं कोशगृहं, वर्षासमयः सौख्यकरः ॥ तस्येति शेषः ॥ ७४ ॥ छाकलीति ॥ (G).

१७५ । अथ मधुभारच्छन्दः ॥ यस्य पतति शेषे पयोधर[एकः]। चातुर्मात्रिकौ द्वौ मधुभार एवं ॥ एकचातुर्मात्रिकानन्तरं पयोधरो जगणः मिलिता द्वौ चातुर्मात्रिकौ । (C).

१७५ । अथ मधुभारनामकं वृत्तं लक्षयति जसु पलईति । जसु—यस्य चरणे इति शेषः चउमत्त बेवि—चातुर्मात्रिकौ द्वौ पततः, सेख—शेषे पादांते इत्यर्थः एक्क—एकः चातुर्मात्रिक-इत्यर्थः [पल]इ—पतति, कर्त्तव्ययोर्द्वयोश्चतुर्मात्रिकयोश्चांतिम-

---

१७५ । १ पलई (F). २ सेख (A & E), सेह (F). ३ पअहरह (B & C), पअहरअ (E), पओहर (F). ४ एक (F). ५ चामत्त (D), चोमत्त (F). ६ बेधि (A), बेव (D), बीव (F). ७ मऊहार (B & C), मधुभार (E). ८ चावि (D), चवि (F). ९ ११ (A), ७५ (F).

जहा, जसु चंद[1] सीस पिंधणइ[2] दीस ।

सो संभु एउ[3] तुह[4] सुभ्भ[5] देउ ॥ १७६[6] ॥

मधुभार[7] । (A & F).

अथाभीरच्छंदः । (D).

गारह[1] मत्त करीज अंत पओहर दीज ।

एहु[2] सुछंद[3] अहीर[4] जंपइ[5] पिंगल धीर[6] ॥ १७७[7] ॥

---

चतुर्मात्रिको जगणस्वरूप एव पततीत्यर्थः, एवि—एतत्, मधुभारनामकमेतद्वृत्तमित्यर्थः । (E).

१७५ । जसु इति ॥ यस्य पतति ग्रंथे पयोधर एकः । चतुर्मात्रास्त्रयो मधुभारमेतत् ॥ ग्रंथे अर्द्धांते ॥ ७५ ॥ (G).

१७६ । उदाहरति । यस्य चन्द्रः शीर्षे परिधानं दिशः । स शम्भुदेवः तुभ्यं सुखं ददातु ॥ (C).

१७६ । मधुभारमुदाहरति । जस्विति । यस्य शीर्षे चंद्रः पिंधनं दिक् । स देवः, शम्भुः मह्यं सुखं ददातु ॥ (E).

१७६ । यथा जसु इति ॥ यस्य चंद्रः शीर्षे वस्त्रं दिशः । स शंभुरयं युष्माकं शुभं ददातु ॥ ७६ ॥ इति मधुभारम् ॥ (G).

---

१७६ । १ चंदु (A). २ पीन्धण (B), पिन्धण (C), पिंधण (F). ३ देउ (B & C). ४ तुह्ह (A), तुम्ह (D), मज्झ (E). ५ सुक्ख (A & E), सुभ्भ (B & C), सुभ (F). ६ ९० (A), ७६ (F). ७ मधुभार (B), मधुभार (C).

१७७ । १ एगारह (B), एग्गारह (C). २ एह (F). ३ सुच्छन्द (C), सुछंदु (E). ४ अहीर (B & C), अहिर (E). ५ जम्पइ (B), जम्पइ (C). ६ धीर (A & D), धीर (B), धीर (C). ७ ९८ (A), ७७ (F).

जहा, सुंदरि गुज्जरि[१] णारि[२] लोअण दीह बिसारि[३] ।
पीण पओहर भार लोलइ[४] मोत्तिअ[५]हार ॥
१७८[६] ॥ अहीर । (A).



१७७ । अथाभीरच्छन्दः ॥ एकादशमात्राः क्रियन्ते अन्ते पयोधरो दीयते । एतच्छन्दः अभीरं जल्पति पिंगलधीरः ॥ पयोधरी जगणः, स चैकादशमात्रान्तःपाती, प्राथमिकमात्रासप्तकन्तु यथेच्छं, न तु सूत्रोदाहरणाद्भवति । आभीरनामकं छंद् इति केचित् । (C).

१७७ । अथाभीरनामकं वृत्तं लक्षयति गारहेति । यत्र गारह मत्त—एकादशमात्राः क्रियंते, पयोधरः दीयते, कर्त्तव्यास्वेकादशमात्रासु अंतिममात्राचतुष्टयं जगणस्वरूपमेव स्थाप्यते इत्यर्थः, [एऊ]—एतत् आभीर सुछंदु—आभीरः सुच्छंदः इति पिंगलधीरः जल्पति ॥ (E).

१७७ । गारेति । एकादशमात्राः क्रियंते अंते पयोधरो दीयते । एतत् सुच्छंदः अभीरं जल्पति पिंगलो धीरः ॥ एकादशमात्रामध्ये अंते मात्राचतुष्टयं जगणरूपं कार्यमित्यर्थः ॥ ७७ ॥ (G).

१७८ । उदाहरति । सुन्दरी गुज्जरी नारी, लोचनं दीर्घविशारि । पीनपयोधरभारे लोलते मौक्तिकहारः ॥ (C).

१७८ । आभीरमुदाहरति । यस्याः पीनपयोधरभारे मौक्तिकः

१७८ । १ गुज्जर (F). २ Dropt in (F). ३ विसारि (B). ४ लूलइ (A), लोडइ (E), लोलिअ (F). ५ मोत्तिम (B & C), मोत्तिअ (D). ६ १९ (A), ७८ (F).

अथ दण्डकलच्छंदः । (D).

कुंत[1] अरु[2] धणुद्धरु[3] हअवर[4] गअवरु
छक्कलु[5] बिबि[6] पाइक्क दले·
बत्तीसह[7] मत्तह[8] पअ[9] सुपसिद्धउ[10]
जाणह[11] बुहअण हिअअअतले[12] ।
सउबीस अठग्गल[13] कल संपुणउ
रूअउ[14] फणि[15] भासिअ भुअणे
दंडअल णिरुत्तउ गुरु संजुत्तउ[16]
पिंगलिअं[17] जंपंत[18] मणे ॥ १७९[19] ॥

हार: लोटइ—लुठति, दीर्घविशाललोचना सा सुंदरी गुर्ज[री] नारी ॥ (E).

१७८ । सुंदेति ॥ सुंदरी गुर्जरी नारी लोचने दीर्घे विशाले । पीनः पयोधरभारो लोलते मौक्तिकहारः ॥ ७८ ॥

इत्यधौ[भौ]रम् ॥ (G).

१७९ । १ ता कुंत (A), कणु (B). २ Dropt in (A), अर (B & C), अव (E). ३ धणुहर (A & C). ४ हअवर (A). ५ छक्कउ (A, B, C & D). ६ वेवि (B & C). ७ बत्तीस (A, B, E & F). ८ मत्त (A & B), मत्तउ (F). ९ पअ पअ (A & B). १० सुपसिद्धउ (D). ११ जाणउ (B & C). १२ हिअअअरए (A & C), हिअअअतरे (B), हिअअअअले (F). १३ अठग्गल (A, B & C), विरहग्गल (D), अट्ठग्गल (F). १४ रूअउ (A & E), अअउ (D). रुअउ (F). १५ भणि (B). १६ संजुत्तउ (F). १७ पिंगलेण (A), पिंगलअं (D), पिंगलेणा (E), पिंगल (F). १८ जम्पत (B), पभण (F). १९ ७० (A), ७९ (F).

१७८। अथ दण्डकलच्छन्दः। कुन्तधरो धनुर्द्धरो हयवरः गजवरः षट्पदोऽपि द्वौ दले, द्वात्रिंशन्मात्रिकं पदं सुप्रसिद्धं आनीहि बुधजनहृदयहरं। शतविंशतिकपदाधिककलासंपूर्णं रूपकं फणिभाषितं भुवने दण्डकलं निरुक्तं गुरुसंयुक्तं पैङ्गलिका जपत मनसा॥ कुन्तधरादयश्चत्वारश्चतुष्कलवाचकाः, तेनादौ चतुष्कल-गणाः, षट्पदः षट्कलगणः, दले चरणे, पदम् अष्टकलं द्वात्रिंश-न्मात्रोऽत्र पादस्तस्य चतुर्थांशः पदं तेनाष्टौ मात्रा लभ्यन्ते, तेनाष्टाविंशत्यधिकशतकलासम्पूर्णमित्यर्थः। अन्ते गुरुसंयुक्तं, पैङ्ग-लिकाः पिङ्गलाध्ययनवन्तः। (C).

१७८। अथ दंडकलं लक्षयति कुंतहर इति। कुंतधरः धनुर्द्धरः हयवरः गजवरः एतच्चतुष्कलचतुष्टयं, ततः छक्कलु— षट्कलः, ततश्च गुरुसंजुत्तउ—गुरुसंयुक्तम् अंतस्थितैकगुरुकमित्यर्थः, बिबि पाइक—पदातिद्वयं चतुष्कलद्वयमित्यर्थः, एवं दले—पूर्वार्द्धे उत्तरार्द्धे चेत्यर्थः, बत्तीस मत्तह—द्वात्रिंशन्मात्राः पअ—पादे पतंति प्रत्येकमिति शेषः, संपुल[उ]—चरणचतुष्टयस्या इत्यर्थः, बीस अठग्गलु[ल]—अष्टाविंशत्यधिकाः सउकल—शतं कला भवंति, तत् सुपसिद्धउ—सुप्रसिद्धं फणि भासिअ रूअउ—फणिभाषितरूपं, भुअणे—भुवने दंडकल णिरुत्तउ—दंडकलः निरुक्तः इति पैंगलिका मनसि जल्पंति हे बुधजनाः यूयं हिअअतले—हृदय-तले आणउ[ह]—आनीत॥ यत्र प्रथमं चतुष्कलचतुष्टयं तत एकः षट्कलः ततश्च पुनश्चतुष्कलद्वयं तत एको गुरुः प्रतिचरणं पतति, तद्दंडकलनामकं वृत्तमिति फलितार्थः। (E).

जहा, राअह[1] भग्गंता[2] दिग[3] लग्गंता[4]
परिहरि हअ गअ[5] घर[6] घरिणी
लोरहि[7] भरु सरवरु[8] पअ परु[9] परिकरु[10]
लोट्टइ पिट्टइ[11] तणु[12] धरणी ।
पुणु[13] उट्ठइ[14] संभलि कर[15] दंतंगुलि[16]
बाल[17] तणअ कर जमलकरे[18]
कासीसर[19] राआ णेहलु[20] काआ
करु[21] माआ[22] पुणु[23] थप्पि[24] धरे ॥
१८०[25] ॥ दंडकल[26] । (A & F).

---

१७९ । अथ दंडकलं ॥ कुंतेति ॥ कुंतकरो धनुर्द्धरो हयवरो गजवरः षट्कलो द्वौ पदाती दले, द्वात्रिंशन्मात्राः पादे सुप्रसिद्धा जानीत बुधजना हृदयतले । शतं विंशतिरष्टाधिका कलाः १२८ संपूर्णे वृत्ते फणिभाषिते भुवने, दंडकलं निबद्धं

---

१८० । १ राअ (C). २ भग्गंजा (E). ३ दिग (D & F). ४ लगन्ता (C). ५ गाअ (D). ६ Dropt in (B). ७ रोलइ (A), लोलहि (B), लोरहि (F). ८ सहलु (A), सवरइ (B). ९ पअ पइ (A), dropt in (B), रिउजअ (C), पअरउ (D), पअ पूर (F). १० Dropt in (B), पअपअ (D). ११ Dropt in (C). १२ तणो (E). १३ पुणि (E), पुण (F). १४ उहइ (B & C), वहइ (E). १५ करि (A). १६ दन्तेगुलि (D). १७ बाल (E). १८ जमलकरे (A). १९ कसीसर (A), कासीसर (E). २० णेहलु (C). २१ करि (E), कर (F). २२ माहा (B). २३ पुण (E & F). २४ थप्प (D). २५ ७९ (A), ८० (F). २६ दंडकल (B & C).

गुरुसंयुक्तं पिंगलो जल्पति आत्ममनसि ॥ कुंतेति चत्वारश्चतु-ष्कलाः, पदातिश्चतुष्कलः ॥ ७८ ॥ (G).

१८० । उदाहरति । राजानो भग्ना दिशु लग्नाः परिहृत्य हय-गजग्टहग्टहिणीः, मैत्रैर्भृतं सरोवरं रिपुजनपरिकरः पीडयति लोटयति तनुं धरण्यां । पुनरुत्थाय संभाष्य करोति दन्ताङ्गुलीः बालतनयाः करं यमलं कुर्व्वन्ति, काशीश्वरो राजा स्नेहलकायः कृत्वा मायां पुनः स्थापयति ॥ मैत्रैरश्रुभिः, परिकरो भार्य्या, सम्भाष्य धैर्य्यं कृत्वा, दन्ताङ्गुलिकरणमत्यद्भुते, यमलं जोडिः । एतादृशीं दशां दृष्ट्वा शत्रुपरिजनेष्वपि स्नेहयुक्तशरीरो भूत्वा पुनः स्वस्थाने स्थापयित्वा धा[र]यति पालयति । (C).

१८० । दंडकलमुदाहरति राअह इति । हअ गअ घर घरिणी — हयगज[ग्टह]ग्टहिणीः परिहरि — परित्यज्य भग्गंता — पलायमानाः केचन राअह — राजानः दिअ लग्गंता — दिशु लग्नाः दिगन्तं गता इत्यर्थः, तेषां चेति शेषः लोरहि — अश्रुभिः भरु सरवरु — भृताः सरोवराः, कश्चिच पअ पलु परिकरु — पाद-पतितनिगड़ः धरणी — धरण्यां लोट्टइ — विचेष्टते, तनुं शरीरं च पिट्टइ — ताडयति, कर दंतंगुलि — कृतदंतांगुलिः सन् पुण उट्टइ संभलि — पुनरुत्तिष्ठते सावधानीभूय, बाल तणअ कर जमलकरे — बालतनयकरेण नमस्कारं कारयति । इदं च जातिवर्णनं । तथा-वस्थं च दृष्टा तं णेहलु काआ — स्नेहलकायः कासीसर राआ — काशीश्वरराजः माआ — मायां दयां करि — कृत्वा पुनः थप्पि धरे — संस्थाप्य धृतवान् स्वराज्ये रचितवानित्यर्थः ॥ (E).

अथ दीपकच्छंदः । (D).

सिर देइ[1] चउ[2] मत्त लहु एक कर[3] अंत ।
कुंतेक्क[4] तसु[5] मज्झ[6] दीपक सो[7] बुज्झ ॥ १८१[8] ॥

---

१८०। यथा ॥ राआ इति ॥ राजानो भग्ना दिशु भग्नाः परि-त्यज्य हयगज[गृह]गृहिणीः । अश्रुभिर्भृत्वा सरोवरान् पदपतितः परिकरो लुटति ताडयति तनुं धरण्यां । पुनहस्तिहस्तयवधार्थ्यं कृत-दंतांगुलिर्बाळतनयैः कृत्वा नमस्कारं कारयति, काशीश्वरो राजा स्नेहाकुकायः कृत्वा मायां पुनः [सं]स्थाप्य कृतवान् ॥ परिकरः स्वीजनः ॥ ८० ॥ इति दंडकलम् ॥ (G).

१८१। अथ दीपकच्छन्दः ॥ शिरसि देहि चतुर्मात्रं लघुमेक-मन्ते । इन्त एको यस्य मध्ये दीपकं तद्बुध्यस्व ॥ शिरसि आदौ, इन्तः पञ्चकलो गणः । (C).

१८१। अथ दीपकनामकं वृत्तं लक्षयति सिर देइति । सिर—शिरसि आदावित्यर्थः, चउ मत्त—चतुर्मात्रिकं गणं देइ—स्थापय, अंत—अंते पादांते लहु एक्क—लघुमेकं कर—कुरु, तसु—तयोः चतुर्मात्रिकैकलघुकगणयोरित्यर्थः मज्झ—मध्ये कुंतेक्क—कुंतमेकं पंचकलमेकमित्यर्थः कुरु इति पश्चात्तनेनान्वयः, दीपक सोउ बुज्झ—दीपकनामकं [तत्] वृत्तं जानीहीत्यर्थः ॥ यथ

---

१८१। १ देह (B), देउ (C). २ चो (D). ३ लहु (D), कर (E). ४ कुंतक्क (A), दंतेक्क (B & C). ५ जसु (C). ६ मंत (A). ७ सउ (B & F), सर (C), सोउ (D & E). ८ ७१ (A), ८१ (F).

जहा, जसु हत्थ[१] करवाल[२] बीपक्ख[३] कुल काल ।
सिर सोह[४] बर छत्त संपुस्न ससि मत्त[५] ॥ १८२[६] ॥
दीपक । (A, B, C & F).

---

प्रथमं चतुष्कलस्ततः पंचकलस्तत एको लघुः प्रतिचरणं पतति, तद्दीपकनामकं वृत्तमिति फलितार्थः । क्वचित् कुंतग्गि तसु मज्झेति पाठस्तत्र अंते दलांते एकं लघुं कुरु, कुंतग्गि—कुंतद्वयं, तसु—तयोश्चतुर्मात्रिकैकलघुकगणयोः मज्झ—मध्ये कुरु इत्यर्थः । इदं च एकैकदलाभिप्रायेण, अन्यथैकैकपादे चतुष्कलद्वयस्याभावादसंभवापत्तिरिति द्रष्टव्यं । प्रथमं यत्र चतुर्मात्रिकस्ततः पंचकलश्चयं ततो लघुः प्रतिदलं पतंति, तदा [दी]पकं वांछ इति द्वितीयपाठे निर्गलितार्थः ॥ (E).

१८१ । चिर इति ॥ शिरसि देहि चतुर्मात्राः लघुमेकं कुर्वंते । कुंतमेकं तस्य मध्ये दीपकं बुध्यस्व ॥ शिरस्यादौ, कुंतः पंचकलः ॥ ८१ ॥ (G).

१८२ । उदाहरति । यस्य हस्ते करवालः प्रति[वि]पक्षकुलकालः । शिरसि शोभते वरच्छत्रं सम्पूर्णशशिवत् ॥ (C).

१८२ । अथ दीपकमुदाहरति जसु हत्थ इति । विपक्ख कुलकाल—विपक्षकुलकालः करवालः खड्गः जसु हत्थ—यस्य हस्ते,

---

१८२ । १ हच्छ (A). २ करवालु (F). ३ विपख (A), विप्पक्ख (D), विप्पक्ख (E), विपक्ख (F). ४ बेच (A & B), सोच (C). ५ मित्त (B), मत्त (D & F). ६ ७१ (A), ८१ (F).

अथ सिंहावलोकच्छंदः। (D).

गण विप्प[1] सगण धरि पअह पअं[2]
भण[3] सिंहअ[4]लोअण[5] छंद[6]वरं[7]।
गुणि गण[8] मण बुज्झहु[9] णाअ[10] भणा[11]
णहि[12] जगणु[13] ण भगणु ण कण्ण[14]गणा[15] ॥ १८३[16]।

---

सोह—शोभते, यस्य सिर—[शिर]सि वर छत्त—वरच्छत्रं, संपुण्ण ससि मत्त—संपूर्णशशिवत्, अथवा संपूर्णशशिमात्रं पौर्णिमचंद्रमंडलप्रमाणमित्यर्थः शोभते इति पूर्वेणैवान्वयः॥ (E).

१८२। यथा जसु इति॥ यस्य हस्ते करवालो विपक्षकुलकालः। शिरसि वरं छत्रं पूर्णशशिवत्॥ ८२॥ इति दीपकम्॥ (G).

१८३। अथ सिंहावलोकः॥ विप्रगणं सगणं धृत्वा पदे पदे भण सिंहावलोकं छन्दोवरं। गुणिगणा मनसा बुध्यध्वं नागो भणति, यस्मिन्[ज] य[ज]गण-भगणौ न कर्णगणः॥ पदे पदे प्र[ति]पादं, विप्रगणं चतुष्कलं, सगणमन्तेगुरु चतुष्कलं, धृत्वा स्थापयित्वा, नागः पिङ्गलः। तथाच विप्रगणसगणाभ्यामेव छन्दो-

---

१८३। १ विप्प सब (F). २ मत्तकथं (D). ३ भणु (B, C & F). ४ सिंहच (A & D). ५ लोच (B), non est (C), लोचन (D), लोचर (F). ६ चन्द (C), छचंदु (D). ७ भूपं (D), सुरम् (E). ८ जब (B), चच (C & E). ९ Dropt in (B), बुज्झउ (C). १० करच (A). ११ चच (A), मचा (D), भूच (F). १२ Dropt in (A & B), कच (C), चड (D), जड व (E). १३ जगच (B). १४ कच (E). १५ चचा (C). १६ ७४ (A), ८२ (F).

निर्व्वाहः कार्य्यः । एतदेव स्पष्टयितुमाह यस्मिन्निति, एतच्छन्दसि जगणभगणकर्णगणा न पतन्ति । जगणो मध्यगुरुः, भगण आदिगुरुः, कर्णो द्विगुरुः, एतेषां निषेधाच्चतुष्कलेषु सगणविप्रगणाव[व]शिष्येते । (C).

१८३ । अथ सिंहावलोकनामकं वृत्तं लक्षयति गण विप्पेति । पअइ पअं — पादे पादे गण विप्प सगण — विप्रगणसगणौ धरि — धृत्वा, छंदवरं — छंदःश्रेष्ठं सिंहअ लोअइ — सिंहावलोकं भण, तसु — तस्मिन्, न जगणः न भगणः न कर्णगणः । जगणो मध्यगुरुर्गणः, भगणो गुर्वादिर्गणः, कर्णो गुरुद्वयात्मको गणः, एते तत्र न पतंतीत्यर्थः, इति णाअ भणा — नागः भणति । हे गुणि अण — गुणिजनाः यूयमिति [शेषः] मण बुज्झह — मनसि बुध्यध्वम् ॥ अत्र विप्रसगणयोः क्रमिकयोः समुदितयोर्वा स्थापने न नियमः, किंतु एताभ्यामेव व्यस्तसमस्ताभ्यां पादे षोड़शकलाः पूरणीयाः, एताभ्यामतिरिक्तस्तु गणो न देयः । अतएवोदाहरणे प्रथमपादे ज[स]गणचतुष्टयेनैव षोड़शमात्राः पूरिताः, द्वितीयचरणे च प्रथमविप्रद्वयमनंतरं सगणद्वयमित्युभाभ्यामेव षोड़शकलाः पूरिताः, तृतीये च पुनः सगणचतुष्टयेनैव पूरिताः, * * * न त्वन्यो गणो दत्तः, न त्वेतावेव क्रमिकसमुदिताविति द्रष्टव्यम् । (E).

१८३ । विप्पेति ॥ विप्रगणं सगणं धृत्वा पदे पदे, भण सिंहावलोकितं[कम्] छंदोवरं । गुणिगणा मनसि आनीत, नागभणितं, नास्ति जगणो न भगणो न कर्णगणः ॥ विप्राश्चतस्रो मात्रास्सगणोऽपि, ताभ्यां षोड़शमात्राः प्रतिपादं कार्या इति तात्पर्यम् ॥ ८३ ॥ (G).

विप्प सगण पत्र वेवि गण अंत[1] विसज्जहि[2] हार[3] ।
पच्छा हेरि कइत्त[4] करु[5] सोलह कल[6] पत्थार[7] ॥ १८४[8] ॥
दोहा ।

---

१८४ । विशेषान्तरमाह । विप्रगणसगणौ पदे द्वावपि, अन्ते विसर्ज्जय हारं । पश्चाद्दृष्ट्वा कवित्वं कुरु षोड़शक[ल]प्रस्तारः ॥ द्वावपि द्वावेव, अत्र चान्ते विप्रगणो न देय इति । हारं गुरुमन्ते यथा गुरुः पतति तथा कार्य्यं, तेनान्ते सगणो देय इति पर्य्यवस्यति । (C).

१८४ । अथैनमेवार्थं विशदीकृत्य द्विपदिकयाह विप्प सगणेति । विप्प सगण पत्र वेवि गण—विप्रसगणौ पादे द्वावेव गणौ अंत—अंते पादांते हार—हारं गुरुं विसज्जहि—विसर्जय, पादांते सगणान्तःपतितं गुरुं विसर्जय न त्वन्यमित्यर्थः, तथाच पादांते सगण एव देय इति नियमो लभ्यते इति । हेरि—निरीक्ष्य विभाव्य, पच्छा—पश्चात् सोलह कल पत्थार—षोड़शकलप्रस्तारं षोड़शकलाः प्रस्तार्य्यंते अस्मिन्नेतादृशमित्यर्थः कइत्त—कवित्वं कुरु, एतल्लक्षणं विभाव्य पश्चादेतच्छंदसा कवित्वं कुरु इत्यर्थः । (E).

१८४ । दोहया पुनर्द्रढ़यति, विप्प सेति ॥ विप्रसगणौ पदे

---

१८४ । १ अन्तर (B). २ विसज्जड (A), विसज्ज (B), विसज्जहिं (D). ३ हाव (A). ४ कवित्त (D). ५ कर (C), करि (F). ६ कल (F). ७ पत्थार (A). ८ ८५ (A), ८६ (F).

जहा, हणु उज्जर[1] गुज्जर[2] राअ[3] दलं[4],
दल[5] दलिअ[6] चलिअ[7] मरहट्ठ[8] बलं[9] ।
बल मोलिअ[10] मालव राअ[11] कुला,
कुल उज्जल[12] कल[13]चुलि[14] कस फुला[15] ॥१८५[16]॥
सिंहावलोक[17] । (A, B & C).

---

द्वावेव गणौ अंते विसर्जय हारं । पश्चाद्दद्या कविलं कुरु, षोड़शकलः प्रस्तारः ॥ अत्र सिंहावलोकने प्रतिचरणं षोड़शमात्रास्तन्मध्ये मात्राद्वयमंतिमं गुरुरूपं कार्यमित्यर्थः ॥ ८४ ॥ (G).

१८५। उदाहरति। हतमुज्ज्वल-गुर्ज्जल-राजकुलं, दलमलितमहाराष्ट्रकुलं, बलमोटितमालवराजकुलं, कुलेनोज्ज्वलकरचूलीकर्णपुष्पं ॥ कुलं सैन्यं, दलमलितं मर्द्दितं, मोटितं प्रमर्द्दितं येन, करचूलीवंशावतंसो जयति, करचूली क्षचियान्तरवाची, कर्णपुष्पम् अवतंसः ॥ (C).

१८५। अथ सिंहावलोकमुदाहरति हंणु इति। हतोज्ज्वलगुर्जरराजदलः, दरदलित—चालित-महाराष्ट्रबलः, बलमोदित-

---

१८५। १ उज्जर (D), उज्जल (F). २ Dropt in (A), र non est (C), गुज्जर (D), गुज्जल (F). ३ राउ (F). ४ कुलं (B & C), कुला (F). ५ दर (A), बल (B). ६ मलिअ (C). ७ चलअ (C), dropt in (F). ८ मरट्ठ (A), मरट्ट (B & C). ९ बला (F). १० मोलिअ (F). ११ राउ (C). १२ मज्जल (A). १३ कच (A), कर (C & E). १४ चुरि (A & B). १५ फुरा (A & E). १६ ०९ (A), ८५ (F). १७ सिंहावलोचन (F).

## अथ प्लवंगमच्छंदः। (D).

जत्थ[1] पढम छअ[2] मत्त पआप्पअ[3] दिज्जए[4]
पंचमत्त चउमत्त गणा णहि[5] किज्जए[6]।
संभलि[7] अंत लहू[8] गुरु[9] एक्कक[10] चाहए[11]
मुद्धि पअंगम[12] छंद[13] विअक्खण सोहए॥ १८६[14]॥

मालवराजकुलः, एतादृशः कुल उज्ज्वल — उज्ज्वलकुलः, करचुलि-[काय] — करचुलिवंशोद्भवः कर्णः फुरा — स्फुरति॥ (E).

१८५। यथा॥ हणु इति। हतोज्ज्वलगुर्जरराजदर्पो दग्धदलित-महाराष्ट्रबलः। बलचोटितमालवराजकुलः, कुलोज्ज्वलः कर-चुलिकर्णः स्फुरति॥ करेति करचुलिवंशोत्पन्नः कर्ण इत्यर्थः॥ ८५॥ इति सिंहावलोकनम्॥ (G).

१८६। यत्र प्रथमं षण्मात्रः पदे पदे दृश्यते, पञ्चमात्र-चतुर्मात्रगणौ न हि क्रियेते। संभण्यान्ते लघुर्गुरुरेकः स्थाप्यतां मुग्धे प्लवङ्गमच्छन्दो विलक्षणं शोभते॥ विलक्षणं प्रकृष्टं, विचक्षण इति सम्बोधनं वा। आदौ षट्कलो गण इत्युक्तम्। (C).

१८६। १ जत्थ (A). २ च्छअ (C). ३ पअंपअ (A). ४ दीज्जइ (D & F). ५ णहि (F). ६ दिज्जए (A), दिज्जिए (C & E). ७ सम्भलि (A), संभलि (B & C), संभलिअ (F). ८ लहु देइ (A), लि लहु (B), लहु (C & F). लहु (E). ९ गुरु (F). १० एक (A), एक्क (F). ११ देवए (A). १२ पअंगम (D, E & F). १३ च्छन्द (C). १४ ७७ (A), ८६ (F).

पअ पअ[1] आइहि गुरुआ[2]
पिंगल पभणेइ[3] सअल[4] णिब्भंती[5]।
छंद पवंगम[6] दिट्ठो[7]
मत्ताणं एक[8] बीसंती[9] ॥ १८७[10] ॥ गाहा।

---

१८६। अथ प्लवंगमना[म]कं वृत्तं लक्षयति जत्थेति। जत्थ—यत्र पढम—प्रथमं पादादावित्यर्थः छअ मत्त—षण्मात्रकः पअप्पअ—पादे पा[दे] दिज्जए—दीयते, ततश्च चउमत्त गणा—चतुर्मात्रका गणा दिज्जए—दीयंते इति पूर्वेणैवान्वयः, पंचमत्त—पंचमात्रकगणः णहि किज्जए—न क्रियते। षट्कलानंतरं चतुर्मात्रकगणेनैव पादपूरणं कर्त्तव्यं न तु पंचमात्रकगणेनेत्यर्थः। अंते—पादांत इत्यर्थः संभवि—संस्मृत्य एक्कक—एकैकः लहु गुरु—लघुर्गुरुः चाहए—अपेक्ष्यते पादांते लघुगुरू अवश्यक्रमेण स्थापनीयावित्यर्थः, हे मुद्धि—मुग्धे, तत् प्लवंगमछंदो विलक्षणं शोभते॥ अथ षट्कलोत्तरं यथासंभवं पतितैश्चतुर्मात्रकैः न तु पंचमात्रकैः पादांते अवश्यापेक्षणीयाभ्यां च लघुगुरुभ्यां प्रतिचरणमेकविंशतिः कलाः पूरणीया इति संप्रदायः।

---

१८७। १ Dropt in (E). २ गुरुआ (C). ३ पभणइ (B), भणेइ (D), भणइ (F). ४ सअल (C), सकल (D & F). ५ णिब्भंती (B & C), णिब्भंता (D), णिब्भंति (E), णिब्भंता (F). ६ पवंगम (A & C). ७ दिट्ठो (B & C). ८ एक्क (B & C), एक (D & F). ९ बीसंति (A & E), बीसत्ता (D), बीसत्ता (F). १० ८८ (A), ८० (F).

तिक्कलु[1] चउक्कल पंचकल तिम्न गण दूर करेहु ।
छक्कलु[2] तिखि[3] पलंत[4] जेहि लहु गुरु[5] अंत मुखेहु[6] ॥
१८७[7](क) ॥ दोहा ।*

---

तथाच प्रथममेकः षट्कलस्ततश्चतुष्कलत्रयं ततो लघ्वादिस्त्रिकलः यत्र प्रतिचरणं पतति, तत् प्लवंग[म]नामकं वृत्तमिति फलितार्थः । (E).

१८६ । अत्येति ॥ यत्र प्रथमं षण्मात्रः पदे पदे दीयते, पंचमात्रश्चतुर्मात्रो गणोऽपि: क्रियते । अवधृत्यांते लघुगुरुरेको-ऽपेक्ष्यते, बुध्यं प्लवंगमं छंदो विचक्षणमोह[शोभ]नं ॥ षपि: षट्कलः ॥ ८६ ॥ (G).

१८७ । तत्र विशेषमाह । पदे पदे आदौ गुरुकं पिङ्गलः प्रभणति सकलं निर्भ्रान्तः । प्लवङ्गमच्छन्दसि दृष्टा मात्राणामेक-विंशतिः ॥ प्राथमिकः षट्कल आदिगुरुरिति । (C).

१८७ । [The gloss (E) is wanting here.—Ed.]

१८७ । पुनः स्पष्टमाह ॥ पत्र इति ॥ पदे पदे आदौ गुरुः पिंगलो भणति सकलं निर्भ्रान्तिः । छंदः प्लवंगमं दृष्टं मात्राणा-मेकविंशत्या ॥ ८७ ॥ (G).

---

१८७ (क) । १ तिक्कल (A). २ छक्कल (A). ३ तिणि (A). ४ पलपंत (A). ५ गुरुजा (A). ६ मुणे (A), मुणेह (E). ७ ७८ (A). * N. B. This śloka is found in (A) and (E), but not in the others. The Commentary of (E) is silent also.—Ed.

जहा, णच्चइ चंचल विज्जुलिआ[1] सहि जाणए
मम्मह[2] खग्ग[3] किणीसइ[4] जलहर साणए।
*फुल्ल[5]कअंबअ[6] अंबर[7] डंबर[8] दीसए[9]
*पाउस पाउ[10] घणाघण[11] सुमुहि वरीसए॥
१८८[12]॥ प्लवंगम[13]।

---

१८८। उदाहरति। नृत्यति चञ्चला विद्युल्लता सखि ज्ञायते, मन्मथेन खड्गः किं निघ्यते[?] जलधरशाणके। फुल्लकदम्बकाम्बरे डम्बरो दृश्यते प्रावृषं प्राप्य घनाघनः सुमुखि वर्षति॥ निघ्यते[?] निघातः[तः] क्रियते। (C).

१८८। अथ प्लवंगममुदाहरति, हे सहि—सखि, यत् चंचल विज्जुलिआ—चंचला विद्युत् णच्चइ—नृत्यति, एत[अतो] मम्मह—मन्मथः जलहर साणए—जलधरशाणके मेघस्वरूपशस्त्रोल्लेखने यंत्रे इत्यर्थः खग्ग किणीसइ—ख[ख]ड्गं तीक्ष्णयति इति जाणए—ज्ञायते। फुल्ल कदंबअ—पुष्पिताः कदम्बकाः, अंबराडंबरः दृश्यते, घनाघनः वरीसए—वर्षति, अतः हे सुमुखि पाउस पाउ—प्रावृट् प्राप्ता न तु कांत इति भावः॥ (E).

---

१८८। १ विज्जुलआ (B & C), विज्जुलिये (E). २ वम्मह (A & F), कम्मह (D). ३ खग्गा (E). ४ किणीसइ (A), कणीसइ (F). * 3rd and 4th quadrants transposed in (E). ५ फुल्ल (A, D & E). ६ कदंब (A), कअम्बअ (D), कदम्बअ (E), कलंबअ (F). ७ & ८ अम्बअ डम्बअ (C). ९ दीसइ (E). १० पाअअ (A). ११ घणघण (E). १२ ७९ (A), ८८ (F). १३. प्लवंगम (A), प्रवंगम (B).

अथ लीलावतीच्छंदः। (D).

गुरु[1] लहु[2] णहि[3] णिम्म[4] णिम्म णहि

अक्खर पलइ पओहर बिसम समं

जहि[5] कहुँ णहि णिम्मइ[6] तरल तुरअ[7] जिमि[8]

पसर[9] बिदिस[10] दिस[11] अगम गमं[12]।

गण पंच[13] चउक्कल[14] पलइ णिरंतर

अंत सगण धुअ[15] कंत[16] गणं[17]

परिचलइ[18] सुपरि[19] परि[20] लील[21] लिलावइ[22]

कल[23] बत्तीस बिसामकरं[24] ॥ १८९[25]।

---

१८८। यथा ॥ णच्चेति ॥ नृत्यति चंचला विद्युत् सखि जानीहि मन्मथस्य खड्गकनिघ्नमियं, जलधरः शाणः। पुष्पितः कदंवः, अंबरे आडंबरो दृश्यते, प्रावृट् प्राप्ता, घनाघनः सुमुखि वर्षति ॥ ८८ ॥

इति प्लवंगमम् ॥ (G).

---

१८९। १ & २ Transposed in (A). ३ & ४ Dropt in (A). ५ जह (C). ६ णिम्म (A, D, E & F). ७ तुरआ (A), तुरअ (F). ८ जिम (B, C & E). ९ पसर (B), प्रसरइ (C). १० दिस (A & B), दिसि (E). ११ दिसि (B & E). १२ गमं (E). १३ मत्त (F). १४ मउक्कल (B), चउपल (E), चउकल (F). १५ धुअ (F). १६ कंत (A & D). १७ गुणं (F). १८ चल चलइ (C). १९ भरि (C). २० Non est (F). २१ लील (A, B & C). २२ लिलावइ (A, B & C), लीलावइ (F). २३ परि (A), पअ (B & C). २४ बिसामकरे (E), बीसामकरं (F). २५ ८० (A), ८९ (F).

१८९ । अथ लीलावती । गुरुलघ्वोर्नहि नियमः नियमो नहि अक्षरस्य पतति पयोधरो विषमसमयोः, यत्र क्वापि नहि नियमः तरलतुरगो यथा प्रसरति दिशि विदिशि अगम्ये गम्ये । गणाः पञ्च चतुष्कलाः पतन्ति निरन्तरम् अन्ते सगणो ध्रुवः कान्तो गम्यते, चत्वारि चरणानि धृत्वा परिलील-लीलावती-पदं द्वाचिंशद्विरामकरं ॥ कियन्तो गुरवः कियन्तो लघव इति नियमो नास्ति, कियदक्षरः पाद इति नियमो नास्ति, पयोधरो जगणो विषमे समे च, दृष्टान्तो यथा चपलोऽश्वः दिग्विदिक्प्रसरणे यत्र क्वापि न नियममङ्गीकरोति तथैवेत्यर्थः । चतुष्कलगणाः पञ्चविधा द्विगुर्व्वादयस्ते यथेच्छं पुनः पुनर्निवेशनीयाः, न तु पञ्चसंख्यका इत्यर्थः, द्वाचिंशत्कले पादे चतुष्कलगणान्तलस्यावश्यकत्वात्, अयञ्च विशेषः, सप्तगणा यथेच्छं चतुष्कला देयाः, अन्ते सगणो ध्रुवो नियतः, कान्तः कमनीय इति । केचित् कर्णगणं पठित्वा सगणकर्णगणयोरन्ते विकल्पमाहुः । परिलीलेति परितः सर्व्वतो लीला यस्य । परे तु चतुष्कलगणपञ्चकलानन्तरं मात्राष्टकनियममित्याहुः, साम्प्रदायिकास्त[स्त्व]नुमन्यन्ते पदस्य द्वाचिंशन्मात्रासु विरामोऽवसानं द्वाचिंशन्मात्रकं पदमित्यर्थः । (C).

१८९ । अथ लीलावतीनामकं वृत्तं लक्षयति गुरु लहु इति । जहि—यत्र गुरु लहु णहि णिम—गुरोर्लघोर्नास्ति नियमः, एतावंतो गुरव एतावंतो लघवश्च यत्र पतंतीति नियमो नास्तीत्यर्थः, अक्खर—अक्षरेऽपि णिम णहि—नियमो नास्ति, एतावंत्यक्षराणि पतंतीत्यपि यत्र न नियम इत्यर्थः, विसम समं—

विषमे [समे] पयोधरः जगणः पलइ—पतति इत्यपि कुछ पद्धि
खिअ—कुत्रापि चरणे नास्ति नियमः, किन्तु गण पंच चउकल—
गणाः पंच चतुष्कलाः चतुष्कलभेदात्मकाः पंचगणा इत्यर्थः, प्रस्तार-
क्रियया चतुष्कलस्य पंच भेदाः ये भवंति ते सर्वेऽपि व्यस्ताः समस्ताः
विपर्यस्ता इति हृदयं । ते कियंतः पतंति इत्यत्र हेतुः कल
बत्तीसेति, तथा च द्वात्रिंशन्मात्राः पूरका अष्टौ चतुष्कलभेदा
इति भावः, निरंतरमितरगणांतराव्यवहितमित्यर्थः पलइ—
पतंति, अंत—अंते पादांते इत्यर्थः, कंत गण कांतगणः सगण-
इत्यर्थः, ध्रुवं निश्चितं पत[ती]ति पूर्वेणान्वयः, यथ छंदः जेम—
यथा तरल तुरअ—तरलतुरगः, तथा विदिग्गि दिग्गि अगम
गमं—अगम्ये गम्ये पसरइ—प्रसरति, सुपरि—पादे [?] परि-
लील—परितः लीलया, परिचलइ—परिचलति, सा लीला-
वती तत् लीलावतीनामकं वृत्तं, कल बत्तीस—कलासु द्वात्रिं-
शत्सु विसाम करे—विश्रामं करोति इति योजना ॥ यत्र सप्त-
चतुष्कलानंतरं सगणः प्रतिचरणं पतति, सा लीलावतीति फलि-
तार्थः । (E).

१८९ । गुरु इति ॥ गुरोर्लघोर्नास्ति नियमो नियमो नाक्ष-
रे पतति पयोधरो विषमसमयोः, यत्र कोऽपि नास्ति नियमः
तरलतुरंगो यथा प्रसरति विदिक्षु दिक्षु अगम्यगम्ययोः । गणाः
सप्त चतुष्कलाः पतंति निरंतरमंते सगणो बुधकांतगुणः, परि-
चलति सुपरिलीलया लीलावती कला द्वात्रिंशद्विश्रामकरा ॥
पयोधरो जगणः ॥ ८९ ॥ (G).

जहा, घर[१] लग्गइ[२] अग्गि[३] जलइ[४] धह[५] धह[५]
कइ[६] दिग मग[७] णह पह अणलभरे
सब दीस[८] पसरि[९] पाइक्क लुलइ[१०] धणि[११]
थणहर[१२] जहण[१३] दिआव[१४]करे।
भअ[१५] लुक्किअ[१६] थक्किअ[१७] बइरि[१८]
तरुणि जण[१९] भइरब[२०] भेरिअ[२१] सद्द[२२] पले
महि लोट्टइ[२३] पिट्टइ रिउ सिर[२४]
टुट्टइ जक्खण[२५] बीर हमीर[२६] चले॥
१९०[२७]॥ लीलावती। (A, B, C & F).

---

१९०। उदाहरति। गृहे लगिला अग्निर्ज्वलति धगधगिति कृत्वा दिङ्मार्गनभःपथा अनलैर्भृताः सर्व्वदिक्षु पदातिकाः प्रसृत्य लुठन्ति धनं, स्तनभारजघने दत्त्वा करं। भयेन गुप्यति गुप्ता तिष्ठति

---

१९०। १ गव (E), घव (F). २ लग्गिच (B), लगइ (C), चरिचर (E), रिउचर (F). ३ चगि (E). ४ जगर (F). ५ दच दिच (A), दच दच (B & C). ६ कवि (B). ७ दिगम (B), रावि पच दिगमग (D), कवि पच दिगम (F). ८ दिस (A), देस (D & F). ९ पसरिच (A). १० लुरइ (D & E). ११ धच (A, B & C). १२ थुघचच (A), चच (B). १३ जुघच (A), जचच (B, C & E). १४ दचाव (A). देचाव (B & C), दुचाव (F). १५ भय (B & C). १६ & १७ Transposed in (A, B & C). १७ चकिच (A), लकिच (B). १८ वचीर (B), वैरि (D, E & F). १९ जन (D & F), जच (E). २० भरवच (D), भेरव (E), भैरव (F). २१ भेरीच (A, B & C), रिच (D). २२ चकु (C). २३ लुइर (D & F). २४ दिर (F). २५ जंचच (A), जच (B, C & E). २६ चमीर (B & C). २७ ८१ (A), ९० (F).

वैरितरुणी यदा भैरवो भेरवीरवः[भेरीरवः] पतति मह्यां लुठति पीड्यते रिपुशिरस्त्रुट्यति यदा वीरहम्मीरश्चलति ॥ अत्र इत्यादौ अध्याहार्यमित्यर्थः । (C).

१९० । अथ लीलावतीमुदाहरति, घर भरि घरेति । जत्र वीर हमीर चले—यस्मिन् क्षणे वीरहम्मीरश्चलितः, तस्मिन् क्षणे इति शेषः सर्व[व] अरि घर—सर्वारिगृहेषु अगि—अग्निः धह धहेत्यनु[नु]करणं [कर—] कृत्वा जलइ—ज्वलति, दिग मग णह पह—दिङ्मार्गः नभःपथः अणलभरे—अनलभृतः अग्निना परिपूर्ण इत्यर्थः जात इति शेषः, धण थण हर जघण दिआव करे—धनिस्तनभरजघनदत्तकरः धनिनीनाम् अरिविदग्धानां स्तनभरे जघने च दत्तः करो येन स तादृश इत्यर्थः पाइक—पदातिः सव दीस पसरि—सर्वदिक्षु प्रसृत्य लुरइ—चलति, भैरव भेरिअ सद्द पले—भैरवभेरीशब्दः पतति, भअ लुक्कित्र थक्किअ—भयनिलीनस्खगितः वेरि तरुणि जण—वैरितरुणीजनः महि लुट्टइ—मह्यां विचेष्टते, पिट्टइ—ताडयति खेदयतीति भावः, रिउ सिर टुट्टिअ—रिपुशिरांसि त्रुटति ॥ (E).

१९० । सर्वेति ॥ सर्वरिपुगृहेषु अग्निर्ज्वलति धगधगशब्दं कृत्वा, नास्ति पंथा दिङ्मार्गेषु अनलो भृतः, सर्वदिक्षु प्रसरंति पदातयः, लुठंतीनां रिपुगृहिणीनां स्तनभरो जघनं द्विधा करोति ॥ भयेन निलीनः स्खगितो वैरितरुणीजनो भैरवे भेर्याः शब्दे पतिते मह्यां लुटति पिट्टयति देहं शिरस्त्रुटति यत् क्षणे वीरो हंमीरश्चलितः ॥ ९० ॥ इति लीलावती ॥ (G).

## अथ हरिगीताच्छंदः। (D).

गण चारि पंच कल[१] ठविज्जसु बीअ[२] ठामहि[३] छ[च्छ]कलो
पअ पअइ[४] अंतहि[५] गुरु करिज्जसु बस्सणेण[६] सुसब्बलो[७]।
दह[८] चारि[९] दुक्कइ[१०] दह दु माणहु[११] मत्त ठाइस[१२] पाअओ[१३]
हरिगीअ छंद पसिद्ध जाणहु[१४] पिंगलेण पआसिओ[१५]॥
१९१[१६]॥

१९१। अथ हरिगीताच्छन्दः। गणाश्चत्वारः पञ्चकलाः स्थाप्यन्तां द्वितीये स्थाने षट्कलः, पदे पदे अन्ते गुरुः क्रियतां वर्णनेन सुशबलं। दश स्थापयित्वा तत्कतिद्वंश दौ मानय मात्राअष्टाविंशतिर्मानय पिङ्गलेन व्याख्यातम्॥ अयमर्थः—चत्वारः पञ्चकलाः कर्त्तव्याः, तत्र प्रथमगणानन्तरं षट्कलः, तदनन्तरं चयः पञ्चकलास्ततस्तैको गुरुरेवं क्रमेण प्रतिपादमष्टाविंशतिर्मात्राः भवन्ति, वर्णनेन समीचीनवर्णनेन सुशबलं मिश्रितं, [यद्वा] वर्णनेन महाप्राणाक्षरेण सुबलं बलवदित्यर्थः. दशाङ्कः स्थापनीयः दशाङ्केन च पूरणीयमिति तत्कतिशब्दार्थः, तेन तस्य गुणनं

१९१। १ कल (A, C & E), कलु (B), कलं (D). २ बिअ (E). ३ ठामइ (B & C). ४ च non est (B & C). ५ अंतइ (A), अन्तेइ (D). ६ Dropt in (E). ७ सुसद्दलो (A), ससब्बलो (F). ८ देइ (C). ९ ठाइचि (C). १० तक्कइ (A), करइ (B & C), दुइ (E). ११ दुमाणइ (B & C), उमाणउ (D), दुइ पमाणउ (E). १२ अट्ठाईस (A, B, C & E). १३ पाओ (A), पओ (B), पअओ (C). ओ (E). १४ माणउ (A, B & C), जाणइ (D). १५ पआसिओ (A, B & C), पआसि (E). १६ ८१ (A), ९१ (F).

व्रतिरिति ज्योतिःशास्त्रं । इत्यत्र शताङ्के निष्पन्ने दश द्वावित्य-नेन द्वादशाधिकं शतमात्रं छन्द इत्यर्थः । इदमेव कृतमि[ह]त्यु-क्तम्, अट्ठाइ्षेति, पादस्याष्टादश[विंशति]मात्रत्वादिदं सिद्धमित्यर्थः । षट्-दश[?]दश द्वादश-द्वावि[?]त्येषां योजनेऽष्टाविंशतिसंख्या-भवन्ति । (C).

१९१ । अथ हरिगीतनामकं वृत्तं लक्षयति, गण चारि[री]ति । पञ्च पञ्चहि[ह]—पादे पादे प्रतिचरणमित्यर्थः प्रथमं गण चारि—गणांश्चतुरः पंचकलान् ठविज्जसु—स्थापयत, बीअ ठामहि—द्वितीये स्थाने प्रथमपंचकलगणानंतरमिति यावत् छक्कलो—षट्कलान् स्थापयतेति पूर्वेणान्वयः, तथाच कर्त्तव्येषु चतुः-पंचकलेषु प्रथमपंचकलानंतरमेकं षट्कलं संस्थाप्य अनंतरमुर्व-रितास्त्रयः पंचकला गणाः कार्या इति पर्यवसितोऽर्थः । अंतहि—अंते पादांते इत्यर्थः गुरु करिज्जसु—गुरुमेकं कुरुत, दह चारि दुह दह दुह—दश चतस्रः द्वे दश द्वे एवं मत्त अट्ठाईसओ—मात्रा अष्टाविंशतिः पमाणऊ—प्रमाणयत पिंगलेण पआसिओ—पिंगलेन प्रकाशितं, वलणेण सुसव्वलो—वर्णनेन सुसबलं सुतरां सबलं समीचीनमित्यर्थः पसिद्ध—प्रसिद्धं हरिगीअ छंद—हरिगीतं छंदः जाणऊ—जानीत ॥ प्रथममेकः पंचकल-स्तत एकः षट्कलस्ततस्त्रयः पंचकलास्तत एको गुरुः यत्र पतंति, तदष्टाविंशतिमात्राकचरणं हरिगीतनामकं वृत्तमिति फलितार्थः । (E).

१९१ । गणेति ॥ गणाश्चत्वारः पंचकलाः स्थाप्यंतां द्वितीये

बीए[1] छक्कलु[2] ठावि[3] कहु[4] चारि पंचकल[5] देहु ।
बारह उत्तर मत्त[6] सउ माणसु[7] अंत ठवेहु ॥ १९२[8] ॥
दोहा ।

स्थाने षट्कलः पदे पदे अंते गुरुः क्रियतां वर्णनेन च सबलं। पुनः प्रकारेणैतद्दाह ॥ दहेति ॥ दश १० चत्वारि ४ द्वि २ कलः दश १० द्वौ २ मानय मात्रा अष्टाविंशतिः पादे ॥ हरिगीतं छंदः प्रसिद्धं आनीत पिंगलेन प्रकाशितम् ॥ ९१ ॥ (G).

१९२ । इदमेव स्पष्टयति । द्वितीये षट्कलं स्थापयित्वा चतुरः पञ्चकलान् देहि । द्वादशोत्तरमात्राशतकं मानसमन्ते कुरु ॥ शतकमित्य[न]न्तरं छन्दो भवतीति पूरणीयं, मानसशब्दो गुरुवाची । (C).

१९२ । अथैनमेवार्थं दोहाछन्दसाह, बीए छक्कलु इति । अथ हरिगीतच्छंदसोऽव्याहरणीयं, चारि पंचकल — चतुरः पंचकलान् देहु — दत्त । बीए — द्वितीये स्थाने प्रथमपंचकलानंतरमित्यर्थः छक्कलु एक कहु — षट्कलमेकं कथयत, अंते — पादांते माणस — मानसमेकं गुरुमित्यर्थः ठवेहु — स्थापयत, बारह उत्तर — द्वादशोत्तराः मत्त सउ — मात्राः शतं चतुश्चरणसमुदिता आनीतेति शेषः ॥ (E).

१९२ । १ बिच जाइ (F). २ छक्कल (A). ३ दश (E), दस (F). ४ कहु (C). ५ पंचकलु (B), पंचकलु (F). ६ Dropt in (C). ७ माणस (E). ८ ९१ (A), ९२ (F).

जहा, गअ गअहि ढुक्किअ तरणि[1]
लुक्किअ तुरअ तुरअहि[2] जुज्झिआ[3]
रह रहहि मीलिअ[4] धरणि पीलिअ
अप्पपर[5] णहि बुज्झिआ[6] ।
बल मिलिअ[7] आइअ[8] पत्ति आइउ[9]
कंप[10] गिरिवर[11] सीहरा[12]
उच्छलइ[13] साअर दीण[14] काअर
बइर[15] बड्डिअ[16] दीहरा[17] ॥ १९३[18] ॥
हरिगीता[19] । (A, B & F).

---

१९२ । द्वितीये स्थाने षट्कलमेकं कथय, चतुरः पंचकलान् देहि । द्वादशोत्तरं मात्राणां शतं मात्रसमंते स्थापय ॥ मात्रसं गुरुः ॥ ९२ ॥ (G).

१९३ । उदाहरति । गजा गजेन्द्रौकितास्तरणिर्युम्नः, तुरगा-

---

१९१ । १ तरणि (B), dropt in (C). २ तुरहि (B). ३ जुज्झिअ (B & C), जुज्झि (D & F). ४ मौलिअ (B & F), dropt in (C). ५ थिय चप्पर (A & C), येव पर (B). ६ बुज्झि (A & D). ७ मिलअ (A), मिल (B & C), मिलिअ (F). ८ पत्ति उ (B & C), चाइउ (D, E & F) (here ए short). ९ आइउ (A), भाइउ (D & E), भावउ (F). १० कम्प (B & C). ११ Non est (B), गिरवर (D). १२ सिंहरा (F). १३ उच्चलइ (A), उच्छल (B), उच्छरइ (D), उच्छलिअ (E). १४ दिण (D & F). १५ वहिर (C), वैर (D & E), वैरि (F). १६ बहुलिअ (B), वहुलिअ (C), वलिअ (F). १७ दीवरो (E). १८ ९४ (A), ९१ (F). १९ हरिगीया (C).

स्तुरायुक्तै रथैः पीडिता धरणौ पतिताः, मिन्नाः परे नहि बुद्धाः । बलेन भीताः आगताः पत्तयो धाविताः कम्पते गिरिवरशिख-रम्, उच्छलितः सागरः दीनाः कातरा वैरं बर्द्धितं दीर्घम् ॥ ढौकिताः संलग्नास्तरणिर्लुप्तः समरभूमिसमुत्थितधूलिभिरित्यर्थः, वैरं वैरिणां कर्म्म युद्धमित्यर्थः । वैरीति पाठे वैरिणो वर्द्धिता इत्यर्थः । तथा च दीर्घं चिरकालं भोजनादिना वर्द्धिता ये वैरिणस्तेऽपि दीनाः कातरा वा इति लभ्यते । (C).

१८३ । अथ हरिगीतमुदाहरति गअ गअहीति । गजा गजैः सह ढुक्किअ—ढौकिता युद्धार्थं मिलिता इत्यर्थः, तुरअ तुर-अहि—तुरगास्तुरगैः सह जुज्झिआ—अयुध्यन्[न्त], रह रहहि—रथा रथैः सह मीलिअ—संयुक्ताः युद्धाय मिलिता इत्यर्थः, धरणि पीडिअ—धरणिः पीडिता, तरणि—तरणिः सूर्यः लुक्किअ—आच्छन्नः हयगजपादोद्धूतधूलिभिरिति भावः, अत-एव अप्प पर—आत्मीयाः एते परकीया इति न वि[वे]क-आसीदित्यर्थः, बल—बलानि सैन्यानि मिलिअ—एकीभूय आएउ—आगतानि, पत्ति—पत्तव[यः] धाएउ—धाविताः, गिरिवर सीहरो—गिरिवरशिखराणि कंप—कंपितानि, साअर—सागराः उच्छलिअ—उच्छलिताः, काअर—कातराः रणभीरवो वा इत्यर्थः दीण—दीना जाता इति शेषः, दैन्यमाश्रिता इत्यर्थः, दीहरा—दीर्घं वैर बड्ढिअ—वैरं वर्द्धितं, कर्णे युध्यमाने सतीति[ति] शेषः ॥ (E).

१८३ । यथा ॥ गअ इति ॥ कश्चिद्युद्धं वर्णयति । गजा गजै-

अथ त्रिभंगीच्छंदः। (D).

पढमं दह रहणं[1] अट्ठवि[2] रहणं
पुणु बसु[3]रहणं रसरहणं
अंते गुरु सोहइ महिअल[4] मोहइ
सिद्धि[5]सरो[6] हइ बरतरुणं।
जइ पलइ[7] पओहर[8] किमइ[9] मणोहर[10]
हणइ[11] कलेवर[12] तासु कई
तिभंगी[13]छंदं सुक्खा[14]णंदं
भणइ[15] फणिंदो[16] विमलमई॥ १९४[17]॥

---

मिलितासरणिराच्छादितस्तुरगास्तुरगैर्युध्यंते, रथा रथैर्मिलिताः धरणिः पीडिता आत्मीयः परो न बुध्यते। बलान्यैकीभूया-गतानि पत्तयो धावंति कंपंते गिरिवरशिखराणि, उच्छलति सागरो दीनाः कातरा वैरिणो वृद्धा दिवसाः॥ इति हरिगीतं छंदः॥ (G).

---

१९४। १ रणं (B). २ चहुव (A & E), चहवि (B), dropt in (C), र too many in (D). ३ Dropt in (B), रह बरणं (D). ४ तिरचव (D), तिजचव (F). ५ सिद्ध (D, E & F). ६ सुरा (E & F). ७ चर (B). ८ पचोहर (B & C). ९ किमच (A). १० मणोहर (B & C), चोहर (E). ११ हरइ (D), करइ (F). १२ कलेवर (B & C). १३ तिभंगी (B & C), तिभंगी (F). १४ जकिरण (D), जचणा (F). १५ भण (B). १६ भणीन्दं (B). १७ ७५ (A), ९३ (F).

१९४। अथ त्रिभङ्गी। प्रथमं दशसु रहणं, अष्टस्वपि रहणं, पुनर्व्वसुरहणं रसेषु रहणम् अंते गुरुः शोभते, महि[री]तलं मोहयति सिद्धैः सरो भवति वरतर[रु]णं। यदि पतति पयोधरः किमिदं मनोहरं हन्ति कलेवरं तस्य कवेः त्रिभङ्गीच्छन्दः सुखानन्दं भणति फणीन्द्रो विमलमतिः॥ दशसु मात्रासु रहणं विश्रामः, एवमग्रेऽपि, इत्यत्र द्वात्रिंशन्मात्रः पादो भवति। अन्तिमो गुरुरपि तदन्तःपाती, सिद्धैर्ब्रह्मादिसिद्धैरिव[वर]तरुणं सरो भवति छन्दसो विशेषणम्। अत्र जगणो न देय इति। सुखेन दुःखासंभेदेनानन्दयति इति सुखानन्दम्। अत्र सर्व्वेऽपि चतुष्कलाः कार्य्या इति सम्प्रदायः। (C).

१९४। अथ त्रिभंगीनामकं वृत्तं लक्षयति पढममिति। पढमं — प्रथममादौ दह — दशसु मात्रास्विति शेषः, अग्रेऽपि यथा-योग्यं योजनीयं, रहणं — विश्रामः, ततः अट्ठह — अष्टसु मात्रा-स्वित्यर्थः विश्रामः, ततः रसरहणं — रसेषु षट्सु तथाच रस-संख्योपलक्षितासु षट्सु मात्रासु इत्यर्थः रहणं — विश्रामः, एवं द्वात्रिंशन्मात्राः प्रतिचरणं पतंती[ति] शेषः, अंते — पदांते गुरुः सोहइ — शोभते, कर्त्तव्यासु द्वात्रिंशन्मात्रासु अंतिममात्राद्वयमेक-गुरुस्वरूपं कार्यमित्यर्थः, तत् तिभ्भंगीछंदं — त्रिभंगीछंदः तिळ-वण मोहइ — त्रिभुवनं मोहयति, महि अल इति पाठे महीतलमित्यर्थः, अस्मै सिद्धः वरतरुणं — तरुणवरः लोकश्चेत्यर्थः सराहइ — श्लाघते। अथ यदि पओहर — पयोधरः मध्यगुरुर्जगण इत्यर्थः पडइ — पतति, तदा किमइ मणोहर — किमपि मनो-

जहा, सिर किज्जिअ[1] गंगं गोरि अधंगं
हणिअ अणंगं पुर दहणं[2]
किअ फणिवइ[3] हारं तिहुअण[4] सारं
वंदिअ छारं रिउ महणं[5]।
सुरसेविअ चरणं मुणिगण[6] सरणं
भवभअ[7] हरणं सूलधरं[8]
साणंदिअ[9] वअणं सुंदर णअणं[10]
गिरिवर सअणं[11] णमह हरं॥

१९५[12]॥ चिभंगी। (A, B, C & F).

---

हरं न भवतीति शेषः, किंतु येन तच्छंदसा कवित्वं क्रियते तास्तु कई—तस्य कवेः कलेवरं शरीरं हणइ—हंति, इति विमलमई—विमलमतिः, अणिआणंदं—अनितानंदः, कचि-सुच्छाणंदं इति पाठः सुखी आनंदीत्यर्थः, फणिंदो—फणींद्रः पिंगलः भणइ—भणति। अथ चतुर्मात्रिका अष्टौ गणाः प्रति-चरणं देयाः, तेष्वेवांतिमो गणो गुर्वंतः कर्तव्यः, पूर्वोक्तमात्रासु विश्रामः कर्तव्य इति फलितार्थः। (E).

---

१९५। १ किज्जइ (C), किज्जिअ (D). २ दहणं (B). ३ फणिवति (B), फणिवर (D). ४ तिहुवण (E). ५ महण (B & C). ६ मुणिगण (D & F). ७ भव भअ (A). ८ सूलधरं (B & C), घणधरं (E). ९ साणंदिअ (F). १० णअण (B). ११ सअणं (A & B), dropt in (C). १२ ७५ (A), ६६ (F).

१९४। दुर्मिलामाह [त्रिभंगीमाह] ॥ पढमं इति ॥ प्रथमं दशविरतिरष्टस्वपि विरतिः पुनर्वसुविरतिः, अंते गुरुः शोभते, त्रिभुवनं मोहयति सिद्धाः श्लाघयंति वरतरुणम्। यदि पतति पयोधरः किमपि मनोहरो हरति कलेवरं तस्य—[तस्य] कवेः, त्रिभंगीच्छंदो जनितानंदं भणति फणींद्रो विमलमतिः ॥ वसवोऽष्टौ, रसाः षट्, यदीति जगणः कविनाशकः, तस्मान्न कार्य इति भावः ॥ ९४ ॥ (G).

१९५। उदाहरति। शिरःकृत[गंगं] गौर्यर्द्धांगं हतानङ्गं पुरदहनं कृतफणिपतिहारं त्रिभुवनसारं वन्दितभस्मानं रिपुदहनं। सुरसेवितचरणं मुनिगणशरणं भवभयहरणं शूलधरं सानन्दितवदनं सुन्दरनयनं गिरिवरशयनं नमत हरम् ॥ वंदित इति तिलकीकृतभस्मानमित्यर्थः। (C).

१९५। अथ त्रिभंगीमुदाहरति सिर किज्जिअ इति। शिरःकृतगंगं गौर्यर्द्धांगं हतानंगं त्रि[?]पुर[द]हनं कृतफणिपतिहारं त्रिभुवनसारं वंदितभस्मानं रिपुप्र[?]मथनं। सुरसेवितचरणं मुनिगणशरणं भवभयहरं त्रिशु[शू]लधरं, सानंदितवदनं सुंदरनयनं गिरिवरशयनं नमत हरम् ॥ (E).

१९५। यथा ॥ सिरेति। शिरःकृतगंगं गौर्यर्द्धांगं हतानंगं पुरदहनं कृतफणिपतिहारं त्रिभुवनसारं वंदितभस्मानं रिपुमथनं। सुरसेवितचरणं मुनिजनशरणं भवभयहरणं शूलधरम्, सानंदितवदनं सुंदरनयनं गिरिवरशयनं नमत हरम् ॥ ९५ ॥ इति त्रिभंगी ॥ (G).

अथ दुर्म्मिलाच्छंदः। (D).

तीस दुइ[1] मत्ते[2] एरिसं[3] जुत्ते[4]
बुहअण राअ[5] भणंति[6] णरा
विसम तिअ[7] ठामहि[8] एरिस[9] भाअहि[10]
पअ पअ दीसइ[11] कण्ण धरा[12]।
ता[13] दह[14] पढमं वे[15] अट्ठ ट्ठाअं[16]
तीअ[17] चउद्दह[17] किअ[18] णिलओ
जो एरिसि[19] छंदे तिहुअण बंदे
सो जण[20] बुज्झउ[21] दुम्मिलओ॥१८६[22]॥

१८६। द्वात्रिंशन्मात्राभिरेतादृशीभिर्युक्ता बुधजनराज वदन्ति नराः, विश्रामस्त्रिषु स्थानेषु एतादृशभाग: पदे पदे दृश्यते कर्ण-स्थ। तत् दशसु रहणं प्रथममेव, अष्टसु द्वितीय एव, चतुर्दशसु

१८६। १ दु (A, D & E). २ मत्तह (D), मत्तहि (F). ३ एरिसि (A, C & F), एरसि (B), परिसं (D & E). ४ जुत्तह (D), जुत्तहि (F). ५ राउ (A, B & C). ६ भणंति (A), भणन्ति (B), भरन्ति (C), भणइ (F). ७ विसमं तिअ (E & F). ८ ठावहि (A), थाइ (B & C), ठाएहि (D), ठावहि (E). ९ एरिसि (B & C), दिहि (F). १० भावहिँ (A), भावइ (B & C), भाएहिँ (D), भाइ (F). ११ दीसहिँ (D). १२ धरा (A, D & F). १३ जा (E). १४ दहवइ (C). १५ वे (A & B), व (C). १६ अट्ठ दीअ वे (A), dropt in (B), अट्ठ दीअ (C), अठ ठाअ तहँ (D & F). १७ Transposed in (B & C), चोद्दह तीअहिँ (D), चोद्दह तीअं (E), dropt in (F). १८ किअ (A & C). १९ एरिस (A & E). २० जंण (A), जइ (B & C). २१ बुज्झइ (A, B & C), बुज्झउ (D). २२ ८० (A), ९१ (F).

तृतीये कृतनिलयः, यत्र एतादृशच्छन्दस्त्रिभुवनवन्द्यः[न्द्यं] स तत्] यदि बुध्यते दुर्मिलकं॥ एतादृशैर्भिस्त्रिभङ्गुरालयवनगुम्फाभिर्नेन जनगणव्युदासः। बुधजनराजेति सम्बोधनं। चरन्ति वदन्ति, एतादृशभागैर्वक्ष्यमाणभागैः, कर्ण एव अष्टमं स्थानं यस्य, तेन कुसुमं लभ्यते, तेन गुरुरायाति, तेन चान्ते गुरुरिति फलितार्थः। गुरु-गणान्तर्गत इति बोध्यं, विश्रामस्थानं दर्शयति तदिति, दशसु मात्रासु, एवमग्रेऽपि कृतविश्रामः। (C).

१९६। अथ दुर्मिलां लक्षयति, तीस दुइ मत्त इति। हे नराः एतत् तीस दुइ मत्ते—द्वात्रिंशन्मात्राभिः परिसंजुत्ते—परिसंयुक्ते यत्र च एरिस भात्रहि—एतादृशभागैः एतादृशैः अनुपदमे[व] वक्ष्यमाणैः भागैः कर्णाग्रैरित्यर्थः, तिन्न ठामहि—त्रिषु स्थानेषु विरमं—विश्रामः दीसइ—दृश्यते, यत्र च पत्र पत्र—पादे पादे कत्र धरा—कर्णाष्टकं कर्णौ द्विगुरुको गणस्तस्य अष्टकं स्थापन-मित्यर्थः, दृश्यते इति पूर्वेणैवान्वयः। कुत्र स्थानत्रये विश्रामो दृश्यते इत्यत आह पढममिति। यत्र पढमं—प्रथमं दह—दशसु मात्रास्वित्यर्थः णिलयो—निलयः विश्रामः इति यावत् किअ—[कृत]त इदं चाग्रेऽपि बोध्यं, बे—द्वितीयः अट्ठ ठाअं—अष्टमस्थाने अष्टसु मात्रास्वित्यर्थः निलयः कृत इति पूर्वानुषंगः, तीअं—तृतीयः चउदह—चतुर्दशसु मात्रास्वित्यर्थः निलयः कृतः, जो एरिसं छंदे—यत् एतादृशं छंदस्त्रिभुवनवंद्यं तत् न जनाः जा[णी]त दुर्मिलकम् इति बुधजनराजः पिंगलः भणति—भणति॥ (E).

दह[1] वसु चउदह[2] बिरइ करु बिसम कस्रगण देहु[3] ।
अंतर बिप्प पइक्क गण[4] दुम्मिल छंद कहेहु[5] ॥ १९७[6] ॥

दोहा ।*

१९६ । [दुर्मिलामाह] तीसेति ॥ त्रिंशद्भिर्द्वाभ्यां परिसंयुक्तं बुधजनराजो भणति नराः, विश्रामस्त्रिषु स्थानेषु एतादृशं भाति पदे पदे दृश्यते कर्णधरः । तत् दशसु प्रथमो द्वितीयोऽष्टमे स्थाने तथा तृतीयः कृतनिश्चये, यदेतादृशं छंदस्त्रिभुवनवंदितं तज्जनो बुध्यतु[तां] दुर्मिलां ॥ द्वात्रिंशन्मात्रा[भि]रित्यर्थः, कर्णधरो द्विगुरुः, निश्चयेऽवसाने ॥ ९६ ॥ (G).

१९७ । अथैनमेवार्थं दोहावृत्तेन स्पष्टयति दहेति । दशसु वसु—अष्टसु चतुर्दशसु मात्रास्विति शेषः बिरइ करु—विरतिं कुरु विषम—विषमे स्थाने कस्रगण देहु—कर्णगणं देहि । पद-मध्ये विषमे स्थाने यथाशक्यं द्विगुरुकं गणं देहीत्यर्थः । अंतर—मध्ये बिप्प पइक्क—विप्रं चतुर्लघुकं गणं पदातिं सामान्यचतुष्कलं भण दुर्मिलाच्छंदः कथय ॥ अत्र प्रतिचरणं विषमस्थाने यथाशक्यं प्राचुर्येण कर्णो देयः समे चेत्पतति तदा न बाधकमिति द्रष्टव्यम् । (E).

१९७ । १ दह (F). २ चौदह (F). ३ देहा (D), देह (F). ४ गण (A), गन (D & E). ५ कहेउ (A), कहेह (D & F). ६ ८८ (A), ९० (F).
* This is not found in (B & C).—Ed.

जहा, जे[१] किज्जिअ धाला जित्तु[२] णिवाला[३]
भोट्टंता[४] पिट्टंत[५] चले
भंजाविअ[६] चीणा दप्पहि हीणा
लोहावल[७] हाकंद पले ।
ओड्डा[८] उड्डाविअ[९] कित्ती[१०] पाविअ
मोलिअ[११] मालव[१२] राअ[१३] वले[१४]
तेलंगा भग्गिअ[१५] पुणवि[१६] ण लग्गिअ[१७]
कासीराआ[१८] जखण चले ॥
१९८[१९] ॥ दुम्मिला[२०] । (A).

---

१९७ । दोहेन[द्वया] प्रकारांतरमाह ॥ दहेति ॥ दग्रसु वसुषु चतुर्दग्रसु विरतिं कुरु, विश्रामे कर्णगणान् देहि । अंतरा विप्रं पदातिगणं दुर्मिलां छंदः कथय ॥ वसवोऽष्टौ, कर्णो द्विगुरुः, विप्रश्चतुर्लघुः, पदातिः मात्राचतुष्टयरूपः ॥ ९७ ॥ (G).

१९८ । उदाहरति । ये कृतधाटिका जितनेपाला भोटान्नाः

---

१९८ । १ जेर (D), जर (F). २ जिणु (A), जिणि (C). ३ णेपाला (A, B, C & E). ४ भोडंता (E & F). ५ पिट्ट (C). ६ भञ्जाविअ (A), भञ्जारिअ (D), जंभारिअ (F). ७ लोहावर (A). ८ ओड्डा (B), ओड्डर (D). ९ ओड्डाविअ (A), ओड्डारअ (B). १० कीत्ती (B & C). ११ Dropt in (B & F). १२ माला (D), मल (F). १३ राउ (C & F), रउ (D). १४ कुले (C & E). १५ भंग्गा (A). १६ पुणउ (A & B), पणरि (D), पउणि (E), पउलि (F). १७ लग्गा (A). १८ कुरवरराअ (B), कासीसरराअ (C), कासीसररअ (D & F), कासीसरराआ (E). १९ ८९ (A), ९८ (F). २० दुर्म्मिलक (B & C), दुम्मिलअ (F).

अथ हीरः। (D).

णाउ[1] पभण तिणि[2] छगण अंत करहि[3] जोहलं
हार[4] ठविअ जंपु[5] सुपिअ[6] विप्प गणहि सब्बलं।
तिणि[7] धरहि[8] वेवि करहि[9] मत्त पअहि[10] लेक्खए
कोइ[11] जणइ[12] दप्प[13] भणइ हीर सुकइ[14] पेक्खए[15] ॥
१९९[16] ॥

---

पीड्यमानास्त्वलन्ति भग्नचीना दर्पहीना: लौहयलेन[?] हाक्रन्द:। ओड्रान् ओज्झरित्वा कीर्त्तिः प्राप्ता मोटितो मालवराज: तेलङ्गा भग्ना: पुनर्न लग्ना: काशीश्वरराजो यदा चलति ॥ हतधाटिका: हतश्रेणीका ये नेपालास्ते जिता इत्यर्थ:। (C).

१९८। अथ दुर्मिलामुदाहरति जे किज्जिअ इति। येन हता धाटी पाविअ कित्ती—प्राप्ता कीर्त्तिः स काशीश्वरराज: जअण—यस्मिन् चणे, जित: नेपाल: भोटांता: खदेहं ताडयन्त-चलिता:, दर्पहीना: चीना: भग्नीहता: लोहावलेहाखकन्दु: पतित:। ओड्डावित: अंतरिचं प्रापित: ओड्ड:, मोटितं मालवराजकुलं, तैलंगा: पलायिता: परावृत्य नागता: ॥ (E).

---

१९९। १ णाय (F). २ तिणि (A). ३ करि (A). ४ हाय (A). ५ जाहु (A), जप्पु (B), जम्प (C), पुणवि (D), पुणवि (F). ६ सुपिअ (C). ७ तिणु (B). ८ धरहि (A), धरह (B & C). ९ करह (B & C). १० पअह (B & C), पंत रअह (D & F). ११ कोप (A), कमण (D & E). १२ जणह (E). ११ & १२ after दप्प भणइ (C). १३ दप्प (A, B & C). १४ सुकवि (F). १५ पेक्खअ (A), देक्खए (B & C), लेक्खए (E). १६ ९० (A), १०० (F).

१९८। यथा॥ जईति॥ यत् ज्ञतधारा जिता नृपाणाः भोटांताः पीडंत[मानाः]पाजिताः, भग्नालीना दर्पेण हीना ओडावले हाक्रंदः पतितः। उत्कलदेश उड्डायितः कीर्त्तिः प्राप्ता मालवराजबले, तैलिंगा भग्ना बङ्गदलबग्राः कामीश्वरराजो यत्‌पले पतितः॥ ९८॥ इति दुर्मिला॥ (G).

१९९। अथ हीरकच्छन्दः। नागः प्रभणति त्रीन् ज्ञगणान् अन्ते कुरु ओहलं हारं धृत्वा जल्प सुप्रियं विप्रगणेन प्रबलं। वयं धृत्वा हयं कुरु मात्राः पदे लिख्यन्तां, सर्पो भणति को जानाति हीरं सुकविर्दृश्यते॥ ज्ञगणः षट्कलगणः, ओहलो मध्यलघुः पञ्चकलः। षट्कले विशेषमाह हारेत्यादिना, हारो गुरुः, सुप्रियो दिलघुः, विप्रगणश्चतुर्लघुः आवश्यकः, हारसुप्रिययोर्वैकल्पिकमुपादानं, तथा चादिगुरुः सर्व्वलघुर्वा षट्कल इति पर्य्यवसानं, तदिदमुक्तं वयमित्यादिना। अयमर्थः—हारसुप्रियविप्राणामेवात्र प्रवेशः, तत्र च हारविप्र-सुप्रियविप्रयोर्यथेच्छमुपादानं, यदा वयं हयमित्यक्षरस्य वामगतिक्रमेण वयोविंशत्यङ्क आयातः, तथा च वयोविंशतिमात्राः पदे क्रियन्तामित्यर्थः। कीदृशो जनो गर्व्वेण वदति अभिभाष्यैवं वदति, न दृश्यते तादृशो दुर्मिलक [?] इत्यर्थः॥ (C).

१९९। अथ हीरनामकवृत्तं लक्षयति, णाउ पभणेति। हे सुप्रिय प्रिय आदौ तिन्नि ज्ञगण—त्रीन् ज्ञगणान् षट्कलगणानित्यर्थः जंपु—जल्प कथयेत्यर्थः, अंते—षट्कलत्रयांते ओहलं—ओङ्कारं गणमिति यावत् करहि—कुरुष्व, तिन्नि धरहि

हार सुपिअ भण[1] विप्पगण तीअ[2] भिअ[3] सरीर।
जोहल अंते संठवहु तेइस मत्तअ[4] हीर[5]॥ २००[6]॥ दोहा।

वेवि करहि—चीन् स्थापय द्वौ कुरुष्व, एवं पअहि—पादेषु मत्त—मात्राः लेक्खए—लेखय, अंकानां वामतो गत्या चीन् द्वौ मिलित्वा चयोविंशतिर्मात्राः प्रतिचरणं स्थापयेत्यर्थः। एत[?]-हार ठविअ विप्प ग[ण]हि सब्बलं—हारं गुरुं संस्थाप्य विप्रगणै-श्चतुर्लघुकगणैः सबलं प्रचुरं हीर—हीरं पेक्खए—प्रेक्षस्व, एवं तत् सुकविः दप्पण [भण]ति, एतत् कमण जाणइ—कः जानाति न कोऽपीत्यर्थः, इति नागः प्रभणति॥ अथ चीन् षट्कलान् देहीत्युक्त्या षट्कलस्य चयोदशापि भेदाः प्राप्ताः, तच द्वादशतम-[Vide p. 22—Ed.] एव भेदो वारचयं देयो[यो] नान्य इति ज्ञापयितुं हारं संस्थाप्य, विप्रगणैः सबलमिति छंदोविशेषणमिति द्रष्टव्यम्। उक्तविधषट्कलानंतरं च यच रगणः प्रतिचरणं पतति तत् हीरनामकं वृत्तमिति फलितार्थः। (E).

१९९। पाअ इति॥ नागो भणति चीन् षट्कलानंते कुरु जोहलं, जोहलो रगणः। षट्कलकरणे प्रकारमाह, हारेति॥ हारः स्थाप्यः पुनरपि भो सुप्रिय विप्रगणेन सबलः। द्वौ चीन् धारय कुरु, अंते रगणो लेख्यते, कोऽपि जानाति दर्पणं भणति

२००। १ भण (A, B & C). २ तिअ विअ (E), तीरे (F). ३ भिअ (A), भिण (E). ४ मत्तह (D). ५ हीर (B & C), हिर (E), dropt in (F). ६ ९१ (A), १ (F).

जहा, धिक्क दलण[1] थोंग[2] दलण[3] तक्क[4] दलण[5] रिंगए[6]
णं ण णु कट[7] दिंग दुकट[8] रंग चल तुरंगए[9] ।
धूलि धवल छक्क सबल[10] पक्खि[11] पबल पत्तिए[12]
कण चलइ कुम्म ललइ भुम्मि[13] भरइ कित्तिए[14] ॥
२०१[15] ॥ हीर । (A, B & C).

हीरकं सुकविः प्रेचते ॥ हारो गुरुर्विप्रश्चतुर्लघुस्तेन प्रवक्ो मिश्रः, तेन गुरु-लघुचतुष्टयरूपः षट्कलः कार्य इत्यर्थः ॥ अंकानां वामतो गत्या चयोविंशतिर्मात्रा इत्यर्थः ॥ (G).

२०० । तदेव स्पष्टयति ॥ हारः सुप्रियो विप्रगणस्त्रिभिर्भिन्नं । ओहलमन्ते संस्थापय, चयोविंशतिमात्रकं हीरम् ॥ (C).

२०० । अथैनमेवार्थं दोहावृत्तेन प्रकटयति हारेति । हे सुप्रिय प्रिय्य पूर्वं हारं गुरुं ततः बिप्पगण — विप्रगणं चतुर्लघुकं गणं भण कथय, एवं तिम्न बिध — वारचयविधानेनेत्यर्थः भिन्न सरीर — भिन्नशरीरं भिन्नम् अन्यच्छंदोभ्यो विलक्षणं शरीरं यस्य तदित्यर्थः। अंते पादांते ओहलं — रगणं संठवज्ञ — स्थापय, एवं तेइस मत्त — चयोविंशतिमात्राकं हीरं हीरनामकं वृत्तं भवतीति शेषः ॥ (E).

२०१ । १, ३ & ५ दरल (B & C). २ थोंग (D). ३ दरव (D & F). ४ भक्ख (B & C). ५ तरव (D & F). ६ दिंगए (A), थोंगए (B & C), रिंगओ (E). ७ स कड (A), स स इ गद (D), ति कड (E). ८ धिंकड (A), धिंकड (B), थकड (C), दकड (D), दिकड (E). ९ तुरंगओ (E). १० दिग्ग सबल (A), सक्क सबल (C), जक्क सबल (D). ११ दरव (A), पेक्ख (B), देक्ख (C), बत्ति (D), पेक्खु (E). १२ परव बतिर (A). १३ भुवण (A), भुम्म (B & C). १४ कीत्तिए (C). १५ ८१ (A), १ (F).

## अथ जराहिरणा (D) [जलहरणम्] ।

पत्र[1] पढम पलइ जहिँ[2] सुणहि[3] कमल मुहि
दह वसु पुणु वसु[4] विरइ करे
सबपत्र मुणि दिअगणा[5] दिअ विरम[6] सगण
सिरि फणिवइ भण सुकइवरे[7] ।
दह तिगुण करहि[8] कल पुणवि[9] ठव[10] जुअल
इम परि परि ठवु[11] चउ चरणा
जइ पलइ[12] कवहु[13] गुरु कवहु[14] ण परिहरु[15]
बुहअण[16] मणहरु[17] जलहरणा[18] ॥ २०२[19] ॥

२०० । प्रकारांतरेणाह, हारेति ॥ हारं सुप्रियं भण विप्रगणं ततो ओहलमंते संस्थापय त्रयोदश[विंशति]मात्राः द्वि[?]-स्त्रिधा भिन्नशरीरः ॥ हारविप्रौ त्रिधा कार्यौ इत्यर्थः । ओहलो रगणः ॥ (G).

२०२। १ किच (E). २ पडइ जइ (B), पलइ जइ (C), पचठइ कलमहि
(D), पचठइ कलहि (F). ३ सुणइ (C), विचच (D), सुणहि (E), विकच (F).
४ रस (B), च (D). ५ कौच दिचवर (A), किच दिच दिच (B), किच दिच
मच (C). ६ पचच किच (A), परहि दिच (B), परइ किच (C), परहिच (E).
७ सुकविवरे (B & C). ८ करच (B & C). ९ पुणुवि (C). १० ठवि (A),
धर (D & F). ११ एम परि ठव (B, C & D), एम परि ठवच (E), एम परि
ठवच (F), र short here. १२ परइ (D). १३ कडहि (B & C).
१४ कवहि (A). १५ परिहर (D). १६ बुहिचच (A). १७ मणुहर (D).
१८ जचहरच (B, D & F). १९ ९२ (A), २ (F).

२०१ । उदाहरति । धिक्क दरक्कमित्यादिकमव्यक्तं शीघ्रगते-रनुकरणं, दौव्वए [घोव्वए] — धावति यद्वीजगतिविशेषाणामनु-करणं, रङ्गेण क्रीडया चरति तुरङ्गः । धूलिभिर्धवला चक्केन शब्दविशेषेण प्रबलाः प्रेक्ष्यन्ते प्रबलपदातयः, कर्णंचलति कूर्मंचलति भुवनं ध्रियते कीर्त्या ॥ (C).

२०१ । अथ चौरमुदाहरति धिक्क दलणेति । इदं चतुरंग-गतिविशेषानुकरणं, तथाच धिक्क दलण थोंग दलणेत्यनुकृत्य रंग — रंगे संग्रामे चलंति, रिंगन्नो — खुरलीं कुर्वंतः, तुरंगाः । धूलि-धवलाः सचशब्दाः प्रबलाः पत्तयः प्रेक्ष्यंते, यदा कर्णश्चलति तदा कूर्मः चल[य]ति भूमिर्भरति कीर्त्या ॥ (E).

२०१ । यथा ॥ धिक्केति ॥ धिक्केति घोटकगतिशब्दानुकरणं, रिंगंते[ति] मं नेत्यनुकरणं, रंगे चलंति तुरंगाः । धूल्या धवला चक्केन सबलाः पत्तिवत्प्रबलाः पदातयः, कर्णे चलति कूर्मो चल[य]ति भूमिर्भरति कीर्त्या ॥ २ ॥ इति चौरकम् ॥ (G).

२०२ । अथ जलधरच्छन्दः । पदे प्रथमे पतति यत्र शृणु कमलमुखि द्रश-वसु-रस-वसु-विरतिकरः, सर्व्वः कार्य्यः द्विज-गणस्तत्परतः शतसगणः, श्रीफणिपतिर्भणति सुकविवरः । त्रिगुणं दशाङ्कं कला कलाः पुनरपि स्थापय युगलं, एवं परं परिस्थापय चतुश्चरणान्, यदि पतति कदापि गुरुः कदापि न परिहर बुधजनमनोहरणं जलधरम् ॥ शृणु कमलमुखि यत्र सर्व्वो द्विजगणः प्रथमे पतति, कीदृशः, परतः शतसगणः, किञ्च द्रश-वसु-रस-वसु-विरतिकरः ॥ यद्यत्र कदाचिद्गुरुः पतति तदा

कामावआरेण[1] अद्धेण पाएण।
मत्ता दहा सुद्ध मंथाण सो बुद्ध[2] ॥ ५० ॥
जहा, राआ[3] जहा लुद्ध पण्डीअ[4] हो मुद्ध।
कित्ती[5] करे रक्ख[6] सो बाद[7] उप्पेक्ख[8] ॥ ५१ ॥
मंथाण।

५०-५१। कामावतारस्यार्द्धेन पादेन। मात्रा दश शुद्धाः मन्थानं बुध्यस्व ॥ सारङ्गरूपच्छन्दः कामा[व]तार इत्यपि नाम, तच्च तगणस्य[च]तुष्टयात्मकं, तस्यार्द्धं तगणद्वयात्मकं, तथाचाच तगणद्वयात्मकः पाद इति पर्य्यवस्यति, तगणस्य पञ्चकलात्मकत्वाच्च मात्रा दश भवन्ति तन्म[न्था]नच्छन्द इत्युक्तम्। उदाहरति। राजा यत्र लुब्धः पण्डितो भवति मुग्धः। कीर्त्तिं करे रक्ष तद्राज्यमुपेक्षस्व ॥ मुग्धो मूढः हिताहितज्ञानशून्यः। (C).

५०-५१। अथ पञ्चचरणस्य वृत्तस्य सप्तचिंशत्तमं भेदं मंथाननामकं वृत्तं लक्षयति, कामेति। कामावआरस्स — कामावतारस्य तगणचतुष्टयनिर्मितद्वादशाक्षरचरणस्य सारंगरूपकापरनाम-इत्यर्थः अद्धेण पाएण — अर्द्धेन पादेन अंतलघुतगणद्वयेनेत्यर्थः। सुद्ध दहा मत्ता — शुद्धा दश मात्राः यत्र पञ्चचरणे वृत्ते प्रति-चरणं पतंति, सो — सः मंथाण — मंथानः बुज्झ — ज्ञातव्यः ॥ अथवा अवहट्टभाषायां लिंगविभक्तिवचनव्यत्यासे दोषाभावात् सो — तं

५०—५१। १ कामावआरस्स (E & F). २ बुज्झ (B), बुज्झ (E), बुज्झ (F). ३ राजा (F). ४ पंडित (A), पण्डित (C). ५ कीत्ती (C). ६ रक्ख (A), रक्ख (B), रच (C). ७ बाद (B), राज्ज (C). ८ उपेक्ख (F).

खडा[१] जस्स बद्धो[२] भुअंगा[३] पअद्धो[४] ।
पआ पाअ चारी कही संखणारी[५] ॥ ५२ ॥
जहा, गुणा[६] जस्स सुद्धा बहू[७] रूअमुद्धा ।
घरे वित्त जग्गा[८] मही तासु[९] सग्गा[१०] ॥ ५३ ॥
संखणारी ।

---

मंथाण — मंथानं बुध्यस्व — विद्धीति वा व्याख्येयं, तगणद्वयचरणे मंथान इति तु निष्कृष्टार्थः । वर्णवृत्ते चाच मात्राकथनं पद्यपूरणार्थमेव ।१८। मंथानमुदाहरति, राआ इति । जहा — यथ राआ — राजा लुद्ध — लुब्धः पंडीअ — हे पंडित मुद्ध — मुग्धः हो — भव । हो इति देशीयं भवेत्यर्थे प्रसिद्धं । कित्ती — कीर्त्तिं करे रक्ख — रक्षस्व, सो वाद — [तं वादं] उप्पेक्ख — उपेक्षस्व ॥ यत्र राजा कृपणस्तत्र विवदंतं[दमानं] जनमुपेक्ष्य पण्डितेनापि त्वया निजकीर्त्तिमिच्छता मूर्खेण भवितव्यमिति कस्यचित् पण्डितं प्रत्युपदेशः । मंथानो निवृत्तः ।१९। (E).

५०-५१ । कामेति । कामावतारस्यार्द्धेन पादेन । मात्रा दश शुद्धाः मंथानः स बोध्यः ॥ कामेति तगणद्वयं पाद इत्यर्थः । [यथा] राजा यत्र लुब्धः पंडित भव मुग्धः । कीर्त्तिं करे रक्ष तं वादम् उपेक्षस्व ॥ (G).

---

५२—५३ । १ रघा (B), खचा (C). २ छधा (A), बधा (C). ३ भुजंगा (E). ४ पचडा (A & C). ५ सक्खणारी (A & C). ६ गुणा (A). ७ Dropt in (B), बज (F). ८ जम्मे (A), जम्मा (B). ९ तस्स (A & B), तास्स (E). १० सग्गे (A).

५२-५३। षड्वर्णसङ्गं भुजङ्गप्रयातार्द्धम्। आद्यलघुस्तारः पादाः कथ्यते ग्रन्थिकारी॥ भुजङ्गो भुजङ्गप्रयातं। तथाच भुजङ्गप्रयात-पादार्द्धं षड्वर्णं ग्रन्थिकारी कथ्यते, ताद्रूप्य एव अत्र चाद्यलघुस्तार-इत्यर्थः। भुजङ्गप्रयातं यगणचतुष्टयेन भवति, तदर्द्धं यगणद्वयमिति बोध्यम्। उदाहरति। गुणा यस्य शुद्धा वधूः रूपमुग्धा। गृहं वित्तजायत् सखी तस्य स्वर्गः॥ रूपमुग्धा अतिशयरूपवती, जायदित्यनेन कदाचिन्न्यूनता नास्तीत्यर्थः। घरा वित्त जग्गा इति पाठे गृहा जायदित्ता इत्यर्थः। (C).

५२-५३। अथ षड्क्षरचरणस्य वृत्तस्य दशमं भेदं ग्रंथिकारी-नामकं वृत्तं लक्षयति, छक्केति। छक्का षट्‌ अङ्को—षड्वर्णसङ्गा भुअंगा पअद्धो—भुजंगप्रयातार्द्धं। पअ—प्राप्ता, आदिलघुयगण-द्वयनिर्मितैकैकचरणेत्यर्थः, पाअ चारी—पादचतुष्का ग्रंथिकारी कही—कथिता॥ अत्र पाअ चारीति पदं गणपूरणार्थमनवाप्ये षोड़शचरणस्यापि भुजंगप्रयातस्य वक्ष्यमाणत्वात्तदर्द्धाष्टचरणमिदमर्द्ध-मिति द्रष्टव्यम्। आदिलघुयगणद्वयचरणा ग्रंथिकारीति तु समुदा-यार्थः।२०। ग्रंथिकारीमुदाहरति, गुणेति। जस्स—यस्य गुणाः [शुद्धाः] दोषासंवलिताः वहू—वधूः रूअसुद्धा—रूपमुग्धा अतिसुंदरीति यावत्। घरे—गृहे वित्त—वित्तं धनमिति यावत् जग्गा—जायत् सदा परिपूर्णमिति यावत्, तासु—तस्य सखी पृथ्वी सग्गा—स्वर्गः॥ यस्यैतद्वयं स भूम्यावपि स्वर्गसुखमनुभवतीत्यर्थः। घरा वित्त जग्गेति क्वचित्पाठः, तत्र गृहा जायदित्ता इति प्राकृते पूर्वनिपातानियमाद्व्याख्येयम्। ग्रंथिकारी निवृत्ता।२१। (E).

धअं सर बीअ मणीगुण तीअ[1]।
दई[2] लहु अंत स मालइ कंत ॥ ५४ ॥

जहा, करा पसरंत बहू गुणवंत[3]।
पफुल्लिअ कुंद[4] उगो[5] सहि चंद ॥ ५५ ॥ मालती।

५२-५३। खड़ेति। षड्वर्णबद्धा भुजंगप्रयातार्द्धा। प्राप्ता पादचतुष्टयं कथ्यतां शंखनारी ॥ यगणद्वयं कार्यमित्यर्थः। यथा। गुणा यस्य शुद्धा वधूः रूपमुग्धा। घरे [गृहे] वित्तं आयत् मही तस्य स्वर्गः ॥ (G).

५४-५५। ध्वजः शरौ द्वौ मणिगुणस्तृतीये। स्थितो लघुरन्ते सा मालती कान्ता ॥ ध्वज आदिलघुस्त्रिकलः, शरो लघुर्म्मणिगुणो हारः, तेनान्ते गुरुर्लघुर्लभ्यते। कान्ता कमनीया, मालती छन्दो-नाम। उदाहरति। कराः प्रसरन्ति बहुगुणवन्तः। प्रफुल्लितं कुन्दं उद्यतः सखि चन्द्रः ॥ (C).

५४-५५। अथ षडक्षरचरणवृत्तस्य षट्चत्वारिंशत्तमं भेदं मालतीनामकं वृत्तं लक्षयति, धअमिति। यत्र षडक्षरचरणे वृत्ते प्रथमं धअं—ध्वजः लघ्वादिस्त्रिकलो गण इत्यर्थः द्वितीयस्थाने च सर बीअ—शरद्वयं लघुद्वयमित्यर्थः तीअ—तृतीये स्थाने इति शेषः लहु अंत—लघ्वंतः लघुरंते यस्य तादृश इत्यर्थः मणीगुण—मणीगुणः हारो गुरुरित्यर्थः दई—दीयते, इदं च यथायथं

५४—५५। १ मणीगुण कंत (E). २ रहे (A, B & C). ३ गुणमंत (A & C). ४ कुन्द (B). ५ उगू (A & C), उगो (B).

दिअवर[1] किअ भणहि[2] सुपिअ[3] ।
दमणअ गुणि[4] फणिवइ भणि[5] ॥ ५६ ॥
जहा, कमल णअणि अमिअ वअणि[6] ।
तरुणि घरणि[7] मिलइ सुपुणि[8] ॥ ५७ ॥ दमणक ।

---

योजनीयं, सा कंत — कांता सुंदरीति यावत् मालइ — मालती ॥ तन्मालतीनामकं वृत्तमित्यर्थः । केचित्तु कंत इति कांतासंबोधनपरतया व्याख्यायते । मालतीमुदाहरति, करेति । सहि — हे सखि बहु गुणवंत — बहुगुणवंतः प्रासादाह्लादकलाद्यनेकगुणयुक्ता इत्यर्थः करा — किरणाः पसरंत — प्रसरंति, कुंद — कुंदाः पफुल्लिअ — प्रफुल्लिताः यतः, अतः चंद — चन्द्रः उगो — उदित इति ज्ञायतइति शेषः ॥ मालती निवृत्ता । २२ । (E).

५४-५५ । धअमिति । ध्वजः शरद्वयं मणिगुणस्तृतीयः । दत्वा लघुमंते सा मालती कांता ॥ ध्वजो लघ्वादिस्त्रिकलः, मणिगुणो दीर्घः, शरो लघुः । लघुगुरू लघुद्वयं दीर्घो लघुरिति । यथा । कराः प्रसरंति बहुगुणवंतः । प्रफुल्लिताः कुंदाः उदितः सखि चंद्रः ॥ (G).

५६-५७ । द्विजवरं दत्वा भण सुप्रियम् । दमनकं गणय फणिपतिर्भणति ॥ द्विजवरश्चतुर्लघुः । उदाहरति । कमलनयना अमृतवदना । तरुणी गृहिणी मिलति सुपुण्येन ॥ (C).

---

५६—५७ । दिजवर (F). १ भणइ (A & C), भणमि (B). ३ सुपिय (E). ४ गुण (A & C), गणु (B). ५ भणु (B). ६ बदणि (C). ७ घरिणि (A, B & C). ८ सु पुणि (A), स पुणि (B). सुपुणि (E).

चारि हार किज्जइी[१] तिणि[२] गंध दिज्जइी[३]।
सत्त अक्खरा ठिआ सा समाणिआ पिआ॥५८॥
जहा, कुंजरा चलंतआ पव्वआ चलंतआ।
कुम्म पिट्ठि[४] कंपए[५] धूलि सूर झंपए[६]॥५९॥
समाणिआ[७]।

---

५६-५७। अथ षडक्षरचरणवृत्तस्य चतुःषष्टितममंतिमं भेदं दमनकनामकं वृत्तं लक्षयति। दिअवर — द्विजवरं चतुर्लघ्वात्मकं गणमिति यावत् किअ — कृत्वा, सु[सु]पिअ — सुप्रियं लघुद्वयात्मकं गणमिति यावत् भणहि — कथय। दमणअ गुणि — दमनकं गुणय जानीहीति यावत् इति फणिवइ — फणिपतिः भणि — भणति॥ न[गण]द्वययुक्तं दमनकनामकं वृत्तमिति फलितार्थः।२४। दमनकमुदाहरति, कमलेति। कमल णअणि — कमलनयना अमिअ वअणि — अमृतवचना। तरुणि — तरुणी घरणि — गृहिणी भार्येति यावत् सु[सु]पुणि — सुपुण्येन मिलइ — मिलति॥ मिलइ ज पुणीति क्वचित्पाठस्तत्र मिलति यदि पुनरित्यनंतरं तदा तां विहाय कुत्रापि न गमिष्यामीत्यध्याहृत्य व्याख्येयम्। दमनको निवृत्तः।२५। इति षडक्षरं वृत्तम्। (E).

५६-५७। दिअ इति। द्विजवरं कृत्वा अथ सुप्रियं। दमनकं

---

५८—५९। १ किज्जिए (E), किज्जिऐ (F). २ तिणि (A). ३ दिज्जिए (E). ४ पिट्ठ (B), पीठि (C). ५ कम्पिए (C). ६ झम्पिए (G). Last quadrant dropt in (B). ७ समाणिका (A & B).

जानीहि फणिपतिर्भणति ॥ द्विज[वर]श्चतुर्लघुः, सुप्रियो द्विलघुः, षड्लघवः । यथा । कमलनयना अमृतवचना । तरुणी गृहिणी मिलति सुपुण्येन ॥ (G).

५८-५९ । अथ सप्ताक्षरा । आदौ गुरुस्ततो लघुरेवं क्रमेण चत्वारो गुरवस्त्रयो लघवः पादे तिष्ठन्ति । * * * हारो गुरुर्गन्धो लघुः । उदाहरति । कुञ्जराश्चलन्ति पर्व्वताः पतन्ति । कूर्म्मपृष्ठं कम्पते धूलिभिः सूर्य्य आच्छाद्यते ॥ (C).

५८-५९ । अथ सप्ताक्षरचरणवृत्तस्याष्टाविंशत्यधिकशतं भेदाः भवंति, तत्र त्रिचत्वारिंशत्तमं भेदं समानिकानामकं वृत्तं लक्षयति, चारीति । यत्र सप्ताक्षरवृत्ते हार चारि—हारचतुष्टयं गुरुचतुष्टयमिति यावत् किज्जि[ही]—क्रियते तिण्णि—त्रयः गंध—गंधा लघव इति यावत् दिज्जिहि[ही]—दीयंते । अंतरा अंतरेणेति शेषः । एवं विधिना सत्त अक्खरा—सप्ताक्षराणि ठिआ—स्थितानि, सा समाणिआ—समानिका पिआ—प्रिया पिंगलस्येति शेषः ॥ प्रथमं गुरुस्ततो लघुः पुनर्गुरुः पुनर्लघुरेवं क्रमेण यत्र प्रतिचरणं सप्ताक्षराणि स्थाप्यंते सा समानिकेति समुदायार्थः । केचित्तु पिआ इति पदं प्रियासंबोधनपरतया वदंति । २१ ।

समानिकामुदाहरति, कुंजरा इति । पव्वआ—पर्व्वतान् चलंतआ—प्रेरयंतः कुंजरा—हस्ति[नः] चलंतआ—चलंति । कुम्म पिट्ठि—कूर्म्मपृष्ठं कंपए—कंपते धूलि—धूल्या सूर—सूर्य्यः झंपए—आच्छाद्यते ॥ श्रीरामचंद्रे प्रचलति सतीति शेषः । समानिका निवृत्ता । २० । (E).

भणउ सुवासउ[१] लहुसु विसेसउ[२]।
रइ चउ मत्तह भ लहइ अंतह[३] ॥ ६० ॥
जहा, गुरुजण भत्तउ[४] बहुगुण जुत्तउ[५]।
जसु जिअ[६] पुत्तउ सइ[७] पुणवंतउ[८] ॥ ६१ ॥ सुवास[९]।

---

५८-५९। अथ सप्ताक्षरमुष्णिक् छंदः। [चारि] हारेति। हारचतुष्टयं क्रियतां पयो गंधा दीयंताम्। सप्ताक्षरा स्थिता सा समानिका प्रिया॥ हारो गुरुः, गंधो लघुः। यथा। कुंजराश्चलंति पर्वताः पतंति। कूर्मपृष्ठं कंपते धूल्या सूर्य आच्छाद्यते॥ (G).

६०-६१। भणामि सुवासं लघु परि[सवि]शेषम्। रचयति चातुर्मासिकं भगणमन्ते॥ सविशेषलघुकथनात् चातुर्मासिको लघुः कथ्यते तदनन्तरं भगण इत्यर्थः। उदाहरति। गुरुजन-भक्ता वधूर्गुणयुक्ता। यस्य जीवन् पुत्रः स पुण्यवान्॥ तिअ पुत्तेति पाठे त्रिपुत्र इत्यर्थः। (C).

६०-६१। अथ सप्ताक्षरचरण-वृत्तस्यैकाशीत्युत्तर[वृत्तस्य द्वादशो-त्तर] शततमं [११२] भेदं सुवासकनामकं वृत्तं लक्षयति, भणेति। यत्र चउ मत्तह—चतस्रः मात्राः चतुरो लघून् इत्यर्थः। अत्र

---

६०—६१। १ सराषउ (A), सूवासउ (E). २ लहु गुरु सेसउ (A), लहु सविसेसउ (B), लहुअ विसेसउ (E). ३ भणइ चणणत्त (A), भ लहइ चन्तर (B), भणवि चन्तर (C). ४ गुरुजण जुत्तउ (A), गुरुयण भत्तउ (B). ५ Dropt in (B). ६ जसु तिच (A), जसु विच (B), जसु जिच (E). ७ सो (A), सउ (B) सवि (C). ८ पुणमत्तउ (A & C). पुणमन्तउ (B). ९ सरसा (A).

चरण गण बिप्प[1] पढम लइ थप्प।
जगण तसु अंत मुणहु[2] करहंच॥ ६२॥
जहा, जिबउ[3] जइ एह[4] तजउ[5] गइ देह[6]।
रमण जइ[7] सोइ बिरह जणु होइ[8]॥ ६३॥ करहंच[9]।

मात्राशब्दो लघुपरः। रइ — रचयित्वा अंतह — अंते चतुर्लघ्वंते इत्यर्थः, भ — भगणः आदिगुरुर्गण इति यावत् लहइ — लभ्यते, लहुसु[सु] बिसेसउ — लघुविशिष्टं तं सुवासउ — सु[सु]वासकं भणउ — भणत॥ सु[सु]वासकनामकं तद्वृत्तमित्यर्थः। अत्र लहुसु[सु] बिसेसउ इदं विशेषणं प्रथमस्थापितचतुर्मात्राणां लघुपरत्वलाभायेति बोध्यम्। द्विजवरभगणरचितचरणं सुवासकमिति फलितार्थः। २८।

सु[सु]वासकमुदाहरति, गुर्व्विति। गुरुजण भत्तउ — गुरुजनभक्ता गुणजुत्तउ — गुणयुक्ता जसु — यस्य बहु — वधूः भार्य्येति यावत् जिअ पुत्तउ — जीवत्पुत्रा सइ — स एव पुणवंत[उ] — पुण्यवान्॥ त्रैलोक्य इति शेषः। सुवासकं निवृत्तम्। २९। (E).

६०-६१। भणेति। भण्यतां सुवासकः लघुसुविशेषकः। रचय चतुर्मात्रिकाः भं लभते अंते॥ लघ्विति पूरणार्थम्। यथा। गुरुजनभक्ता वधूर्गुणयुक्ता। यस्य जीवत्पुत्रा स एव पुण्यवान्॥ (G).

६२-६३। चरणे गणं विप्रं प्रथमे नीत्वा स्थापय। जगणं तस्यान्ते

६२—६३। १ विप्प (A). २ भणिज्ज (A), भणउ (B), भणह (C). ३ जिबउं (A), जिबउं (C). ४ एउ (B). ५ तिजउ (B). ६ देउ (B). ७ जो (A). ८ बिरह जवि होइ (A), बिबिह जब जोइ (B), बिरह जिणु होइ (F). ९ करहंचौ (B & C).

अथ करहञ्चम् ॥ चरणे यदि प्रथमतो विप्रगणस्ततो जगणस्तत् करहञ्चं छन्दः। उदाहरति। जीवामि यदि एतम् त्यजामि गत्वा देहम्। रमणो यदि स एव विरहो न भवति ॥ गत्वा प्रयाग-मिति शेषः। विरहदग्धं यद्येतद्देहं त्यजामि तदा जीवामि, तदेव श्रेयःसाधनमिदन्तु जीवनं मरणमेव। (C).

१२-१३। अथ सप्ताचरचरणछन्दस्य पञ्चवतितमं भेदं करहंच-नामकं वृत्तं लक्षयति, चरणेति। पढम — प्रथमे चरणे विप्प — विप्रं चतुर्लघ्वात्मकमिति यावत् गण — गणं लइ — गृहीत्वा थप्प — स्थापयत। तसु — तस्य विप्रगणस्येति यावत् अंत — अन्ते जगण — मध्यगुरुं यच्च इति पूर्वेणान्वयः, करहंच — कर[हंचम्] एवं मुणह — जानीत ॥ करहंचनामकमेतद्वृत्तमित्यर्थः। अत्र प्रथमे इति द्वितीयादीनामुपलक्षकम्। करहंचमुदाहरति, जिवेति। एह — एतं देह — देहं गइ — गत्वा जइ — यदि तजउ — त्यजामि जिवउं — जीवामि तदेति शेषः, जइ — यदि रमण — भर्त्ता स एव होइ — भवति, विरह — वियोगः जणु — मा भवत्विति शेषः ॥ विरहानल-दग्धशरीरत्याग एव मम श्रेष्ठ इति गूढाभिप्रायायाः कस्याश्चिन्मृत-भर्तृकायाः सहगमनं कर्त्तुमुद्यतायाः श्रीरघुनाथं प्रति प्रार्थनावचन-मिदम्, सा चोत्तरार्द्धेन प्रकटिता। करहंचो निवृत्तः। ३१। (E).

१२-१३। चरेति। चरणे गणं विप्रं प्रथमं कृत्वा स्थापय। जगणस्तस्यान्ते जानीत करहंचं॥ विप्रश्चतुर्लघुः। यथा। जीवामि यदि एतं त्यजामि गत्वा देहम्। रमणो यदि स एव विरहो मा भवतु॥ देहत्याग एव जीवनमित्युपपादितमुत्तरार्द्धे तत्त्वतोऽर्थः। (G).

सत्ता दीहा जाणेही कसा तीं[1] गो माणेही ।
चाउद्दाहा[2] मत्ताणा सीसारूश्रो[3] छंदाणा ॥ ६४ ॥
जहा, चंदा[4] कुंदा ए कासा[5] हारा हीरा ए हंसा[6] ।
जे जे सेत्ता वसीश्रा[7] तुह्मा[8] कित्ती जिसीश्रा[9] ॥
६५ ॥ सीसरूपक[10] ।

---

६४-६५ । सप्त दीर्घान् जानीहि कर्णान् चीन् गुरुं मानय । चतुर्द्दशमाचाणां शीर्षरूपच्छन्दसि ॥ शीर्षरूपच्छन्दसश्चतुर्द्दशमाचस्य निर्व्वाहकान् सप्त दीर्घान् जानीहि, तदेव विवृणोति चीन् कर्णान्, कर्णो द्विगुर्व्वक्षरमन्तरमेकगुरुमित्यर्थः । उदाहरति । चन्द्रः कुन्दम् एतत् काशा हारो हीरं कैलासः । ये ये श्वेता विनि[दि]ता-स्तव कीर्त्त्या जिताः ॥ (C).

६४-६५ । अथ सप्ताक्षरचरणवृत्तस्य अंतिमं[आद्यं] भेदं शीर्षरूपकनामकं वृत्तं लक्षयति, सत्तेति । आदौ कसा ती — कर्णान् गुरुद्वयात्मकान् गणान्. चीन् तदनंतरं गो — गुरुं माणेही — मानय, एवंप्रकारेण चाउद्दाहा मत्ताणा — चतुर्द्दश मात्राः सत्ता दीहा — सप्त दीर्घान् सीसारूश्रा छंदाणा — शीर्षरूपकच्छन्दसि जाणेही — जानीहि[जानीहि] ॥ दीर्घसप्तकरचितचरणं शीर्षरूपक-

---

६४—६५ । १ ति (A). २ चउद्दाचा (A). ३ सीसारूश्रा (A & E), सीसोरूश्रो (B & C). ४ चन्दा (B). ५ केसासा (B). ६ रा चंसा (A & B), केलासा (C). ७ विसिसा (A), सीसीसा (B & C), वसीसा (E). ८ तुह्मारो (A), तुम्हा (B), तुह्मा (C). ९ जीसीसा (B), जिसिसा (C). १० सीस० रूपक (B).

बिज्जूमाला[1] मत्ता सोला[2] पाए कखा चारी लोला ।
एअं रूअं[3] चारी पाआ भत्ती खत्ती[4] णाआराआ[5] ॥६६॥

जहा,

उम्मत्ता[6] जोहा ढुक्कंता बिप्पक्खा[7] मज्झे[8] लुक्कंता[9] ।
णिक्कंता[10] जंता धावंता णिब्भंती[11] कित्ती पावंता ॥६७॥

बिज्जूमाला[12] ।

---

मिति फलितार्थः । ३१ । शीर्षरूपकमुदाहरति, चंदेति । चंद्रः कुंदः काशाः ए — एते हारः मौक्तिकदाम इति यावत् हीरा — हीरकं मणिभेदः हंसा — हंसः ए — एते । जे जे सेत्ता वण्णीआ — ये ये श्वेता वर्णिताः ते ते इति शेषः तुह्मा कित्ती जिणीआ — युष्मत्कीर्त्या जिताः ॥ कंचिद्राजानं प्रति कस्यचित्कवेरियमुक्तिः । शीर्षरूपकं निवृत्तम् । ३२ । (E).

६४-६५ । सत्तेति । सप्त दीर्घान् जानीहि कर्णान् चीम् गुरुं मानय । चतुर्दश मात्राः शीर्षरूपकं छंदः ॥ कर्णो द्विगुरुः । यथा, चंद्रः कुंदः ये काशाः हारा हीरा एते हंसाः । ये ये श्वेताः वर्णिताः युष्माकं कीर्त्या जिताः ॥ (G).

---

६६—६७ । १ बिज्जुम्माला (B), बिज्जुम्माला (C). २ सोला मत्ता (E & F). ३ रूओ रूओ (B). ४ मत्तो (E). ५ बिज्जूमाला (A), बिज्जूराला (B), बिज्जूम्माला (C), मत्ता राला (F). ६ उम्मत्ता (F). ७ बिपक्खा (A), बीपक्खा (B). ८ मज्झे (B & C), मज्झे (F). ९ लुक्कंता (C). १० णिक्क (C). ११ णिब्भन्ती (B & C). १२ बिज्जुम्माला (A).

६६-६७। अथाष्टाक्षरा। विद्युन्माला मात्राः षोडश पादे कर्णाश्चत्वारो खोलन्ते[न्ति]। एवंरूपाणां चतुर्णां पादानां भणी क्षत्रिया विद्युद्राजते॥ भणी धारयित्री क्षत्रियजातिः, विद्युन्माला विद्युदिव राजते। उदाहरति। उन्मत्ता योधा ढौकमानाः विपक्षमध्ये प्रविष्टाः। निष्क्रान्ता युध्यन्तो[माना] धावन्तो निर्भ्रान्ताः कीर्त्तिं प्राप्नुवन्ति॥ ढौकमाना गच्छन्तः। (C).

६६-६७। अथाष्टाक्षरचरणवृत्तस्य प्रस्तारक्रियया षट्पञ्चाशद्-धिकशतद्वयं भेदा भवन्ति, तत्राद्यं भेदं विद्युन्मालानामकं वृत्तं लक्षयति, विज्जुमेति। यत्र ख[ख]त्ती—क्षत्रिये प्रस्तारे इत्यर्थः, पूर्वा-चार्याणां क्षत्रिय इति प्रस्तारसंज्ञा, सोला मत्ता—षोडशमात्राकाः चारी—चत्वारः कर्णाः गुरुद्वयात्मका गणाः पाए—पादे खोला —लुटंति, एअं रूअं—एवंरूपेण चारी पाआ—चतुःपादिका विज्जूमाला—विद्युन्माला णाआराआ—नागराजेनेत्यर्थः भत्ती —भण्यते॥ खत्ती—क्षत्रिया जातिरिति कश्चित्। अत्र मात्रा-कथनमनतिप्रयोजनकं पादपूरणार्थमेवेति बोध्यम्। विद्युन्माला-मुदाहरति, उम्मत्तेति। उम्मत्ता—उन्मत्ताः ढुक्कंता—ढौकमानाः परस्परं मिलिता इति यावत् विप्पक्खा मज्झे लुक्कंता—विपक्ष-मध्ये लीनाः, णिक्कंता—निष्क्रांता विपक्षान् हत्वेत्यर्थः, थं[अं]ता—थांतः प्रतिपक्षसैन्यं प्रतीति भावः धावंता इतस्ततो धावनं कुर्वंतः जोहा—योद्धारः णिब्भंती—निर्भ्रान्तां नितरां त्रैलोक्यभ्रमण-शीलामिति यावत् कित्ती—कीर्त्तिं पावंता—प्राप्नुवंति॥ केनचिद्वन्दिना श्रीरामचन्द्रसंग्रामवर्णनपरतयेदं कृतम्। २५। (E).

लहु गुरू णिरंतरा पमाणिआ[1] अठक्खरा[2] ।
पमाणि[3] दूण किज्जए[4] णराअ[5] सो भणिज्जए[6] ॥६८॥
जहा, णिसुंभ सुंभ खंडिणी[7] गिरीस गेह मंडिणी[8] ।
पअंड मुंड[9] खंडिआ[10] पसण्ण[11] होउ[12] चंडिआ[13] ॥
६९ ॥ पमाणिआ[14] ।

---

६६-६७ । अथाष्टाक्षरमनुष्टुप्छंदः । विज्जू इति । विद्युन्माला षोडशमात्रा पादे कर्णाश्चत्वारो लुटंति । एवंरूपाश्चत्वारः पादाः भवंति चत्रिया नागराजः ॥ चत्रियजातिरिति केचित् । चचे प्रस्तारे इत्यन्ये । यथा, उन्मत्ता योधाः चलंतो विपक्षमध्ये निलीनाः । निष्क्रांता यांतो धावंतो निर्भ्रांतं कीर्त्तिं प्राप्नुवंति ॥ (G).

६८-६९ । लघुगुरू निरन्तरौ प्रामाणिकाष्टाक्षरा । प्रामाणी द्विगुणीक्रियते नाराचः स भण्यते ॥ लघोर[न]न्तरं गुरुः पुनरपि एवमष्टाक्षराणि देयानि । उदाहरति । निशुम्भशुम्भखण्डिनी गिरीशगेहमण्डिनी । प्रचण्डमुण्डखण्डिता प्रसन्ना भव[तु] चण्डिका ॥ (C).

६८-६९ । अथाष्टाक्षरचरणवृत्तस्य षडशीतितमं भेदं प्रमा-

---

६८–६९ । १ पमाणि (A, B & C). २ अट्ठ अक्खरा (A), अट्ठ अक्खरा (B & C), अठक्खरा (F). ३ पामाणि (A), पआणि (C). ४ किज्जिए (E & F). ५ णरअ (A), णराउ (E & F) ६ भणिज्जिए (E). ७ खण्डणी (B & C). ८ मण्डणी (B & C). ९ पअंड चंड (A). १० खंडिए (A) ११ पसंणि (A). १२ होउ (A), होद (B & C). १३ चंडिए (A), चण्डिआ (B). १४ प्रमाणिका (A), पआणिआ (C).

हार गंध[1] बंधुरेण[2] दिट्ठ[3] अट्ठ[4] अक्खरेण ।
बारहाइ मत्त जाण मल्लिआ[5] सुछंद[6] माण[7] ॥७०॥
जहा, जेण जिस्सु[8] खत्ति बंस रिट्ठि[9] मुट्ठि[10] केसि कंस ।
बाण पाणि कट्टिएउ सोइ[11] तुम्ह[12] सुम्भ[13] देउ ॥
७१ ॥ मल्लिका ।

---

णिकानामकं वृत्तं लक्षयति, लहु इति । लहु गुरू णिरंतरा—लघुगुरुनिरंतराणि अठक्खरा—अष्टावक्षराणि यत्र प्रतिचरणं पतंतीति शेषः सा पमाणिआ—प्रमाणिका तत्प्रमाणिकानामकं वृत्तमित्यर्थः । लहु गुरू णिरंतरेत्यनेन प्रथममेको लघुस्तदनन्तरं गुरुः पुनर्लघुः पुनर्गुरुरेवंप्रकारेणाष्टावक्षराणि कर्त्तव्यानीति सूच्यते । प्रसंगान्नाराचनामकं षोडशाक्षरचरणं वृत्तं लक्षयति, पमाणीति । पमाणि—प्रमाणी प्रमाणिकेत्यर्थः, नामैकदेशादपि सत्येत्यादौ नामप्रतीतेः, दूण—द्विगुणा लघुगुरुनिरंतरषोडशाक्षरेति यावत् किज्जिए—क्रियते यदेति शेषः, सो—सः णराउ—नाराचः भणिज्जए—भण्यते ॥ ३६ । प्रमाणिकामुदाहरति, णिसुंभेति । णि[नि]शुंभशुंभखंडिनी गिरीश[श]गेहमंडिनी महादेवगृहं भूषयित्रीत्यर्थः । पअंड मुंड खंडिआ—प्रचण्डमुण्डखंडिनी[नी]

---

७०—७१ । १ बंध (A). २ गंधण्ण (A). ३ दिड (B), जुट (C). ४ पाह (B & C). ५ मल्लिका (E & F). ६ सुच्छन्द (C), सुछंद (E). ७ जाव (E). ८ जिणु (A), जिषि (B), जिष (C), जिषू (E). ९ रिट्ठ (A), रिट्ठि (B & C). १० मुट्ठ (A), मुट्ठि (B & C). ११ मोष (E & F). १२ तुम्म (C), तुम्ह (F). १३ सुम्भ (B & C), सुम्भ (E), सुम्भ (F).

पसण होउ चण्डिआ—प्रसन्ना भवतु चण्डिका ॥ प्रमाणिका निवृत्ता । ३७ । (E).

६८-६९ । लह इति । लघुगुरुनिरंतरा प्रमाणिका अष्टाक्षरा । प्रमाणिका द्विगुणा क्रियतां नाराचकः स भण्यतां ॥ यथा । निशुंभशुंभखंडिनी गिरीशगेहमंडिनी । प्रचंडमुंडखंडिता प्रसन्ना भ[व]तु चंडिका ॥ (G).

७०-७१ । हारगन्धबन्धुरेण युष्टाष्टाक्षरेण । द्वाद[श]मात्राः आनीहि मल्लिकाछन्द आनय ॥ बन्धुरन्नूनताननमित्यमरः । हारेण गुरुणा उन्नतं गंधेन लघुनाननम् अष्टाक्षरेण पादेन । उदाहरति । येन जिताः क्षत्रियवंशारिष्टि-मुष्टि-केशि-कंसाः । बाणस्य पाणयः कृत्ताः स युष्माकं शुभं ददातु ॥ बाणस्यासुरस्य, कृत्ताश्छिन्नाः । (C).

७०-७१ । अथाष्टाक्षरचरणवृत्तस्य द्वि[एक]पञ्चत्यधिकशततमं भेदं मल्लिकानामकं वृत्तं लक्षयति, हारेति । हार गंध बंधुरेण —हारो गुरुः गंधो लघुस्ताभ्यां बंधुरेण—मनोहरेण दिट्ठ अट्ठ अक्खरेण—दृष्टाष्टाक्षरेण दृष्टान्यष्टावक्षराणि यत्र तादृशेनेत्यर्थः चरणेनेति शेषः। बारहाइ—द्वादशैव मात्रा यत्र आण—ज्ञायंते, तत् मल्लिकाछन्दः मल्लि[का]ख्यं सुन्दरं वृत्तमित्यर्थः माण- [आण]—मानय ॥ प्रमाणिकामल्लिकयोरेतावानेव भेदः यत्प्रमाणि- कायां लघुगुरुक्रमेणाक्षराणि चरणे दीयंते, मल्लिकायां गुरुलघु- क्रमेणेति बोध्यम् । ३८ । मल्लिकामुदाहरति । जेण—येन जिण —जितः खत्ति वंस—क्षत्रियवंशः परशुरामरूपेणेत्यर्थः, रिट्ठि

तरलणअणि तुंगो पढम रस सुरंगो[1] ।
णगण[2] जुअल[3] बद्धो गुरु जुअल[3] पसिद्धो ॥७२॥
जहा, कमल[4] भमर[5] जीवो सअल[6] भुवण[7] दीवो[8] ।
दलिअ[9] तिमिर डिंबो[10] उअइ[11] तरणि बिंबो ॥
७३ ॥ तुंग[12] ।

---

मुट्ठि केसि कंस—रिष्टिकः मुष्टिकः केशी कंसः येन जित इति पूर्वेणान्वयः । बाण पाणि—बाणासुरपाणयः सहस्रबाहव इत्यर्थः [जेण]—येन कट्टिएउ—कर्त्तिताः, सोउ—सोऽयं तुह्म—युष्मभ्यं सुक्ख—सुखं देउ—ददातु ॥ मल्लिका निवृत्ता । ३९ । (E).

७०-७१ । हारेति । हारगंधबंधुरेण हृष्टाष्टाचरेण । हाद्यैव माचा आनीत मल्लिकासुच्छंदः मानय ॥ हारो गुरुः गंधो लघुः । यथा, येन जितः चवंशो रिष्टिमुष्टिकेशिकंसाः । बाण-पाणिकर्त्तकः सोऽयं युष्माकं सुखं ददातु ॥ (G).

७२-७३ । तरलनयने तुङ्गः प्रथमं रससुरङ्गं । नगणयुगलबद्धं गुरुयुगलप्रसिद्धम् ॥ प्रथमतो रसैर्लघुभिः सुरङ्गमुत्कृष्टं, कियन्तो लघव इत्याकांक्षायामुक्तं नगणयुगलेति, ततो गुरुयुगलेन प्रसिद्धो-भवतीत्यर्थः । उदाहरति । कमलभ्रमरजीवः सकलभुवनदीपः ।

---

७१—७२ । १ मब सुरंगो (A & B), रस सुरंगो (E). २ नगण (A & C). ३ जुमल (B), युगल (E & F). ४ कमल (F). ५ भमल (E & F). ६ सअल (A). ७ भुवन (B & C). ८ दीवो (F). ९ दलिय (A, B & C). १० डिंभो (A & E). ११ उअइ (F). १२ तुङ्ग (B & C).

तापिततिमिरडिम्बः * * * कमलविकाशे भ्रमरस्य हर्षो भवतीति भ्रमरजीवत्वमुक्तम् । (C).

७२-७३ । अथाष्टाक्षरचरणवृत्तस्य चतुःषष्टितम भेदं तुंगनामकं वृत्तं लक्षयति, तरलेति । पढम — प्रथममादाविति यावत् रस लहु[हु]रंगो — रसैर्लघुभिः लहु[हु]रंगो — सुन्दर इत्यर्थः, कियद्भिर्लघुभिरित्यपेक्षायां हेतुगर्भविशेषणमाह, णगणेति । णगण यु[जु]वल बद्धो — नग[ण]युगलबद्धः नगणस्त्रिलघ्वात्मको गणः अंते इति शेषः गुरु यु[जु]अ[ब]ल पसिद्धो — गुरुयुगलप्रसिद्धः गुरुद्वयप्रसिद्धं नगणद्वयांते यत्रैतादृशमित्यर्थः तरलणअणि — हे तरलनयने स* तुंगो — तुंगः तत्तुंगाख्यं वृत्तमित्यर्थः ॥ नगणद्वयानंतरं गुरुद्वयं यत्र प्रतिचरणं पतति तत्तुंगनामकं वृत्तमिति फलितार्थः । अत्र पढम रस लहु[हु]रंगो इति पदं पद्यपूरणार्थमेवेति बोध्यम् । ४० । तुंगमुदाहरति, कमलेति । कमल भमल जीवो — कमलभ्रमरजीवः कमलांतःपातिनो ये भ्रमरास्तेषां बंधनमोचनाज्जीवदातेत्यर्थः सअल भुअ[ब]ण दीवो — सकलभुवनदीपः प्रकाश[क]त्वादिति भावः । दलिअ तिमिर डिंभो — दलिततिमिरोपप्लवः, डिंभस्तूपप्लवः प्रोक्तः इति हेमीकोषः, एतादृशस्तरणिविम्बः सूर्यविम्बः उअइ — उदेति ॥ तुंगो निवृत्तः । ४१ । (E).

७२-७३ । तरेति । तरलनयने तुंगः प्रथमरससुरंगः । नगणयुगलबद्धो गुरुयुगलप्रसिद्धः ॥ रसः शृंगारः । यथा । कमलभ्रमरजीवः सकलभुवनदीपः । दलिततिमिरडिंभो जयति तरणिबिंबः ॥ (G).

पढम गण विप्पओ बिहु तह[१] णरेंदओ[२] ।
गुरु सहिअ अंतिणा[३] कमल इम[४] भंतिणा ॥७४॥
जहा, स जअइ[५] जणद्दणा[६] असुर[७]कुल मद्दणा ।
गरुड़[८]वर बाहणा[९] बलि भुअण[१०] चाहणा[११] ॥
७५ ॥ कमल ।

---

७४-७५ । पढम[प्रथम]गणो विप्रकः द्वितीयस्तथा नरेन्द्रः । गुरुसहितान्तेन कमलमेवंप्रकारेण ॥ नरेन्द्रो जगणः, भवन्ति-[भन्ति]-शब्दः प्रकारवचनः । उदाहरति । स जयति जनार्द्दनः असुरकुलमर्द्दनः । गरुडवरवाहनः बलिभुवनयाचकः ॥ (C).

७४-७५ । अथाष्टाक्षरचरणवृत्तस्य चत्वचितमं भेदं कमल-नामकं वृत्तं लक्षयति, पढमेति । जह — यत्र विप्पओ — विप्रकः चतुर्लघ्वात्मको गण इति यावत् पढम — प्रथमः गणः, गुरु सहिअ अंतिणा — गुरुसहितांतः यस्यांते गुरुरेतादृश इत्यर्थः णरिंदओ — नरेन्द्रः मध्यगुरुर्जगण इति यावत् बिउ — द्वितीयः गण इ[ति] पूर्वेणान्वयः, एम भंतिणा — एवंप्रकारेण कमलनामकं वृत्तं भवतीत्यर्थः ॥ यद्वा अवहट्ठभाषायां लिंगविभक्तिवचनव्यत्यासे दोषाभावात् गुरु सहिअ अंतिणा — गुरुसहितांतम् इति वृत्तविशेषणं

---

७४—७५ । १ जह (E). २ णरिंदओ (E & F). ३ एंतिणा (A), अंतिणा (C), अंतिण (F). ४ एम (A & F), ए (E). ५ जिअअइ (A). ६ जणद्दणा (C). ७ असुर (E). ८ गरुड (B), गुरु (C). ९ वाहणा (B). १० भुवण (F). ११ चाहणा (B).

दिठ्ठ जोहा गणा तिणिआ णाअराएण[1] जा विणिआ[2] ।
मास अद्धेण पाअ ठ्ठिआं[3] जाण[4] मुद्धे[5] महालच्छिआं[6] ॥७६॥

---

वाच्यम् । ४१ । क्रमलमुदाहरति, सेति । [असुरस्]र कुल महणा—दैत्यवंशमर्दनः गरुड़ वर वाहणा—गरुडः वरं श्रेष्ठं वाहनं यस्य तादृश इत्यर्थः बलि भुवण धाहणा—बलिभुवनं बलिराज्यं जिष्णुरित्यर्थः सः जणद्दणा—जनार्दनः जअइ जयति ॥ कमलं निवृत्तम् । ४२ । (E).

७४-७५ । पठेति । प्रथमो गणो विप्रो द्वितीयस्तथा नरेंद्रः । गुरुसहितमंतेन कमलं छंद एम[व]मेवं भणिना[त्वा] इति रचनया ॥ विप्रश्चतुर्लघुः, नरेंद्रो जगणः । यथा । स जयति जनार्दनः असुरकुलमर्दनः । गरुडवरवाहनो बलिभुवनजिष्णुः ॥ (G).

७६ । अथ नवाक्षरम् । दृष्टा योधगणास्त्रयः नागराजेन [ये] वर्णिताः । मासार्द्धेन पादस्थिता जानीहि मुग्धे महालक्ष्मी[रि]यम् ॥ योधो मध्यलघुः पञ्चकलः ऽ।ऽ, मासार्द्धं पञ्चदश तेन पञ्चदशकलः पादो लभ्यते । (C).

७६ । अथ प्रस्तारक्रियया नवाक्षरस्य द्वादशाधिकं पंचशतं भेदा भवन्ति, तत्राष्ट[सप्त]चत्वारिंशाधिकशततमं भेदं महालक्ष्मीनामकं वृत्तं लक्षयति, दिट्ठेति । जा—ये रगणाः णाअराएण—नागराजेन पिंगलेनेति यावत् विणिआ—विज्ञाता वर्णिता वा,

---

७६ । १ णाअराएस (F). २ वणिआ (F). ३ पाअ ठ्ठिआं (B & C). ४ जाणु (F). ५ म (C). ६ महालच्छिअं (E), महालच्छिआ (F).

जहा,

मुंडमाला गला[1] कंठिआ[2] णाअराआ भुआ संठिआ[3] ।
वघ्घछाला[4] किआ बासणा चंडिआ पाउ सिंहासणा[5] ॥

७७ ॥ महालच्छी[6] ।

---

मात्त अद्धेण — मात्रार्द्धेन मात्रार्द्धपरिमिताभिः पञ्चदशभिर्मात्राभिरित्यर्थः दिट्ठ — दृष्टा उपलक्षिता इति यावत् ते एतादृशाः तिण्णिआ — त्रयः जोहा गणा — योद्धृगणा मध्यलघुरगणा इति यावत् यत्र पाअ — पादे ठ्ठिअं — स्थिताः, तां महालच्छिअं — महालक्ष्मीं जाण — जानीहीति ॥ अत्र मात्राकथनं श्लोकपूरणार्थमेव । रगणत्रयरचितचरणा महालक्ष्मीरिति तु निष्कृष्टार्थः । ४३ । (E).

७६ । अथ नवाक्षरं त्रिष्टुप्[वृहती] । दिट्ठेति । दृष्टा योद्धृगणास्त्रयो नागराजेन ये वर्णिताः । मात्रार्द्धेन पादस्थितां जानीहि मुग्धे महालक्ष्मीं छंदः ॥ मात्तेति पंचदशमात्रपदां । योद्धा रगणः । (G).

७७ । [उदाहरति] मुण्डमाला गले कण्ठिका नागराजो-भुजासंस्थितः । व्याघ्रचर्मकृतं वासः चण्डिका पातु सिंहासना ॥ कण्ठिका ग्रैवेयकम् । (C).

७७ । महालक्ष्मीमुदाहरति, मुण्डेति । मुण्डमाला गला

---

७७ । १ गले (A), dropt in (F). २ कण्ठिआ (C). ३ संठिआ (C). ४ वघ्घछाला (A), वग्घच्छला (B & C). ५ सीहासणा (B & C). ६ महालच्छी (A).

दिअवर कखो सअणं पअ पअ[1] मत्ता गणणं ।
सर मुणि मत्ता लहिअं सहि सरगिक्का[2] कहिअं ॥७८॥

कंठिआ — मुण्डमालेव गलकंठिका कंठभूषेति यावत् यस्या-स्ताद्दृशीत्यर्थः संठिआ णाअराआ भु[आ] — संस्थितनागराजभुजा । प्राकृते पूर्वनिपातानियमादपि वर्त्तमानस्यापि संठिआ-शब्दस्य पूर्व-निपातः । बग्घछाला किआ बासणा — व्याघ्रचर्मकृतवसना सिंहा-सणा — सिंहारूढा चंडिआ — चंडिका पाउ — पातु ॥ मत्ता-श्वमौर्निवृत्ता । ४४ । (E).

७७ । यथा । मुंडमाला गले कंठिका नागराजभुजयोः संस्थिता । व्याघ्रकृत्तिकृतवसना चंडिका पातु सिंहासना ॥ (G).

७८ । द्विजवरकर्णः सगणः पादे नवमात्रागणनं । शरमुनि-मात्रालब्धा प्रिय सखे सारङ्गिका कथिता ॥ द्विजवरश्चतुर्लघुः, कर्णो द्विगुरुः, मात्रा वर्णः, तेन नव वर्णा लभ्यन्ते । शराः पञ्च, मुनयः सप्त, मिलिता द्वादश मात्रा लब्धाः । (C).

७८ । अथ नवाक्षरचरणस्य वृत्तस्य चतुश्चत्वारिंश[अष्टा]धिक-द्विशततमं [२०८] भेदं सारंगिकानामकं वृत्तं लक्षयति, दिअ-वरेति । सहि — हे सखि पअ पअ — पदे पदे दिअवर कखो सअणं — द्विजवरकर्णसगणैः, द्विजवरश्चतुर्लघ्वात्मको गणः, कर्णो-गुरुद्वयात्मको गणः, सगणोऽन्तगुरुगणस्तैरित्यर्थः, मत्ता गणणं — मात्रागण[न]नं यत्र क्रियत इति शेषः, सर मुणि मत्ता लहिअं —

७८ । १ पअ सअ (C). २ सारंगी (A), सरंगिक्का (E).

जहा,

हरिण सरिस्सा[१] णअणा कमल सरिस्सा[२] वअणा ।
जुअजण[३] चित्ता हरिणी[४] पिअ सहि दिट्ठा[५] तरुणी ॥
७९ ॥ सारंगिका ।

शरमुनिमात्रासहिता, शराः पंच, मुनयः सप्त, तथाच प्रतिचरणं द्वादशमात्रायुक्तेत्यर्थः, सा सरंगिक्का—सारंगिका कहिअं—कथिता ॥ वचनलिङ्गव्यत्यासस्तु प्राकृते न दोषायेति पूर्वमेवोक्तम् । कियतीनां मात्राणां गणनं विधेयमित्यत्र हेतुगर्भं श[स]र मुणीति वृत्तविशेषणम् ! केचित्तु दिअवर कणो—द्विजवरकर्णौ सगणं—सगणः एवंप्रकारेण यत्रेति शेषः मत्ता गणणं—मात्रागणनं क्रियत-इति शेषः, कियंत्यो मात्रा गणनीया इत्यपेक्षायामाह, सरेति, सर मुणि मत्ता—शरमुनिमात्राः, शराः पंच मुनयः सप्त मिलित्वा द्वादशेत्यर्थः लहिअं—लभ्यंते यत्र, सा सहि—हे सखि सारंगिका कहिअं—कथ्यतामिति योजनिकामाहुः । अत्र वर्णवृत्ते मात्राकथनं पादपूरणार्थमेव । द्विजवरकर्णसगणरचितचरणा सारं-गिकेति निष्कृष्टोऽर्थः । ४५ । (E).

७८ । दिअ इति । द्विजवरः कर्णः सगणः पदे पदे मात्रा-गणना । शरमुनिमात्रासहिता सखि सारंगिका कथिता ॥ शराः पंच, मुनयः सप्त । (G).

७९ । १ सरस्स (E). २ विसासा (A). ३ जणमण (C). ४ हरणी (A & E). ५ दिट्ठा (B).

कुंतीपुत्ता[1] जुअ लहिअं तीए[2] विप्पो धुअ[3] कहिअं ।
अंते हारो जइ[4] जणिअं तं पाइत्ता फणि भणिअं[5] ॥ ८० ॥

---

७९ । उदाहरति । हरिणसदृग्नयना कमलसदृग्वदना । युवजनचित्तहरिणी प्रियसखि दृष्टा तरुणी ॥ युवती उच्च-स्तनीत्यर्थः । (C).

७९ । सारंगिकामुदाहरति । हरिणसदृग्नयना कमल-सदृग्वदना । युवजनचित्तहरणी तरुणी हे प्रियसखि दृष्टा ॥ कस्याश्चित्सख्याः कांचिन्निजवयस्यां प्रति वचनमिदम् । सारंगिका निवृत्ता । ४६ । (E).

७९ । यथा । हरिणसदृग्नयना कमलसदृग्वदना । युवजन-चित्ताहरिणी प्रियसखि दृष्टा तरुणी ॥ (G).

८० । कुन्तीपुत्रः कर्णः गुरुयुगलं, तद्युगलेन गुरुचतुष्कं, तत-श्चतुर्लघुस्ततो गुरुयंच तत् पाविचच्छन्दः ॥ (C).

८० । अथ नवाचरचरणस्य वृत्तस्यैकचत्वारिंशोत्तरद्विशततमं भेदं पविचानामकं वृत्तं लचयति, कुंतीपुत्तेति । जइ — यच प्रथमं कुंतीपुत्ता जुअ लहिअं — कुंतीपुचयुगलम् प्राप्तमिति यावत् कुन्ती-पुचस्य कर्णस्य गुरुद्वयात्मकगणस्येति यावत् युगं गुरुचतुष्टयमित्यर्थः, तीए — तृतीये स्थाने कर्णद्वयानंतरमित्यर्थः विप्पो — विप्रश्चतु-र्लघ्वात्मको गणः धुवं निश्चितं कहिअं — कथितः । अंते विप्रांते

---

८० । १ कुन्तीपुत्ता (B). २ तीचो (A & F). ३ धुव (E & F). ४ जइ (B & C). जवि (F). ५ कवव कहिचं (B & C).

जहा,

फुल्ला णीबा[1] भम भमरा दिट्ठा[2] मेहा जल समला[3] ।
णच्चे बिज्जू[4] पिअ[5] सहिआ आवे कंता कहु[6] कहिआ[7] ॥
८१ ॥ पाइत्ता[8] ।

---

हार: एकगुर्वात्मको गण: जणिअं—जनित: स्थापित इति यावत्, तं—तां फणि भणिअं—फणिभणितां पाइत्ता—पवित्रां विद्धीति शेष: ॥ गुरुचतुष्टयोत्तरचतुर्लघुकानंतरस्थापितैकगुरुरचितचरणा पवित्रेति तु निष्कृष्टार्थ: । ४७ । (E).

८० । कुंतीति । कुंतीपुत्रयुगलस्थिता तृतीयो विप्रो ध्रुवं कथित: । अंते हारो यत्र जनित: सा पवित्रा फणिभणिता ॥ गुरुलघुचतुष्टयं गुरुश्चेत्यर्थ: । (G).

८१ । उदाहरति । फुल्ला नीपा भ्रमद्भ्रमरा दृश्यन्ते मेघा: जलश्यामला: । नृत्यति विद्युत् प्रियसखि आयास्यति कान्त: कदा ॥ (C).

८१ । पाइत्ता[पवित्रा]मुदाहरति, फुल्लेति । भम भमरा—भ्रमद्भ्रमरा: भ्रमंत: भ्रमरा येषु तादृशा इत्यर्थ: णीबा—नीपा: कदंबा इति यावत् फुल्ला: पुष्पिता:, जल समला—जलश्यामला: मेहा—मेघा: दिट्ठा—[दृष्टा:] । बिज्जू—विद्युत् णच्चे—नृत्यति, अत: हे

---

८१ । १ णीपा (E). २ दिट्ठा (B & C). ३ समरा (A & B). ४ बिज्जु (B), बिज्जु (C). ५ पिअ (C). ६ कहि (B & C). ७ कहिआ (F). ८ पाइत्ता (C).

सरस[1] गण रमणिआ दिअवर[2] जुअ[3] पलिआ[4]।
गुरु धरिअ पइ पओ दह कलअ कमलओ[5] ॥ ८२॥

पिअ सहिआ — हे प्रियसखिके कंता — कांतः कहिआ — कदा आवे — आयास्यति तत्त्वमेवेति शेषः कहु — कथय॥ इदं च प्रोषितभर्तृकायाः कांचिन्निजवयस्यां प्रति वचनम्। पविता निवृत्ता। ४८। (E).

८१। यथा। फुल्ला नीपाः [भ्रमद्]भ्रमरा दृष्टा मेघाः जल श्यामला — जलश्यामलाः। नृत्यति विद्युत् प्रियसखि आयास्यति कांतः कदा कथ्यताम्॥ (G).

८२। सरसगणरमणीया प्रकटितद्विजगणद्वया। सगुरुगणा प्रतिपादं दशकला कमला॥ सरसैरुत्तमगणै रमणीया, के ते गणा इत्यत उक्तं द्विजगणद्वयं गुरुयुक्तं मिलित्वा दश कला भवन्ति। अथवा रसानां लघूनां गणः समूहस्तेन [सह वर्त्तमाना] सरसगणा या चासौ रमणीया चेति। (C).

८२। अथ नवाक्षरचरणस्य वृत्तस्य षट्पञ्चाशदधिकद्विशततमं भेदं कमलानामकं वृत्तं लक्षयति, सरसेति। गण सरस — गणश्रेष्ठं रमणिआ — रमणीयं दिअवर जुअ — द्विजवरयुगं द्विजवरश्चतुर्लघ्वात्मको गणस्तस्य युगलं तथा चाष्टौ लघूनिति परमार्थः

८२। १ सुविच (A). सरसा (C). २ दिच वर (A, B & C). ३ जुच (C). ४ पचलिचा (A), चलिचा (C). ५ देच कलच कलचो (B).

जहा, चल[१] कमल[२] णअणिआ[३] खलिअ[४] थण वसणआ[५] ।
हसइ पर णिअलिआ[६] असइ[७] धुअ[८] बहुलिआ ॥
८३ ॥ कमला ।

पलिआ — द्वला । गुरुरेकः प[इ] पओ — प्रतिपादं यत्र धरिअ — धृतः भ्रियते वा इह कलअ — इयकलाकं तत् कमलओ — कमलकं तत्कमलनामकं वृत्तमित्यर्थः ॥ अत्र चान्यथान्यथानुपपत्त्या छतस्य गण सरस पूरितस्य निपातस्य दोषापत्त्वानं नाग्रङ्कनीयमव[ह]ट-भाषायां तस्य नियमाभावात् । सरस-गण रमणिआ इति च पदद्वयं पद्यपूरणार्थमेवेति द्रष्टव्यम् । ४८ । (E).

८२ । सरेति । सरसगणरमणीयं द्विजवरयुगपतितं । द्विज-वरश्चतुर्लघुः । गुरुर्धृतः प्रतिपदं द्यकलाकं कमलम् ॥ (G).

८३ । उदाहरति । चलितचपलनयना स्खलितस्तनवसना । हसति परनिकटे असती ध्रुवं बधूटी ॥ स्वल्पा बधूर्व[धू]टी स्यात् । (C).

८३ । कमलामुदाहरति, चलेति । स्पष्टार्थमयम् । ५० । (E).

८३ । यथा । चलकमलनयनिका स्खलितस्तनवसना । हसति परनिमंत्रा असति ध्रुवं बधूका ॥ (G).

८३ । १ Dropt in (B). २ चवल (A), चपल (C). ३ णअणआ (A). ४ खलर (A, B & C). ५ वसणिआ (B & C). ६ णिवलआ (A), णिआ (B), दणिआ (C). ७ असर (F). ८ धुव (E).

रअइ[1] फणि विंब[2] एसो गुरु जुअल[3] सव्व सेसो।
सिरहि[4] दिअ मझ्झ[5] राओ गुणइ[6] गुणिए सहाओ[7] ॥८४॥

८४। उच्यते फणिराजेनैव गुरुयुगलसर्व्वशेषः। शिरसि द्विजो-मध्ये राजा गुणिग[नः] गण्यतां विम्बभावः॥ राजा जगणः, गण्यतां ज्ञायतां, विम्बस्य छन्दसः भावः प्रकारः। (C).

८४। अथ नवाचरचरणस्य [वृत्तस्य] षणवतितमं भेदं विंब-नामकं वृत्तं लचयति, रअईति। सिरहि — शि[शि]रसि पादादा-विति यावत् दिअ — द्विजश्चतुर्लघ्वात्मको गण इत्यर्थः, मझ्झ — मध्ये राओ — राजा मध्यगुरुर्जगण इत्यर्थः यत्र पततीति शेषः, गुरु जुअल सव्व सेसो — गुरुयुगलसर्वशेषं गुरुद्वयं सर्वेषां पादानां शेषे अंते यस्य तादृगित्यर्थः, एसो — एतत् विंब — विंबं विंबनामकं वृत्तमिति यावत् गुणिए — गुणिनः गुणवतः पुरुषस्य सहाओ — सहायः गुणोपदेष्टृत्वाद्गुणवत्पुरुषस्य सहायभूत इति यावत् फणि — फणी पिंगलः रअइ — रचयति, गुणइ — गुणयत हे बुधजना इति शेषः॥ * * द्वौ गुरू यत्र प्रतिचरणं क्रमेण पततस्तद्विंबनामकं वृत्तमिति फलितार्थः। अथवा सर्व्वशेषे पादांते गुरुयुगलं शि[शि]-रसि द्विजः, विप्रगुरुद्वयमध्ये राजा जगण इत्यर्थः यत्र भवतीति शेषः, फणि रइअ — फणिरचितम् एसो — एतत् विंबं हे गुणि — हे गुणिनः शिष्याः सहाओ — स्वभावादेव गुणइ — गुणयत इति

८४। १ रइअ (A). २ फणि राअ (C). ३ जुअल (E). ४ सिरहि (A), सिरइ (B & C). ५ मज्झ (B), मज्झ (C). ६ भणहि (E), गुणइ (C). ७ गुणि विम्ब भाओ (C).

जहा,

चलइ चल वित्त[1] एसो णसइ तरुणत्त[2] वेसो ।
सुपुरुस[3] गुणेण बद्धा[4] थिर रहइ कित्ति[5] सुद्धा ॥

८५ ॥ विंब[6] ।

भिन्नं भिन्नं योजनीयं। परे तु गुणिए सहाओ — हे गुणिनः सहाय-
इत्यर्थं कृत्वा सखिसंबोधनपरमेतत्पदमिति वदंति । (E).

८४ । रम इति । रचयति फणी विंबः एष गुरुयुगलसर्वशेषः।
यिरचि द्विजो मध्ये राजा गुणाय गुणिनां सहायः ॥ द्विजश्चतु-
र्लघुः, राजा जगणः । (G).

८५ । उदाहरति । चलत्येव वित्तमेतत् नश्यति तरुणत्ववेशः ।
सुपुरुषगुणेन बद्धा स्थिरा तिष्ठति कीर्त्तिः शुद्धा ॥ (C).

८५ । विंबमुदाहरति, चलइति । एसो — एतत् चल — चञ्च-
लमायुगत्वरमिति यावत् वित्त — वित्तं द्रव्यं चलइ — चलति
नश्यतीत्यर्थः, तरुणत्त वेसो — तरुणत्ववेषस्तारुण्यावस्थेति यावत्
णस[इ] — नश्यति । सुपुरिस गुणेण बद्धा — सुपुरुषगुणेन बद्धा
शुद्धा स्वच्छा कित्ति — कीर्त्तिः थिर — स्थिरा रहइ — तिष्ठति ॥
तस्मात्सर्वमनित्यं मत्वा गुणानां लंबे पुरुषैराससुद्रांतव्यापिनी
कीर्त्तिर्भवति इति कस्य[चित्] परमाप्तस्य किंचिन्मिच प्रत्युपदेशः।
विंबं निवृत्तम् । ५२ । (E).

८५ । १ चल वित्त (A), चलि वित्त (F). २ तरुणंत (F). ३ सुपुरिस (E & F). ४ बधा (A). ५ कीत्ति (B) ६ विंबा (B & C).

जसु आइ हत्थ[1] विआण[2] तह[3] बे पओहर जाण ।
पभणेइ णाअ[4] णरेंद[5] एम[6] माणु[7] तोमर छंद ॥ ८६ ॥

८५ । यथा । चलति चलचित्त एव नश्यति तरुणवेषः ।
सुपुरुषगुणेन बद्धा स्थिरा तिष्ठति कीर्त्तिः शुद्धा ॥ (G).

८६ । यस्यादौ हस्तो विज्ञातः तथा द्वौ पयोधरौ [ज्ञातौ] । प्रभणति नागनरेन्द्रः एतत् जानीहि तोमरच्छन्दः ॥ हस्तोऽन्त-गुरुचतुष्कलः । (C).

८६ । अथ नवाक्षरचरणस्य वृत्तस्य चतुःपञ्चाशत्तरत्रिशततमं भेदं तोमरनामकं वृत्तं लक्षयति, जस्विति । जसु[सु] — यत्र [आइ] — आदौ हत्थ — हस्तः गुर्वंतः सगण इति यावत् विआण — विज्ञातः विज्ञायते वा, तह — ततस्तथा वा बे पओहर — द्वौ पयोधरौ मध्यगुरुकौ जगणावित्यर्थः जाण — ज्ञायेते ज्ञातौ वा तत् तोमर छंद — तोमरनामकं वृत्तं माणु — मानय, एम — एवं णाउ णरेंद — [नाग]नरेंद्रः पिंगलः पभणेइ — प्रभणति ॥ यत्र प्रथमं सगणस्त-दनंतरं च जगणद्वयं प्रतिचरणं प[त]ति तत्तोमरनामकं वृत्तमि-त्यर्थः । ५३ । (E).

८६ । जस्विति । यस्यादौ हस्तो विज्ञातः तथा द्वौ पयोधरौ ज्ञातौ । प्रभणति नागनरेंद्रः एवं मानय तोमरं छंदः ॥ हस्तः सगणः, पयोधरो जगणः । (G).

८६ । १ जउ आइ हत्थ (A), जसु आइ हत्थ (E). २ बेआइ (E). ३ तह (A). ४ णाउ (E & F). ५ णरेन्द (C). ६ ए to be read as short, vide श्लोक ४, p. 7. ७ जाण (A & B), माण (C).

जहा,

चलि[1] चूअ कोइल साव महु[2]मास पंचम गाव ।
मण मज्झ[3] वम्मह[4] ताव ण हु कंत अज्जवि आव ॥
८७ ॥ तोमर ।

---

८७ । चलति चूते कोकिलशावो मधुमासे पञ्चमं गायति । मनोमध्ये मन्मथतापः न हि कान्तोऽद्याप्यायाति ॥ (C).

८७ । तोमरमुदाहरति, चलीति । कोइल साव — कोकिलशावकाः चूअ — चूते सहकारवृक्षे चलि — गत्वा महुमास — मधुमासे वसंतसमये पंचम — पंचमं स्वरभेदं गाव — गायंति । अत इति शेषः मज्झ — मम मण — मनः वम्मह — मन्मथः ताव — तापयति, अज्जवि — अद्यापि कंत — कांतः ण हु — न खलु आव — आगतः ॥ एतादृशेऽपि कांतो नायातोऽतः किमाचरणीयं मया तत्त्वमेवादिशेति गूढाभिप्रायायाः कस्याश्चित् प्रोषितभर्तृकायाः प्रियसखीं प्रति वाक्यमिदम् । तोमरं निवृत्तम् । ५४ । (E).

८७ । यथा । गत्वा चूते कोकिलशावो मधुमासे पंचमं गायति । मनो मन्मथस्तापयति न खलु कांतोऽद्याप्यायातः ॥ (G).

---

८७ । १ चलि (A). २ मधु (B & C). ३ मज्झ (B & C). ४ मम्मह (C).

णाआराआ जंपे सारा ए चारी कसा अंते हाराए ।
अट्ठाराहा[1] मत्ता पाआए[2] रूआमाला[3] छंदा[4] जंपीए[5] ॥
८८ ॥

८८ । नागराजो जल्पति सारमेतत् चत्वारः कर्णा अन्ते हारः । अष्टादश मात्रा यत्पादे रूपमालीच्छन्दो जल्प्यताम् ॥ (C).

८८ । अथ नवाचरचरणस्य वृत्तस्य प्रथमं भेदं रूपमाला-नामकं वृत्तं लचयति, णाआराआ इति । चारी कसा — चत्वारः कर्णा गुरुदयात्मका गणा इति यावत् अंते — कर्णचतुष्टयांते हाराए — हारः गुरुरित्यर्थः । एवंप्रकारेण पाआए — पादे अट्ठाराहा — अष्टादश मत्ता — मात्रा यच भवंतीति शेषः, ए — एतत् सारा — सारमत्युत्कृष्टमिति यावत् रूआमाला छंदा — रूपमालाच्छंदः जंपाए — जल्प्यते कथ्यत इति यावत्, इति णाआ-राआ — नागराजः पिंगलः जंपे — जल्पति ॥ अच सारपदं माचा-ज्ञापकस्य चरणः पद्यपूरणार्थमेव वर्णवृत्तेषु माचाकथनानुपयो-गादिति वाच्यम् । ५५ । (E).

८८ णाआ इति । नागराजो जल्पति सारमेतत् चत्वारः कर्णाः अंते हारः । अष्टादश माचाः पादे रूपमालाच्छंदो जल्प्यते ॥ (G).

८८ । १ अट्ठाहारो (A), अट्ठाराहा (B & C). २ आ पाए (B & C). ३ रुआमालो (B & C). ४ छंदो (A), छन्दा (B & C). ५ जंपूचे (A), जम्पीए (B), जम्पीए (C), जंपाए (E).

जहा,

जं णच्चे बिज्जू[1] मेहंधारा[2] पंफुल्ला[3] णीवा सद्दे मोरा ।
बाअंता[4] मंदा[5] सीआ बाआ कंपंता गाआ[6] कंता णाआ ॥
८९ ॥ रूपमाला[7] ।

८९ । उदाहरति । [यत्] नृत्यति विद्युत् मेघान्धकाराः प्रफुल्ला नीपाः शब्दायन्ते मयूराः । वीजयन्ति मन्दाः शीता वाताः कम्पते कायः कान्तो नायातः ॥ (C).

८९ । रूपमालामुदाहरति, जमिति । जं — यस्मात् कारणात् बिज्जू — विद्युत् णच्चे — नृत्यति मेहंधारा — मेघांधकारा दिशः जा[ता] इति शेषः, णीवा — नीपाः कदंबाः पंफुल्ला — प्रफुल्लिताः, मोरा — मयूराः सद्दे — शब्दायंते । मंदा — मंदगामिनः सीआ — शीताः बाआ — वाताः बाअंता — वांति, कंता — कांतः णाआ — नागतः, अतः गाआ — गात्रं कंपंता — कंपते ॥ वर्षाकालमवधिं कृत्वा गतः कांतो नाद्याप्यागतोऽतः किमाचरणीयमिति स्वयमेव विचारं कुर्वत्याः प्रोषितभर्तृकाया वाक्यमेतत् । रूपमाला निवृत्ता । ५६ । (E).

८९ । यथा । यन्नृत्यति विद्युन्मेघांधकारः प्रफुल्ला नीपाः शब्दायंते मयूराः । वांति मंदाः शीता वाताः कंपते गात्रं कांतो-नायातः ॥ (G).

---

८९ । १ विज्जा (B), बीज्जा (C). २ मेघन्धारा (B). ३ पप्फुल्ला (B). ४ बीचंता (A), बीचन्ता (B & C). ५ मन्ना (A). ६ काचा (A & C), पाचा (B). ७ रूपमाली (B & C).

जसु[1] आइ हत्थ[2] विआणिओ
तह[3] वे पओहर[4] जाणिओ ।
गुरु अंत पिंगल[5] जंपिओ[6]
सइ[7] छंद संजुत[8] थप्पिओ ॥ ९० ॥

९० । अथ दशाक्षरा । यस्यादौ हस्तो विज्ञातः तथा द्वौ पयोधरौ ज्ञातौ । गुरुरन्ते पिङ्गलेन कथितम् एतच्छन्दः संयुक्तं स्थापितम् ॥ हस्तोऽन्तगुरुश्चतुष्कलः । (C).

९० । अथ दशाक्षरचरणस्य वृत्तस्य चतुर्विंशत्यधिकदशशतं भेदा भवंति, तत्र चतुःषष्ट्युत्तरत्रिशततमं भेदं संयुक्तनामकं वृत्तं लक्षयति, जस्विति । जसु[सु] — यत्र आइ — आदौ हत्थ — हस्तः गुर्वंतः सगण इति यावत् विआणिओ — विज्ञातः, तह — ततस्तथा वा वे पओहर — द्वौ पयोधरौ मध्यगुरुकौ जगणाविति यावत् जाणिओ — ज्ञातौ । अंत — जगणद्वयांते पादांते वा गुरु — गुरुः विज्ञात इति पूर्वेणान्वयः, पिंगल जंपिओ — पिंगलजल्पितं सइ — तदेव संजुत — संयुक्तं छंद — वृत्तं, थप्पिओ — स्थाप्यतां ॥ तत्संयुक्तनामकं वृत्तं ज्ञायतामित्यर्थः । ५७ । (E).

९० । अथ दशाक्षरा पंक्तिः । जस्विति । यस्यादौ हस्तो-विज्ञातः तथा द्वौ पयोधरौ ज्ञातौ । गुरुरंते पिंगलजल्पितं तच्छंदः संयुक्तं स्थापितम् ॥ हस्तस्सगणः, पयोधरो जगणः । (G).

९० । १ जय (B), जहु (E). २ हच्छ (A). ३ तहु (A). ४ पओह (E). ५ पिंगल (B). ६ चम्पिओ (B). ७ सोइ (A, B & C), सइ (F). ८ संजुअ (F).

यथा,

तुहु[१] जाहि[२] सुंदरि अप्पणा परितेज्जि[३] दुज्जण[४] थप्पणा[५] ।
विअसंत[६] केअइ संपुडा[७] णिहु एहु[८] आविहइ[९] बप्पुडा[१०] ॥
९१[११] ॥ संजुता[१२] ।

---

९१ । उदाहरति । त्वं याहि सुन्दरि आत्मना परित्यज्य दुर्ज्जनस्थानम् । विकसन्तु केतकीसंपुटा निभृतमत्रागमिष्यति बप्पुडा ॥ आत्मनेत्यनेन नैश्चित्यं व्यज्यते । बप्पुडा इति शब्दोऽनुकम्प्यजनवाचको देशी, केतकीविकाशे ज्ञापितः स्वयमेवागमिष्यति नायकः, त्वं दुर्जनस्थानं त्यक्त्वा अभिमतस्थानं गच्छ । (C).

९१ । संयुक्तमुदाहरति, तुह इति । हे सुन्दरि सर्वावयवरमणीये विअसंत केअइ संपुडा — विकसत्केतकीसंपुटे एह — अत्र कुंजे इति शेषः बप्पुडा — त्वदनुकंप्यो नायकः णिहु — निभृतं तूष्णीं पराज्ञातमिति यावत् यथा स्यात्तथा आविह — आगमिष्यति, अत इति शेषः दुज्जण थप्पणा — दुर्जनस्थापनां दुर्जनाः श्वश्रूननांद्राद्यस्तेषां स्थापनां परपुरुषनिरीक्षणं न विधेयमित्याद्यनेककौशाचारोपदेशमित्यर्थः परितेज्जि — परित्यज्य अप्पणा — आत्मना स्वयमेवेति यावत् तुह — त्वं जाहि — गच्छ संकेतस्थलं ॥

---

९१ । १ तुम (A), तड (F). २ जाउ (A). ३ परितज्जि (A). ४ दुज्जण (B). ५ थप्पिणा (B). ६ वविसन्ति (C). ७ मंपुणा (A & C), संपुणा (B). ८ एवि (A, B & C). ९ चाइव (A), चाविष (B & C), चावइ (E). १० वपुणा (A), बप्पुणा (B). ११ ८९ (A). १२ संयुता (A), संयुता (C).

हार ठवीजे[1] काहल[2] दुज्जे[3] कुंतिअ[4] पुत्ता[5] ए गुरु जुत्ता।
हत्थ[6] करीजे[7] हार ठवीजे[8] चंपअ[9]माला छंद कहीजे[9] ॥ ९२[10] ॥

नायकं प्रति उक्ता समागतायाः कस्याश्चित्सख्याः पुरा नायकाभिसारणाय कृतसङ्कल्पां पश्चान्निजकुलक्रमागताचारश्रवणेनाभिसरणमनभिलषमाणां कांचिन्नायिकामभिसारार्थं प्रेरयंत्या इदं वाक्यम्। आत्मनेत्यनेन परमनैश्चिंत्यं, वप्पुडेत्यनेन च नायककृपणीयत्वं, विकसत्केतकीसंपुटे इत्यनेन चाभिसारस्थानस्यान्यजनाज्ञेयत्वं व्यज्यत इति मन्तव्यम्। क्वचित् णिक्षु एवि आविअ वप्पुडेति पाठस्तत्र निभृतमयमागत इति व्याख्येयम्। संयुता [?] निवृत्ता [?]। ५८। (E).

९१। यथा। त्वमपि आ[या]हि सुंदरि आत्मना परित्यज्य दुर्जनस्थापनाः दोषारोपान्। विकसितकेतकीसंपुटे निभृतमचागमिष्यति त्वदनुकंप्यो नायकः॥ वप्पुडेति उक्तार्थे देशी। कुंजे इति शेषः। (G).

९२। हारः स्थाप्यते काहलद्वयं कुन्तीपुत्रः एकगुरुयुक्तः। हस्तः क्रियते हारः स्थाप्यते चम्पकमालाच्छन्दः कथ्यते॥ हारो गुरुः, काहलद्वयं लघुद्वयं, कुन्तीपुत्रः कर्णः द्विगुरुरिति यावत्, एष कुन्तीपुत्रः गुरुयुक्तः, हस्तो द्वि[अन्त्य]गुरुसचतुष्कलः। (C).

९२। १ चार ठवीज्जे (A), तारा वीजे (B). २ काहर (B). ३ दिज्जे (A), दूजे (B & C). ४ कुंती (A). ५ चत्त (A). ६ हथ्थेर (A), dropt from this up to the 4th quadrant of śloka 93, in (F). ७ करीजे (A). ८ चम्पक (B & C). ९ सुवीजे (A), करीजे (B & C). १० ९० (A).

जहा, ओग्गर[1] भत्ता रंभअ पत्ता
गाइक घित्ता[2] दुध्ध[3] सजुत्ता[4]।
मोइणि[5] मच्छा णालिच[6] गच्छा
दिज्जइ कंता खा पुणवंता[7] ॥ ९३[8] ॥ चंपकमाला।

---

९२। अथ दशाक्षरचरणस्य वृत्तस्यैकोनद्विशततमं भेदं चंपकमालानामकं वृत्तं लक्षयति। हार—गुरुः काहल दुण्णे—काहलद्वयं काहल एकलघ्वात्मको गणस्तद्द्वयमित्यर्थः, [ए]गुरु जुत्ता—एकगुरुयुक्तः, कुंतिअ पुत्ताए [?]—कुंतीपुत्रः कर्णः गुरुद्वयात्मको गण इति यावत् ठवीजे—स्थाप्यते। ततः हत्थ—हस्तः गुर्वंतः सगण इति यावत् करीजे—क्रियते, ततश्च हार—एकगुरुः ठवीजे—स्थाप्यते, तत् चंपअमाला छंद—चंपकमालाच्छंदः कहीजे—कथ्यते पिंगलेनेति शेषः ॥ ५९। (E).

९२। हारेति। हारः स्थाप्यतां काहलयुग्मं कुंतीपुत्र एकगुरुयुक्तः। हस्तः क्रियते हारः स्थाप्यते चंपकमालाच्छंदः कथ्यते ॥ हारो गुरुः, काहलो लघुः, कर्णो द्विगुरुः, हस्तः सगणः। (G).

९३। उदाहरति। ओग्गरभक्तं रम्भापा[प]त्रे गोदुग्धघृतयुक्तं। मोदिनीमत्स्या नालीचशाकान् ददाति कांता खादति पुण्यवान् ॥

---

९३। १ ओमर (E). २ दुध (C). ३ दुग्ध (B), घित्त (C). ४ सज्जुत्ता (A), संजुत्ता (C), सजुत्ता (E). ५ मोइस (B & C), मोइर (F). ६ नालिच (E & F). ७ पुणमता (A), पुणमन्ता (B), पुणमन्ता (C). ८ ९१ (A).

दीह[1] लहू जुअ दीह लहू सारवई धुअ[2] छंद कहू ।
अंत पओहर ठाइ[3] धआ चोदह[4] मत्त बिरामकआ[5] ॥ ९४[6] ॥

उद्धलितं मण्डं भक्तं, ओगरो धान्यविशेष इति केचित्, मोदिनी-[?]मत्स्या मनोज्ञमत्स्यः, नालीचवृक्षः शाकभेदः । (C).

९३ । चंपकमालामुदाहरति, ओगरेति । दुध्ध सजुत्ता—दुग्धसंयुक्तं ओगर भत्ता—ओगरभक्तं, ओगरो धान्यविशेषस्तदोदनमित्यर्थः, गाइक घित्ता—गोघृतं मोइणि मच्छा—मद्गुरमत्स्यः ना[णा]लिच गच्छा—नालीचवृक्षः, नालीचो गौडदेशे अनेनैव नाम्ना प्रसिद्धः शाकवृक्षविशेष इत्यर्थः, रंभअ पत्ता—रंभापत्रे कंता—कांतया दिज्जै[ज्जइ]—दीयते, पुणवंता—पुण्यवान् खा—खादति ॥ कस्यचिद्विदूषकस्य निजप्रियवयस्यं प्रति वाक्यमिदम् । चंपकमाला निवृत्ता । ६० । (E).

९३ । यथा । शालिभक्तो[क्तं] रंभापत्रे गोघृतं दुग्धसंयुक्तः[क्तं] । मद्गुरमत्स्यो नालिचशाको दीयते कांतया खादति पुण्यवान् ॥ नालिचशाकः शाकविशेषः । (G).

९४ । दीर्घो लघुयुगलं दीर्घो लघुः सारवती ध्रुवं छन्दः कथितं । अन्ते पयोधरं स्थापयित्वा ध्वजश्चतुर्दश मात्रा विरामीकृताः ॥ दीर्घो गुरुः, पयोधरो जगणः, ध्वज आदिलघुस्त्रिकलः । (C).

९४ । १ दिह (C). २ धब (A), धुब (E). ३ ठाव (A, B & C). ४ चउदह (A), चोकुह (B), चाकुह (C), चोदह (E & F). ५ बिराम करा (E). ६ ९१ (A).

जहा,

पुत्त पवित्त बहुत्त[1] धणा भत्ति कुटुंबिणि[2] सुद्ध मणा।
हक्क[3] तरासइ भिच्च गणा को कर बब्बर सग्ग मणा॥
९५[4]॥ सारवती।

---

९४। अथ दशाचरचरणस्य वृत्तस्यैकोनचत्वारिंशाधिकचतुःशततमं ४३९ भेदं सारवतीनामकं वृत्तं लक्षयति, दीहेति। यत्र प्रथमं दीह—दीर्घं गुरुमिति यावत् तदनंतरं लहु[हु] जुअ—लघुयुगं ततोऽप्यनंतरं दीह लहू—दीर्घलघू गुरुलघू इति यावत्, अंत—अंते दीर्घलघ्वोरनंतरमिति यावत् पओहर—पयोधरं मध्यगुरुं जगणमिति यावत् ठाइ—स्थापयित्वा [ध]आ—ध्वजः लघ्वादिस्त्रिकलो गण इति यावत् स्थाप्यत इति शेषः, कहा चउदह मत्त बिराम—कथितः चतुर्दशमात्राविरामः, सारवई—सारवतीनामकं छंद—छन्दः धुअ—ध्रुवं कहु[हु]—कथ्यताम्॥ प्राकृतभाषायां पूर्वनिपातानियमात् कहा-शब्दस्य पूर्वनिपातकरणे न दोष इति मंतव्यम्। ९१। (E).

९४। दीर्घो लघुयुगं दीर्घलघू सारवती ध्रुवं छंदः कथय। अंते पयोधरं स्थापयित्वा ध्वजः चतुर्दशमात्रा विरामकृताः॥ पयोधरो जगणः, ध्वजो लघुगुरू। (G).

९५। उदाहरति। पुत्रः पवित्रः बहुतरधनं भक्ता कुटुम्बिनी

---

९५। १ बहुत्त (A). २ कुडुम्बिणि (C). ३ चाह (B). ४ ९१ (A).

कसो पढमो[1] हत्थो[2] जुअलो[3]
कसो तिअलो हत्थो[2] चउथो[4] ।
सोला कलआ छक्का बलआ
एसा सुसमा दिट्ठा[5] सुसमा[6] ॥ ८६[7] ॥

शुद्धमनाः । हा[ह]क्क चलन्ति भृत्यगणाः कः करोतु [व]र्ब्बरः स्वर्गं मनः ॥ हक्क-शब्दः कोपवाची । (C).

८५ । सारा[र]वतीमुदाहरति, पुत्तेति । [पविन्त] — पविचाः पितृभक्ता इति यावत् अथवा पवेः वज्रात् चायंत इति पविचाः वज्रादपि रचका इत्यर्थः पुचाः बहुत्त धणा — बहुतरं धनं भत्ति — भक्ता प्रियभजनपरेति यावत् [सुद्ध मणा] — शुद्धमनाः अकुटिलांतःकरणा कुटुम्बिणि — बधूः यदि एतत्सर्वं भवतीति शेषः । भिच्च गणा — भृत्यगणः हक्क — हक्केन शब्दव्यापारमात्रेणेति यावत् तरासइ — चसति, तदा को — कः बब्बर — वर्ब्बरः सग्ग — स्वर्गं मणा — मनः कर — करोति न कोऽपीत्यर्थः ॥ ६२ । (E).

८५ । यथा । पुचाः पविचाः बहुतरं धनं भक्ता कुटुंबिनी शुद्धमनाः । हक्केन चसति भृत्यगणः कः करोति वर्ब्बरकः स्वर्गे मनः ॥ [कुटुंबिनी] स्त्री, [हक्क] शब्दविशेषः । (G).

८६ । कर्णः प्रथमो * * * हस्तः प्रकटः षोडश कलाः षड्-

८६ । १ पथमो (A). २ हत्थो (A). ३ युअलो (E). ४ पचमो (A, B & C). ५ दिट्ठा (B & C). ६ सुसमा (E). ७ ८४ (A), ६३ (E).

बलया एषा सुष[ष]मा दृष्टा सुष[ष]मा ॥ द्विगुरोरनन्तरम् अन्तगुरुस्तुष्कलः पुनरप्येवं मिलिता षोडश कला भवन्ति। अत्र च षड्गुरवः पतन्ति, सुष[ष]मा शोभना, सुष[ष]मेति छन्दः। (C).

८६। अथ दशा[क्ष]रचरणस्य वृत्तस्य सप्तनवत्यधिकचिशततमं भेदं सु[सु]ष[ष]मानामकं वृत्तं लक्षयति, कणो इति। पढमो—प्रथमः कणो—कर्णः गुरुद्वयात्मको गण इति यावत् बुअलो—द्वितीयः हत्यो—हस्तः गुर्वन्तः सगण इत्यर्थः, तिअलो—तृतीयः कणो—कर्णः पुनः गुरुद्वयात्मक एव गण इति यावत्, चउथो—चतुर्थः हत्यो—हस्तः पुनः सगण इत्यर्थः यत्र भवतीति प्रतिगणानंतरमध्याहृत्य योजनीयं। सोला कलआ—षोडशकलाका षोडश कलाः मात्रा यस्यां सा तादृशीत्यर्थः, छक्का बलआ—षड्बलया षट् बलया गुरवो यस्यां सा तादृशीत्यर्थः षड्गुरुयुक्तेति यावत् एषा—एषा असुसमा प्राणसमा सुषमा—सुषमा दिट्ठा—दृष्टा पिंगलेनेति शेषः॥ सुषमानामकमेतद्वृत्तं पिंगले[न] प्रकाशितमित्यर्थः। अत्र कलाज्ञापकं च पदं पद्यपूरणार्थमेव, वर्णवृत्तेषु मात्राकथनस्यानतिप्रयोजनतया [लघु]गुरुज्ञापकत्वाच्चेति मंतव्यं। क्वचित्तु हत्यो पअलो इति पाठस्तत्र हस्तः प्रकट इति व्याख्येयम्। (E).

८६। कणेति। कर्णः प्रथमो हस्तो द्वितीयः कर्णस्तृतीयो-हस्तश्चतुर्थः। षोडशकला षड्बलया एषा सुषमा दृष्टा असुसमा॥ कर्णो द्विगुरुः, हस्तः सगणः, बलयो गुरुः। (G).

जहा, भोहा[1] कविला[2] उच्चा णिअला[3]
मझ्झा[4] पिअला णेत्ता[5] जुअला।
रुक्खा वअणा[6] दंता विरला[7]
केसे[8] जिविआ[9] ताका पिअला॥ ९७[10]॥ सुसमा[11]।

९७। उदाहरति। भ्रूः कपिला उच्चं ललाटं मध्यपीतं नेत्रयुगलं। रुक्षं वदनं दन्ता विरलाः कथं जीवतस्याः प्रियः॥ एतादृग्लक्षणा विधवा भवतीत्यर्थः। (C).

९७। सुषमामुदाहरति, भो इति। यस्याः भ्रूः कविला — कपिला ललाटः[टं] उच्चा — उच्चः[च्चं] णेत्ता युगलं[जुअला] — नेत्रयुगलं मझ्झा पिअला — मध्यपीतं मार्जारनयनसदृशमित्यर्थः। वअणा — वदनं रुक्खा — रुक्षं दंता विरलाः, ताका — तस्याः पिअला — प्रियः कै[के]से — कथं जिविआ — जीवति॥ परमकुत्सितरूपा यस्य कांता स कथं प्राणान्धारयति इति सकलावयवरमणीयकांताकस्य कस्यचित्कुकांताकं प्रति वचनमिदम्। ६४। (E).

९७। यथा। भ्रूकपिला उच्चललाटा मध्यपीतनेत्रयुगलं। रुक्षं वदनं दंताः विरलाः कथं जीवति तस्याः प्रियः॥ (G).

९७। १ भोंहा (B & C). २ कपिला (A). ३ णिअला (A), णिआला (B), णिअरा (E), णिदला (F). ४ मझ्झे (A), मज्झे (B & C). ५ णअण (A). ६ वदना (F). ७ विरला (A), विरला (B). ८ कैसे (B, C, E & F). ९ जिविआ (A). १० ९५ (A), ६४ (E). ११ सुषमा (A).

दिअवर हार[1] पअलिआ पुणवि[2] तहट्ठिअ[3] करिआ[4]।
वसु[5]लहु वे गुरु सहिआ अमिअगई धुअ[6] कहिआ॥९८[7]॥

९८। द्विजवरहारप्रकटिता पुनरपि तथैव कृता। वसुलघु-द्विगुरुसहिता अमृतगति[गतिः] ध्रुवं कथिता॥ द्विजवरश्चतुर्लघुः, हारो गुरुरेताभ्यां प्रकटिता, पादे गुरुद्वयमष्टौ लघवो भवन्ति। (C).

९८। अथ दशाक्षरचरणस्य वृत्तस्य षण्णवत्यधिकचतुःशततमं भेदम् अमृतगतिनामकं वृत्तं लक्षयति, दिअवरेति। दिअवर हार पअलिआ—द्विजवरहारप्रकटिता द्विजवरश्चतुर्लघ्वात्मको गणः हारो गुरुस्ताभ्यां प्रकटितेत्यर्थः, अथवा प्राकृतभाषायां पूर्वनिपाता-नियमात् प्रकटितद्विजवरहारेति पअलिआ-शब्दस्य पूर्वनिपातं कृत्वा योजनीयं, पुणवि—पुनरपि तहट्ठिअ—तथैव संस्थाप्य द्विजवर-हारौ दत्त्वेति यावत् करिआ—कृता। अथवा पूर्वोक्तप्रकारेण करिआ-शब्दस्य पूर्वनिपातं कृत्वा पुणवि करिआ तहट्ठिअ—पुनरपि कृततथास्थितिः कृता तथा तेन प्रकारेण द्विजवरहार-स्थापनप्रकारेणेति यावत् स्थितिर्यस्याः सा तादृशीति योजनीयम्। वसु लहु वे २ गुरु सहिआ—वसुलघुद्विगुरुसहिता वसवोऽष्टौ, तथा-चाष्टसंख्याकैर्लघुभिर्गुरुद्वयेन च युक्तेत्यर्थः, अमिअगई—अमृतगतिः धुअ—ध्रुवं कहिआ—कथिता॥ तदमृतगतिनामकं वृत्तं कथित-मित्यर्थः। अथ लघुगुरुज्ञापकस्वरूपोऽनतिप्रयोजनकत्वात् पद्यपूर-

९८। १ Dropt in (A). २ पुणुवि (C). ३ तहथिअ (A), तहठिअ (B). ४ करिआ (A). ५ बज्ज (F). ६ धूअ (B & C). ७ ९९ (A), ९५ (E).

जहा, सरअ[1] सुधाअर[2] वअणा
बिकअ[3] सरोरुह णअणा ।
मअ गल[4] कुंजर गमणी[5]
पिअसहि[6] दिट्ठिअ[7] तरुणी ॥ ९९[8] ॥ अमृतगतिः ।

णार्थमिति मंतव्यं, प्रथमं लघुचतुष्टयं तदनंतरमेको गुरुः पुनर्लघुचतुष्टयं पुनरेको हार एते गणाः क्रमेण यस्य चरणे पतंति तदमृतगतिनामकं वृत्तमिति निष्कृष्टोऽर्थः । ६५ । (E).

९८ । दिअ इति । द्विजवरो हारः प्रकटितः पुनरपि तथास्थितः कृतः । वसुलघुद्विगुरुसहिता अमृतगतिर्ध्रुवं कथिता ॥ द्विजवरश्चतुर्लघुः, हारो गुरुः । (G).

९९ । उदाहरति । शरत्सुधाकरवदना चपलसरोरुहनयना । मदकलकुञ्जरगमना प्रियसखि दृष्टा तरुणी ॥ (C).

९९ । अमृतगतिमुदाहरति, सरेति । सरअ सुधाअर वअणा — शारदसुधाकरवदना बिकच सरोरुह णअणा — विकचसरोरुहनयना । मअ गल कुंजर गमणी — मदकलकुञ्जरगमना तरुणी हे प्रि[य]सखि दिट्ठा — दृष्टा ॥ कचित् जिविअ सुधा रस वअणेति पाठस्तत्र जीवितस्य प्राणस्य सुधारस इव वचनं यस्याः सा जीवितसुधारसवचना इति व्याख्येयम् । अमृतगतिर्निवृत्ता । ६६ । (E).

९९ । १ सरस (A & F). २ सुधायस (A). ३ चवल (A, B & C), विकच (E). ४ गल मल (A), मल गल (B), मत्त कल (F). ५ गमणा (A), गमणौ (C). ६ The fourth quadrant runs thus in (A):—जिविस समारस रमणा. ७ दिट्ठस (B), दिट्ठ्ठा (E & F). ८ ९० (A), ६६ (E).

णील[1] सरूअह[2] एह[3] करीजे[4]
तिण्णि भआ गण[5] जत्थ[6] कहीजे[7] ।
सोलह[8] मत्तह पाअ[9] ठवीजे
दुग्गुरु अंतहि बंधु भणीजे[10] ॥ १००[11] ॥

९९ । यथा । शारदसुधाकरवदना विकचसरोरुहवदना[नयना] । मदकलकुंजरगमना प्रियसखि दृष्टा तरुणी ॥ (G).

१०० । अथैकादशाक्षरा । नीलस्वरूपम् एतत् क्रियते यत्रो भगणास्त्रय क्रियन्ते । षोडश मात्राः पादे स्थाप्यन्ते द्वौ गुरू अन्ते बन्धुः क्रियते ॥ बन्धुच्छन्दसो नील इत्यपि नामान्तरम् । यद्वा नीलस्वरूपः पिङ्गलः तेनैतत् क्रियते । णील सप्पवइ [?] इति पाठे स्पष्टार्थः । (C).

१०० । अथैकादशाक्षरचरणस्य वृत्तस्याष्टचत्वारिंशोत्तरं सहस्रद्वयं भेदा भवंति, तत्रैकोनचत्वारिंशोत्तरचतुःशततमं ४३९ भेदं बंधुनामकं वृत्तं लक्षयति, णीलेति । जत्थ — यत्र पाअ — पादे तिण्णि — त्रयः भआ अण — भगणाः भणीजे — भण्यंते, अंतहि — अंते भगणत्रयांते पादांते वेत्यर्थः दुग्गुरु — द्विगुरुः करीजे — क्रियते, सोलह मत्तह — षोडश मात्राश्च ठवीजे — स्थाप्यंते, एह —

१०० । १ लील (A & C). २ सरोवह (A), सरूप (B). ३ एछ (B & C). ४ करिउजे (C), कजे (E). करीजे (F). ५ चण (E & F). ६ तत्थ (A, B & C). ७ धरीजे (A), भणीजे (B & C). करीजे (F). ८ षोडश (B). ९ पाउ (A). १० सुणीजे (A), करीजे (B & E), करीजे (C). ११ ९८ (A), ९० (E).

जहा, पंडव[1] बंसहि जम्म[2] धरीजे[3]
संपअ अज्जिअ धम्मक दिज्जे[4]।
सोउ[5] जुहुट्ठिर[6] संकट[7] पावा[8]
देवक[9] लिक्खिअ[10] केण मेटावा[11] ॥ १०१[12] ॥ बंधु।

एतत् णील सिरोरुह — नीलशिरोरुहेण पिंगलेनेति यावत् बंधु — बंधुनामकं वृत्तं कहीजे — कथ्यते ॥ यद्वा णील सरूअह — नीलस्वरूपापरनामकमिति यावत् बंधु — बंधुनामकं वृत्तं कथ्यत-इति व्याख्येयम्। अत्र मात्राज्ञापकचरणमनतिप्रयोजनकत्वात् पद्य-पूरणार्थमेवेति मंतव्यं, भगणत्रयानंतरं गुरुद्वयं यत्र प्रतिचरणं पतति तद्बंधुनामकं वृत्तमिति फलितार्थः। (E).

१००। अथैका[दशा]क्षरं त्रिष्टुप्। णीलेति। णी[नी]लसरो-रुहेण पिंगलेने[त]त्कथितं त्रयो भगणा यत्र भण्यंते। षोडश मात्राः पादे स्थाप्यंते द्विगुर्वंतो[ते] बंधुः छंदः कथ्यते ॥ नीलसरोरुहः पिंगलः। (G).

१०१। पाण्डववंशे जन्म धृत्वा सम्पदम् अर्जयित्वा धर्माय

१०१। १ पाण्डव (B & C). २ जम्म (B & F). ३ करीजे (A), धरिज्जे (E & F). ४ धम्म करीजे (A), विप्पच दीजे (B & C), धम्मके दिज्जे (E). ५ सोइ (A & C), सोवि (B). ६ जुधिट्ठिर (A), जुधिट्ठिर (B), जुधहिर (C). ७ सङ्कट (C). ८ पावा (B & C). ९ देवल (B & C), दैवक (E & F). १० लेक्खल (A), लेक्खिअ (E & F). ११ मेटावा (B & C), मिटावाला (F). ए to be read short in मेटावा. Vide श्लोक ५, p. 7. १२ ९९ (A), ९८ (E).

दिग्अवर हार लहू भुअला
वलग्र परिट्ठिग्र[1] हत्थ अला।
पग्र काल चोहह[2] जंप[3] अही
कइवर[4] बह्महि[5] हो[6] सुमुही ॥ १०२[7]।

---

दीयते। तेनापि युधिष्ठिरेण सङ्कटं प्राप्यते दैवलिखनं केन लुप्यते ॥ (C).

१०१। बंधुमुदाहरति, पण्डवेति। पण्डव बंसहि—पांडववंशे पाण्डोरयं—पाण्ड[वः] पांडवस्यासौ वंश[श्च]श्चेति पांडववंश[श्र]-स्तस्मिन्नित्यर्थः यस्येति [शेषः] जम्म—जन्म क्रियते विधात्रेति भावः, अज्जिग्र—अर्ज्जयित्वा संपग्र—संपत् धम्मके—धर्म्माय दिज्जे—दीयते येनेति शेषः। सोउ—सोऽपि जुहुट्ठिर—युधि-ष्ठिरः संकट—संकटं पाग्रा—प्राप्तः, अतः दै[दै]वक—दैवस्य विधे-रिति यावत् लेक्खिग्र—लिखितं केण—[केन] मेटावा—विलु-प्यते ॥ न केनापीति भावः। बंधुर्निवृत्तः। एतस्यैवान्यत्र दोधक-संज्ञा। ६८। (E). [This anomaly has been taken notice of, in Ghosha's Compendium, p. 70, foot-note.—Ed.]

१०१। पांडववंशे जन्म क्रि[भ्रि]यते संपदम् अर्जयित्वा धर्मार्थे

---

१०१। १ परिट्ठिअ (A), परिट्ठअ (B), परिट्ठर (C). २ चउदह (A), चोदह (C), चोदह (E & F). ३ जंपु (A). ४ कइअण (A). ५ बालहि (A), बग्गहि (B), जाणह (E), जाणहि (F). ६ सो (E & F). ७ १०० (A), ९९ (E).

जहा, अइचल जोव्वण देह धणा
सिविणअ[१] सोअर बंधु अणा[२] ।
अवसउ काल पुरी गमणा
परिहर बब्बर पाप मणा ॥ १०३[३] ॥ सुमुखी ।

---

दीयते । युधिष्ठिरः संकटं प्राप्नोति दैवतलिखितं केन प्रोंच्छ्यते ॥ (G).

१०२ । द्विजवरो हारः लघुयुगलं वलयपरिस्थितं हस्ततलं । पदे कलाश्चतुर्दश जल्पति अहिः कविजनवल्लभा सुमुखी ॥ द्विजवरो लघुचतुष्कलं, हारो गुरुः, वलयं गुरुर्हस्ततलं चतुष्कलोऽन्त्यगुरुः । (C).

१०२ । अथैकादशाक्षरचरणस्य वृत्तस्याशीत्यधिकाष्टशततमं भेदं ८८० सुमुखीनामकं वृत्तं लक्षयति, दिअवरेति । दिअवर—द्विजवरश्चतुर्लघ्वात्मको गणः ततो हार—हारो गुरुरिति यावत्, ततो लहु जुअला—लघुयुगलं, ततश्च वलअ—वलयो-गुरुः, ततश्च हत्थ अला—हस्ततलं गुर्वंतः सगण इति यावत्, एवं-प्रकारेण यत्र चउदह [?] कल—चतुर्दश कलाः पअ—पादे परिट्ठिअ—परिस्थिताः, सो—सा [सु]मुही—सुमुखी जाणऊ—ज्ञायतां तत्सुमुखीनामकं वृत्तं ज्ञेयमित्यर्थः, इति कइवर—कविवरः अही—अहिः पिंगल इति यावत् जंपइ [?]—जल्पति । ६८ । (E).

---

१०३ । १ सिविणअ (E). २ जणा (E). ३ १०१ (A), ७० (E).

चामर[1] काहल[2] जुग्ग ठवीजे
हार लहू जुअ तत्थ[3] धरीजे ।
कस्स[4] गणा पअ अंत करीजे[5]
दोधअ[6] छंद फणी पभणीजे[7] ॥ १०४[8] ।

---

१०२ । दिअ इति । द्विजवरो हारो लघुयुगलं वलयः प्रतिष्ठितहस्ततलः । पादे कलाश्चतुर्दश जल्पति अहिः कविवराः जानीत सा सुमुखी ॥ द्विजवरश्चतुर्लघुः, हारो गुरुः, वलयो गुरुः, हस्तः सगणः । (G).

१०३ । उदाहरति । अतिचलानि यौवनदेहधनानि, स्वप्नसहोदरा बन्धुगणाः । अवश्यं कालपुर्य्यां गमनं परिहर बर्ब्बर पापं मनः ॥ (C).

१०३ । सुमुखीमुदाहरति, अईति । जोब्बण देह धणा — यौवनदेहधनानि अइचल — अतिचलानि, सोअर — सोदरा भ्रातर इति यावत् बंधु जणा — अन्ये अपि कुटुम्बा इत्यर्थः सिविणअ — स्वप्नवत् स्वप्नेन तुल्यम् इति यावत् । यद्वा बंधुजनाः सिविणअ सोअर — स्वप्नसोदराः स्वप्नतुल्या इत्यर्थः । काल पुरी गमणा — यमपुरीगमनम् अवस[ऊ] — अवश्यम् अतो हेतोः हे बर्बर मणा — मनः

---

१०४ । १ चामल (F). २ कोमल (B). ३ तच्च (A), पाच (B & C). ४ सच (A). ५ र दीजे (A), धरीजे (B & C). ६ दोधच (B). ७ फणीस भणीजे (A), छंदक णाम करीजे (B), छंदह णाम करीजं (C), फणी पभणिज्जे (F). ८ १०२ (A), ७५ (E).

पाप—पापात् परिहर ॥ कंचिन्महापापकर्म्माणं प्रति कस्य-चिन्मित्रस्योपदेशवाक्यमेतत् । सुमुखी निवृत्ता । ७० । (E).

१०३ । यथा । अतिचलानि यौवनदेहधनानि स्वप्नसोदरो-बंधुजनः । अवश्यं काल[पुरी]गमनं परिहर बर्ब्बर पापे मनः ॥ (G).

१०४ । चामरं काहलयुग्मं हारलघुयुगं तथा भ्रियते । कर्ण-गणाः पदान्ते क्रियन्ते दोधकच्छन्दः फणीन्द्रेण भण्यते ॥ चामरं गुरुः, काहलं लघु युग्मं तयोर्युग्ममित्यर्थः, हारः लघुयुगं । हार लहू जुम्र जुग्ग धरीजे इति पाठः सुगम एव । अत्र यद्यपि बन्धु-च्छन्दसा सहाभेदस्तथापि छन्दस्तदेव नामान्तरेण अन्यमुनिनोक्त-मिति दर्शितं । केचित्तु चामरकाहलयुग्मादीनामत्र नियमः, न तु क्रमतस्तात्पर्य्यं, तथा च हरतु दुरितं देवमुरारिरित्यादिकमपि दोधकच्छन्द एवेत्याहुः । (C).

१०४ । अथैकादशाक्षरचरणस्य वृत्तस्यैकोनचत्वारिंशोत्तरचतुः-शततमं भेदं पुनरपि दोधकमेवेति नामांतरेणाह, चामरेति । यत्र प्रथमं चामर—चामरं गुरुरिति यावत् काहल जुग्ग—काहलयुगं काहलो लघुस्तद्यु[यु]गमित्यर्थः, ठवीजे—स्थाप्यते, ततश्च हार—हारो गुरुः लहू—लघू हारानन्तरं द्वौ लघू इत्यर्थः जुम्र—यु-[यु]गं वारद्वयमित्यर्थः एको गुरुस्तदनन्तरं लघुद्वयमिदं वारद्वय-मिति परमार्थः, तत्थ—तथ्यं तथा वा धरीजे—भ्रियते। एवं सति भगणत्रयं सिध्यति, अन्यथा चामरकाहलयुगानन्तरं हारलघुद्वय-मात्रोक्त्या तृतीयभगणालाभाद्भांतप्रलपितत्वापत्तिरित्यस्मत्तातचर-णोपदिष्टव्याख्योपदेशो निर्मत्सरैः सुधीभिर्विभावनीयः। यत्र चंत—

जहा, पिंग जटावलि ठाविअ गंगा
धारिअ[1] णाअरि[2] जेण अधंगा ।
चंदकला जसु सीसहि णोक्खा[3]
सो तुह[4] संकर दिज्जउ[5] मोक्खा[6] ॥१०५[7]॥ दोधक ।

---

पादांते कस गणा — कर्णगणः गुरुद्वयात्मको गण इति यावत् करीजे — क्रियते, फणी — पिंगलः तत् दोधकच्छन्दः दोधकनामकं वृत्तं पभणीजे — प्रभणति ॥ यत्र भगणत्रयोत्तरं गुरुद्वयं तद्दोधकनामकं वृत्तमिति फलितार्थः । बंधुदोधकयोश्चोद्‌वनिका-मात्रभेदाद्भेदः स्वरूपतस्तु न कश्चिद्विशेष इति विभावनीयम् । (E).

१०४ । चामलेति । चामरं काहलयुग्मं स्थाप्यतां, हारलघु-युगं तत्र स्थाप्यतां । कर्णगणः पादांते क्रियते, दोधकच्छंदः फणी प्रभणति ॥ चामरो गुरुः, काहलो लघुः, हारस्य गुरो-र्लघ्वोश्च युगमित्यर्थः । कर्णो द्विगुरुः । (G).

१०५ । उदाहरति । पिङ्गलजटावलीस्थापितगङ्गः धृता नागरी येनार्द्धांगे । चन्द्रकला यस्य शीर्षे स्थिता [नोक्या] स तुभ्यं शङ्करः [द]दातु मोचम् ॥ (C).

१०५ । दोधकमुदाहरति, पिंगेति । येन पिंग जटावलि — ता[सु]जटावल्यां गंगा ठाविअ — स्थापिता, अथवा यः पिंग-जटावलीस्थापितगंग इत्येकमेव पदं शिवविशेषणं, येन अर्द्धं[धं]गा

---

१०५ । १ ठाविच (A). २ णाचरी (C). ३ णोखा (C), णोक्खा (F). ४ तुच ( E & F). ५ दिज्जउ (B), दीज्जउ (E). ६ भाक्खा (E), मोक्खा (F). ७ १०२ (A), ७१ (E).

कण्णो दुण्णो[1] हार एक्को[2] बिसज्जे
सल्ला कण्णा गंध कण्णा सुणिज्जे[3]।
बीसा[4] रेहा पाअ पाए गणिज्जे[5]
सप्पा राए सालिणी सा मुणिज्जे[6] ॥ १०६[7] ॥

—अर्द्धांगे नागरी स्त्रीति यावत् धारिअ—धृता। जसु—यस्य सीसहि—शीर्षे णोक्खा—रमणीया चंद्कला—चन्द्रकला दृश्यते इति शेषः, सो—सः संकर—शिवः तुअ—तुभ्यं मोक्खा [?]—मोक्षं दुःखप्रागभावासमानाधिकरणं दुःखध्वंसमिति यावत् दीज्जउ—ददात्विति यावत् ॥ दोधकं निवृत्तम्। ७२। (E).

यथा। पिंगलजटावलिस्थापितगंगो धारिता येन नागरी अर्धांगे। चंद्रकला यस्य शीर्षे रमणीया, स तव शंकरो ददातु सौख्यं ॥ (G).

१०६। कर्णौ द्विगुरुः स द्विगुणः ततोऽपि हार एकः सज्जी-कृतः शल्यं कर्णः गन्धः कर्णः। विंशतिः कलाः पादे पादे गणय सर्पराजेन शा[शा]लिनी भणिता ॥ कर्णौ द्विगुरुस्तस्य द्विगुणः चतुर्गुरु-रिति यावत्, ततो हारो गुरुः, शल्यं लघुः, कर्णौ द्विगुरुः, गन्धो-लघुः, कर्णौ द्विगुरुः। (C).

१०६। अथैकादशाक्षरचरणस्य वृत्तस्यैकोनमवत्युत्तरद्विशततमं भेदं २८९ शालिनीनामकं वृत्तं लक्षयति, कण्णेति। यत्र प्रथमं कण्णो दुण्णो—कर्णद्वयं कर्णौ गुरुद्वयात्मको गणस्तद्द्वयमित्यर्थः

१०६। १ दुणौ (A). २ एक्को (C). ३ एक्को सुणिज्जे (C). ४ बीसा (B & C). ५ भणिज्जे (A & B). ६ सुणिज्जे (A). ७ १०४ (A), ७३ (E).

जहा, रंडा चंडा[1] दिक्खिदा[2] धम्म दारा
मज्जं मंसं पिज्जए[3] खज्जए आ[4]।
भिक्खा भोज्जं चम्म खंडं च सेज्जा[5]
कोलो[6] धम्मो कस्स णो भादि रम्मो[7] ॥ १०७[8] ॥
सालिणी।

---

हार एक्को — हार एकः हारो गुरुरित्यर्थः विसज्जे — विसृज्यते, ततः सल्ला कण्णा गंध कण्णा — शल्यकर्णगंधकर्णाः, शल्यो लघुः, कर्णो-गुरुद्वयात्मको गणः, गंधो लघुः, कर्णो गुरुद्वयात्मको गण एते इत्यर्थः पाअ पाए — पादे पादे प्रतिचरणमिति यावत् सुणिज्जे — श्रूयते, तथा वीसा — विंशतिः रेहा — रेखा मात्रा इति यावत् गणिज्जे गण्यंते, सा सप्पा राए — सर्पराजेन सालिणी — शालिनी-नामकं वृत्तमिति यावत् सुणिज्जे — मन्यते ॥ अत्र मात्राकथनं पादपूरणार्थमेव, लिंगविभक्तिवचनव्यत्यासस्तु प्राकृतभाषायां न दोषायेति मन्तव्यं। मगण-तगणच[द्व]योत्तर-गुरुद्वयरचितचरणा शालिनीति फलितार्थः'। ७३। (E).

१०६। कण्णो इति। कर्णयुगं हारम् एकं विसृज्य शल्यः कर्णः गंधः कर्णः श्रूयंते। विंशतिः रेखाः पादे पादे गण्यंते सर्पराजेन शालिनी सा मान्यते ॥ कर्णौ द्विगुरुः, हारो गुरुः, शल्यगंधौ लघू। (G).

---

१०७। १ रण्डा (C). २ दिक्खिया (A & B), दीक्खिदा (C). ३ पिज्जिए (E). ३ & ४ खज्जए पिज्जए च (B), खज्जए पिज्जए च (C). ४ खज्जए च (A). ५ सज्जा (A & C), सेज्जा (B). ६ कोलो (A). ७ रम्मो (B). ८ १०५ (A), ७४ (E).

दिअ[1]बर जुअ लहु[2]जुअलं पअ[3] पअ पअलिअ वलअं ।
चउ पअ चउ बसु[4] कलअं[5] दमणाअ फणि भणं[6] ललिअं[7] ॥
१०८[8] ॥

१०७ । उदाहरति । रण्डा रण्डा दीक्षिता धर्म्मदारा रम्यं [मद्यं] मांसं खाद्यते पीयते च । भिक्षा यो[भो]ज्यं चर्म्मखण्डश्च शय्या कौलो धर्म्मः कस्य नो भाति रम्यः ॥ यस्मुत्रीगलमत्र तु लभ्यते सैव दीक्षिता यथाविधिगृहीतमन्त्रा धर्म्मदारत्वं प्रापिता, भोज्यं किम् इत्यादिकांक्षायां भिक्षालब्धमित्यर्थः, कौलो धर्म्मः शाक्तशास्त्रविषयोक्तधर्म्मः । कर्पूरमञ्जर्य्यां भैरवानन्दस्येयमुक्तिः । (C).

१०७ । शालिनीमुदाहरति, रण्डेति । चंडा परमकोपवती दिक्खिदा—दीक्षिता शाक्तशास्त्रोक्तविधिगृहीतमन्त्रेति यावत् रण्डा—विधवा धम्म दारा—धर्मपत्नी, मज्जं—मद्यं पिज्जिए—पीयते, मंसं अ[आ]—मांसं च खज्जए—खाद्यते । भिक्खा—भिक्षा भोज्जं—भोज्यं चर्मखण्डं च सेज्जा—शय्या, एतादृशः कोलो—कौलः वंशपरंपरापरिप्राप्तः शाक्ततंत्रविशेषोक्त इति यावत् धम्मो—धर्म्मः कस्स—कस्य रम्मो—रम्यो नो भाति ॥ अपि तु सर्वस्यापीत्यर्थः । कर्पूरमंजरीनाटकस्थं कापालिकभैरवानन्दस्य राजानं प्रति वाक्यमिदम् । ७४ । शालिनी निवृत्ता । (E).

१०८ । १ द्विज (F). २ लघु (F). ३ Dropt in (B). ४ बण (A). ५ वलअं (A). ६ भव पवि (A), भव फवि (B & C). ७ भविअं (A & C), चविअं (B). ८ १०९ (A), ७५ (E).

जहा, परिणत्र[1] ससहर वत्ररणं
बिमल कमल दल णत्ररणं।
बिहित्र[2] त्रसुर कुल दलणं[3]
पणमह[4] सिरि[5] महु महणं॥ १०९[6]॥ दमणक[7]।

१०७। यथा। रंडा चंडा दीक्षिता धर्मदारा मद्यं मांसं पीयते खाद्यते च। भिक्षा भोज्यं चर्मखंडं च शय्या कौलो धर्मः कस्य नो भाति रम्यः॥ (G).

१०८। द्विजवरयुगलं लघुयुगलं पदे पदे प्रकटितवलयम् अन्ते गुरुयुक्तं। * * * चतुर्व्वसुकलम् अष्टचत्वारिंशत्कलम्। (C).

१०८। अथैकादशाक्षरचरणस्य वृत्तस्य चतुर्विंशत्युत्तरसहस्रतमं भेदं दमनकनामकं वृत्तं लक्षयति, दिअवरेति। दिअवर जुअ—द्विजवरयुगलं चतुर्लघ्वात्मकगणद्वयमिति यावत् लहु जुअलं—लघुयुगलं वलअं—वलयं गुरुरिति यावत् पअ पअ—पादे पादे प्रतिचरणमिति यावत् पअलिअ—प्रकटितं। चउ पअ—चतुःपादेषु चउ वसु कलअं—चतुर्वसुकलाकं दक्षिणगत्यैवांकस्थापनेन ४८ चतुर्वसुशब्देनाष्टचत्वारिंशन्मात्रा लभ्यंते, तथा चतुर्ष्वपि पादेषु मिलिताष्टचत्वारिंशन्मात्राकमिति तत्त्वं, दमणअ—दमनकं फणी ललिअं—ललितं यथा स्यात्तथा भण—भणति॥ लघुदशकोत्तरगुरुरचितचरणो दमनक इति फलितार्थः। ७५। (E).

१०९। १ पचलिच (A, B & C). २ वच्छिच (A, B & C). ३ दलणं (B & C). ४ पणमद (A). ५ सिर (E). ६ १०७ (A), ७६ (E). ७ दमणच (C).

ताल णंदए समुद्द तूरआ[१]
जोहलेण छंद एहु[२] पूरआ।
गारहाइँ[३] अक्खराइ[४] जाणिआ
णाअ राअ[५] जंप एअ[६] सेणिआ[७] ॥ ११०[८] ॥

१०८। दिअ इति। द्विजवरयुगं लघुयुगलं पदे [पदे] प्रकटितवलयं। चतुःपदे चतुर्वसुकलं दमनकं फणी भणति ललितं॥ वलयो गुरुः। (G).

१०९। उदाहरति। प्रकटितं ग्रग्रधरतुल्यं वदनं यस्य विमलकमलदलनयनं। बलिकासुरकुलदहनं प्रणमामि शिरसि मधुमथनं कृष्णं॥ (C).

१०९। दमनकमुदाहरति, परिणअ इति। परिणअ [ससहर वअणं]—परिणतशशधरवदनं विमलकमलदलनयनं। विहितासुर-[कुल]दमनं मअ महणं—मधुमथनं श्रीकृष्णं [सिर—शिरसा] पणमह—प्रणमत॥ दमनको निवृत्तः। ७६। (E).

१०९। यथा। परिणतशशधरवदनं विम[ल]कमलदलनयनं। विहितासुरकुलदहनं प्रणमत श्रीमधुमथनम्॥ (G).

११०। तालनन्दसमुद्रतूर्य्यजोहलेन एतत् छन्दः पूरय। एकादशाक्षराणि ज्ञातानि नागराजो जल्पत्येषा सेनिका॥ तालादय-

११०। १ तूरआ (B). २ एअ छंद (A & B), एड छन्द (C). ३ गारआर (B). ४ अक्खराणि (F). ५ राअ (A). ६ एड (A & B), एअ (E).
७ 4th quadrant dropt in (C). ८ १०८ (A), ७७ (E).

जहा, झत्ति पत्ति पाअ भूमि कंपिआ
टप्पु[1] खुंदि खेह[2] सूर झंपिआ ।
गोल[3]राअ जित्ति[4] माण मोलिआ
कामरूअ[5] राअ बंदि[6] छोलिआ[7] ॥ १११[8] ॥
सेनिका[9] ।

श्चत्वारोऽन्त्यलघुत्रिकलवाचकाः, [Vide श्लोक १८, p. 27.—Ed.] जोहलः पञ्चकलो मध्यलघुः । (C).

११० । अथैकादशाक्षरचरणस्य वृत्तस्य व्यशीत्युत्तरषट्शततमं ६८३ भेदं सेनिकानामकं वृत्तं लक्षयति, तालेति । आदौ ताल णंदए — तालनन्दाभ्यां ततः समुद्द तूरआ — समुद्रतूर्य्या[भ्यां] गुर्वादि-त्रिकलगणाभ्यामित्यर्थः ततश्च जोहलेन मध्यलघुकेन रगणेनेति यावत् एऊ — एतत् सेणिआ — सेनिकानामकं छंद — वृत्तं पूरआ — पूर्य्यतां । अत्र च प्रतिपदं गारहा[इ] अक्खराइ — एका-दशाक्षराणि आणिआ — ज्ञातव्यानि, एम — एतत् णाअ राअ — नागराजः जंपि[प] — जल्पति ॥ यद्वा एकादशाक्षरज्ञातेत्येकं पदं कृत्वा वृत्तविशेषणपरतया गारहाइं इति चरणो जो[यो]जनीयः । अत्राक्षरकथनमनतिप्रयोजनकतया पद्यपूरणायेति बोध्यम् । गुरुत्तरैः पंचभिर्गुर्वादित्रिकलगणै रचितचरणा सेनिकेति निष्कृष्टार्थः । (E).

११० । तालेति । तालनन्दाभ्यां समुद्रतूर्याभ्यां जोहलेन छंद एतत्

१११ । १ टप्पि (A), टप्प (B & C). २ खुंदि धूलि (B & C). ३ गोड़ (E & F). ४ जित्ति (A). ५ कामरूप (B). ६ बंधि (A). ७ छोड़िआ (B & C). ८ १०९ (A), ७८ (E). ९ सुसेनिका (A).

कुंतीपुत्ता पंचा दिण्णा[1] जाणीआ
अंते कंता[2] एक्का[3] हारा माणीआ ।
पाआ पाआ मत्ता दिठ्ठा[4] बाईसा[5]
मालत्ती[6] छंदा[7] जंपंता[8] णाएसा ॥ ११२[9] ॥

पूर्यतां। एकादशाचराणि ज्ञातव्यानि नागराजो जल्पति एषा सेनिका ॥ तालेति गुरुलघुरूपा गणास्तलार इत्यर्थः, ओहलो रगणः । (G).

१११ । उदाहरति, झत्तीत्यादि । टापैश्चलदश्वखुरैः चुणाभिर्धूलिभिः ख[?]शब्दो धूलिवाचको देशीति वदन्ति, परे तु खशब्दः चोदवाचकः, तथाच टापोत्थितैः चोदैः खे आकाशे हि निश्चितं सूर्य आच्छन्न इत्यर्थः । * * * * (C).

१११ । सेनिकामुदाहरति, झत्तीति । झत्ति — झटिति पत्ति पाअ पदातिपादैः भूमि — भूमिः कंपिआ — कंपिता, टप्पु खुंदि खेह — टापोत्खातखेहैश्चलदश्वखुरोद्धूतरेणुभिरिति परमार्थः सूर — सूर्य्यः झंपिआ — आच्छादितः । गौड़ राअ जिणि — गौड़राजं जिला माण मोडि[लि]आ — मानमोडिता कामरूअ राअ बंदि छोलिआ — का[म]रूपराजवंदी मोचिता ॥ ७८ । सेनिका निवृत्ता । (E).

१११ । यथा । झटिति पत्तिपादैर्भूमिः कंपिता चलदश्वखुरोद्भूतरेणुभिः सूर्य आच्छादितः । गौडराजं जिला गीवानशा कामरूपराजवंदी मोचिता ॥ अत्र टप्पु इति मात्रेति उक्तार्थे देशी । (G).

११२ । १ दिणा (A). २ कणा (A). ३ एक्को (B). ४ दिष्ठा (A), पत्ता (B), dropt in (C). ५ बाकुणा (B). ६ मलत्ती (C), मलंती (F). ७ माला (A, B & C). ८ जम्पन्ता (B), जम्पता (C). ९ ११० (A), ७९ (E).

जहा, ठामा ठामा हत्थी[1] जूहा[2] देक्खीआ[3]
णीला[4] मेहा मेरू[5] सिंगा[6] पेक्खीआ[7]।
वीरा[8] हत्था[9] अग्गे खग्गा राजंता[10]
णीला[4] मेहा मज्झे विज्जू[11]णच्चंता॥ ११३[12]॥
मालती[13]।

११३। कुन्तीपुत्राः पञ्च दत्ता ज्ञाताः, अन्ते कान्त एको-हारो मन्यते। पादे पादे मात्राः प्राप्ता द्वाविंशतिः मालतीमाला जल्प्यते नागेनैषा॥ कुन्तीपुत्रः कर्णो द्विगुरुः, कान्तः कमनीयः, हारो गुरुः। (C).

११३। अथैकादशाक्षरचरणस्य वृत्तस्य प्रथमं भेदं मालती-नामकं वृत्तं लक्षयति, कुंतीति। यत्र पाआ [पाआ] — पादे पादे प्रतिपादमिति यावत् दिण्णा — दत्ताः पंच कुंतीपुत्ताः कर्णा गुरु-द्वयात्मका गणा इति यावत् जाणीआ — ज्ञायंते, अंते — कर्ण-पंचकांते पादांते वा कंता — कांतः एक्का — एकः हारा — हारः गुरुरिति यावत् माणीआ — मान्यते। बाईसा — द्वाविंशतिः मत्ता — मात्राः दिट्ठा — दृष्टा यत्र पादे पादे इति पूर्वेणान्वयः, तत् मालत्ती छंदा — मालतीच्छन्दः णाएसा — नागेशः जंपंता —

११३। १ हत्थी (A), हत्ती (B). २ जूथा (B & C). ३ पेक्खिआ (A), देखीआ (F). ४ चारै (A, B & C). ५ मारू (B). ६ सिंगे (A, B & C). ७ देक्खीआ (A). ८ वीरा (E). ९ हत्था (A), हत्ते (B & C). १० रज्जंता (A), रजुन्ना (B & C). ११ विज्जू मेहा मज्झे (A). १२ १११ (A), ८० (E). १३ मालतीमाला (A).

दिज्जे तआरा[1] जुअला पएसुं[2]
अंते णरेंदो[3] गुरु जुग्ग सेसं ।
जंपे फणिंदा[4] धुअ[5] इंदवज्जा
मत्ता दहा अट्ठ[6] समा सुसज्जा ॥ ११४[7] ॥

---

जल्पति ॥ अत्र कांत-पदं मात्राज्ञापकं च पद्यपूरणार्थमिति मंतव्यम्, एकादशगुरुरचिता मालतीति निष्कृष्टोऽर्थः । ७९ । (E).

११२ । कुंतीति । कुंतीपुत्राः पंच दत्ता ज्ञातव्या अंते कांतः एको हारो माननीयः । पादे पादे मात्रा दृष्टा द्वाविंशतिर्मालती-च्छंदः जल्पति नागेशः ॥ कर्णो द्विगुरुः, हारो गुरुः । (G).

११३ । उदाहरति । स्थाने स्थाने हस्तियूथानि दृश्यन्ते यथा मेघा मेरुशृङ्गे दृश्यन्ते । वीरहस्ताग्रे खड्गा नृत्यन्ति यथा विद्युन्मेघमध्ये नृत्यति ॥ (C).

११३ । मालतीमुदाहरति, ठामेति । मेरु सिंगा — मेरुशृंगे यथेति शेषः णीला मेहा — नीला मेघाः पेक्खीआ — प्रेक्ष्यंते, ठामा ठामा — स्थाने स्थाने हत्थी जूहा — हस्तियूथानि [तथे]ति शेषः देक्खीआ — दृश्यंते । णीला मेहा मज्झे — नीलमेघमध्ये यथेति शेषः विज्जुत् णाच्चंती — नृत्यति, वीरा[आ] हत्था अग्गे — वीर-

---

११४ । १ दिज्जेइ हारा (A), दिजेइ चीरा (B), दिज्जेइ चीरा (C), दिज्जे त ताआ (F). २ पएह (B), पएषं (C), पएह्नं (E). ३ णरेंदा (A), णरेन्दा (B & C). ४ भणिंदा (A), फणींदा (F). ५ धुव (F). ६ चाइ (B & C). ७ १११ (A), ८१ (E).

हस्ताग्रे तथेति शेषः खग्गा—खड्गाः राजंता—राजंति ॥ केन-चिदन्दिना कृतं संग्रामवर्णनमेतत्। मालती निवृत्ता । ८० । (E).

११३ । यथा । स्थाने स्थाने हस्तियूथानि दृश्यंते, नीला मेघाः मेरुशृंगे प्रेच्यंते । वीरहस्ताग्रे खड्गा राजंते, नीलमेघमध्ये विद्यु-न्नृत्यति ॥ (G).

११४ । दीयते हीरयुगलं पदे, अन्ते नरेन्द्रो गुरुयुगलशेषः । जल्पति फणीन्द्रः ध्रुवमिन्द्रवज्रां मात्रा दशाष्टभिः समाः सुसज्जाः ॥ हीरशब्दः अन्तलघुपञ्चकलवाची [Vide श्लोक ११, p. 24, and its gloss (G), p. 25.—Ed.] नरेन्द्रो जगणः, यत्र मात्राः दशाष्टाभिः सुसज्जीकृताः । (C).

११४ । अथैकादशाचरचरणस्य वृत्तस्य सप्तपंचाशदुत्तरत्रिशततमं भेदं ३५७ इन्द्रवज्रानामकं वृत्तं लचयति, दिज्जे इति । यत्रादौ तश्रारा जुअला—तकारयुगलं लब्धं तगणद्वयमित्यर्थः, अंते—तगणद्वयांते गुरु जुग्ग सेसं—गुरुयुगशेषः गुरुद्वयं शेषेऽंते यस्य तादृश इति यावत् णरेंदो—नरेन्द्रो मध्यगुरुर्जगण इति यावत् पएसुं[सूं]—पदेषु दिज्जे—दीयते । सा मत्ता दहा अट्ठ समा सुसज्जा—सुसज्जसमाष्टादशमात्राका सुसज्जाः सुस्थापिताः समाः पदचतुष्टयेऽन्यूनानतिरिक्ता अष्टादश मात्रा यस्यां सेति यावत् इंदवज्जा—इंद्रवज्रा इति धुअ—ध्रुवं फणिंदा—फणींद्रः जंपे—जल्पति ॥ सुसज्जा—शोभनीकृत्य स्थापिताः समा—पदचतुष्टये समानाः दहा अट्ठ—अष्टादश मत्ता—मात्राः यत्र पएसुं[सूं]—पदेषु पतंतीति शेष इति भिन्नमेव योजनीयं। अत्र मात्राकथनं पद्य-

जहा, मंतं[1] ण तंतं ण हु किंपि[2] जाणे[3]
झाणं[4] च[5] णो किंपि[2] गुरुप्पसाओ[6]।
मज्जं पिबामो[7] महिलं रमामो
मोक्खं[8] वजामो[9] कुल मग्ग लग्गा ॥ ११५[10] ॥
इंदवज्जा।

पूरणार्थमेव, अवहट्टभाषायां पूर्वनिपातानियमात् पूर्वापरव्यत्ययस्तु न दोषायेति ध्येयं, तगणद्वयानंतरजगणानंतरगुरुद्वयरचितचरणा इंद्रवज्रेति फलितार्थः। (E).

११४। दिज्जे इति। दीयेत राजयुगलं पदेषु अंते नरेंद्रो-गुरुयुग्मशेषः। जल्पति फणीन्द्रो भुवम् इंद्रवज्रां मात्रा द्वयाष्टौ समाः सुसज्जाः ॥ राजा[?] तगणः, नरेंद्रो जगणः, समाः सर्वचरणेषु अनुकूलाः। (G).

११५। उदाहरति। मन्त्रं न तन्त्रं न हि किमपि जाने ध्यानञ्च न किमपि गुरुप्रसादात्। मद्यं पिबामो महिलां रमामः[महे] मोक्षञ्च यामः कुलमार्गलग्नाः ॥ यद्यहं मन्त्रादिकं न जाने तथापि वयं सर्व्वे साधका मद्यं पिबामः महिलां रमाम[हे] इत्यर्थः, तदिदमनर्थाय भवेदित्याह एवं कुर्व्वाणाः कुलपथलग्नाः मोक्षं प्राप्नुम इत्यर्थः। कर्पूरमञ्जर्य्यां भैरवानन्दोक्तिरियम्। (C).

११५। इन्द्रवज्रामुदाहरति, मंतमिति। मंतं—मंत्रं तंतं—

११५। १ मन्ता (B). २ कंपि (A), कम्पि (C). ३ जाणं (A). ४ धाणं (B). ५ ज (B). ६ गुरुप्पसाचा (B & C). ७ पिबामो (A & C). ८ मोक्खं (F). ९ च यामो (C). १० ११२ (A), ८२ (E).

णरेंद[1] एक्का तअणा[2] सुसज्जा
पओहरा कण्ण गणा[3] मुणिज्जा ।
उविंद[4]वज्जा फणिराअ[5] दिट्ठा[6]
पढंति[7] छेआ सुह वण्ण सिठ्ठा[8] ॥ ११६[9] ॥

---

तंचं णउ — खलु निश्चयेनेति यावत् किंपि — किमपि ण — न जाणे — जानामि, झाणं च — ध्यानं च किंपि — किमपि णो — न जाने इति पूर्वेणान्वयः, किंतु मज्जं पिबामो — मद्यं पिबामः महिलं रमामो — महिलां रमामहे गुरुप्पसाओ — गुरुप्रसादात् कुल मग्ग लग्गा — कुलमार्गलग्नाः मोक्खं — मोक्षं वजामो — व्रजामः ॥ अनवरतमैथुनमद्यपानाद्यनेककुलपरंपरागमनकुकर्मासक्ता अपि वयं गुरुप्रसादान्मोक्षं प्राप्नुम इति कापालिकभैरवानन्दस्य राजानं प्रति वाक्यमिदं कर्पूरमंजरीनाटकस्थम् । इंद्रवज्रा निवृत्ता । ८२ । (E).

११५ । यथा । मंत्रं न तंत्रं न खलु किमपि जाने ध्यानं च नो किमपि गुरुप्रसादात् । मद्यं पिबामो महिलां रमामो[मह्रे] मोक्षं व्रजामः कौलमार्गलग्नाः ॥ (G).

११६ । नरेन्द्र एकस्तगणः सुसज्जः पयोधरः कर्णगणः ज्ञायते उपेन्द्रवज्रां फणिराजदिष्टां पठन्ति * * * ॥ छेकाः विदग्धाः । (C).

---

११६ । १ णरिंद (E & F). २ तगणा (A). ३ गणं (A). ४ उपेंद (A), उविंदु (B). ५ फणिराज (A). ६ दिट्ठा (B & C). ७ पढन्ति (B). ८ सुवरंद दिठ्ठा (A), सुवरन्द घट्टा (B), सुवरन्दघट्टा (C). ९ ११४ (A), ८३ (E).

जहा, सुधम्म चित्ता गुणमंत[१]पुत्ता
सुकम्म रत्ता विणआ कलत्ता[२] ।
विसुद्ध देहा धणमंत[३] गेहा
कुणंति के बब्बर सग्ग णेहा ॥ ११७[४] ॥ उविंदवज्जा[५] ।

११६ । अथैकादशाक्षरचरणस्य वृत्तस्याष्टपंचाशदुत्तरत्रिशततमं ३५८ भेदम् उपेंद्रवज्रानामकं वृत्तं लक्षयति, णरिंदेति । यत्र प्रथमं एक्का — एकः णरिंद — नरेंद्रः मध्यगुरुर्जगण इति यावत् ततः तअणा — तगणोऽंतलघुर्गण इत्यर्थः सुसज्जा — सू[सु]सज्जः शोभनीकृत्य स्थापित इति यावत्, ततश्च पओहरा — पयोधरो मध्यगुरुर्जगण इत्यर्थः कम्म गणा — कर्णगणो गुरुद्वयमिति यावत् मुणिज्जा — ज्ञातः । तां फणिराअ दिट्ठा — फणिराजदृष्टां पिंगलोपदिष्टाम् इति यावत् सुह वण्ण सिट्ठा — शुभवर्णसृष्टां उविंदवज्जा — उपेंद्रवज्रां छेआ — छेका विदग्धा इति यावत् पढंति — पठंति ॥ अथवा नरेन्द्रैकतगणसुसज्जपयोधरकर्णगणाः मुणिज्जा — ज्ञायंते यत्र प्रतिचरणमिति शेषः इत्येकमेव पदं कृत्वा योजनीयम् । अत्र [सुसज्जमिति] शुभवर्णसृष्टामिति च पदं पद्यपूरणार्थमेवेति मंतव्यम् । ८३ । (E).

११६ । णरिंदेति । नरेंद्र एकस्तगणः सुसज्जः पयोधरः कर्णगणो ज्ञातव्यः । उपेंद्रवज्रां फणिराजदृष्टां पठंति छेकाः शुभवर्ण-

११७ । १ गुणवन्त (C). २ करंता (A), कलत्ता (E). ३ धणवन्त (B). ४ ११५ (A), ८४ (E). ५ उपेंद्रवज्जा (A).

इंद उविंदा[१] एक्क[२] करिज्जसु[३]
चउ अग्गल दह णाम मुणिज्जसु[४] ।
सम[५]आइहिँ सम अक्खर दिज्जसु
पिंगल भण उवजाइहि[६] किज्जसु[७] ॥ ११८[८] ॥ [अरिल्ला]

---

स्पष्टं ॥ शुभेति मधुररस एव प्रायस्थसूचकः ॥ नरेंद्रो जगणः, पयोधरो जगणः, कर्णो द्विगुरुः । (G).

११७ । उदाहरति । स्वधर्मचित्ता गुणवन्तः पुत्राः स्वकर्मरतं विनीतं कलत्रं । विशुद्धो देहो धनवद्गेहं कुर्वंते के वर्बराः स्वर्ग-स्नेहम् ॥ विशुद्धो रा[रो]गादिहीनः । (C).

११७ । उपेंद्रवज्रामुदाहरति, सुधम्मेति । सुधम्म चित्ता—सुधर्मचित्तं गुणमंत पुत्ता—गुणवत्पुत्रं सुकम्म रत्ता—सुकर्मरतं पत्यादिशुश्रूषाकर्मण्यासक्तमिति यावत् विणीआ—विनीतं कलत्ता—कलत्रं । विसुद्ध देहा—रोगादिरहितः देहः धणमंत—धनवत् गेहा—गेहं, एतत्सर्वं यदि भवतीति शेषः, तदा के बब्बरा—वर्वराः सग्ग णेहा—स्वर्गस्नेहं कुणंति—कुर्वंति, अपि तु न कोऽपीत्यर्थः ॥ सर्वपदार्थविकलक[स्य] कस्यचिदिदं वाक्यम् । ८४ । उपेंद्रवज्रा निवृत्ता । (E).

११७ । यथा । सुधर्म चित्तं गुणवंतः पुत्राः सुकर्मरक्तं विनतं

---

११८ । This śloka is not found in (A) and (B). १ उपेन्द्रा (C). २ एक (C). ३ करीज्जहु (C). ४ भरिज्जहु (C). ५ सव (C). ६ उपजाइ (C), उपजाइ कवि (E). ७ कुविज्जहु (C). ८ ८५ (E).

कलयं। विशुद्धा देहा धनवंतो गे[हे]षाः कुर्वंति के वर्ब्बराः स्वर्गे स्नेहम्॥ विशुद्धा नीरोगाः। (G).

११८। इन्द्रोपेन्द्रावेकीक्रियेतां चतुरधदशनामानि भियन्तां। सर्व्व-जातिसमाचराणि * * पिंगलो भणति उपजातिर्ज्ञायताम्॥ इन्द्रवज्रो-पेन्द्रवज्राच्छन्दसोरेकीकरणादुपजातिच्छन्दो भवति, तत्र चतुर्द्दश नामानि भवन्ति, एवं सर्व्वजातिषु समाचरासु उपजातिर्बोध्यव्या। (C).

११८। अथेंद्रवज्रोपेंद्रवज्राभ्यां पादेन पादाभ्यां पादैश्च मिश्रि-ताभ्यामुपजातिच्छन्दो भवति तच्च [च]तुर्दशविधमित्याह, इंदेति। इंद उविंदा — इंद्रोपेंद्रयोः नामैकदेशेनापि नामग्रहणादिंद्रवज्रो-पेंद्रवज्रयोरित्यर्थः एक्क — ऐक्यं करिज्जसु — कुरुष्व, चउ अग्गल दह णाम — चतुरधिकदशनामानि मुणिज्जसु — जानीहि। सम अक्खर — समान्यचराणि दिज्जसु — देहि, सम जाइहि — सम-जातिभिः तुल्याचरचरणजातीयैर्वृत्तैरिति यावत् उपजाइहिं — उपजातिं किज्जसु — कुरुष्व इति पिंगल — पिंगलो नागः भणति॥ इदं तु बोध्यं समाचराणि दत्वा समजातीयैर्वृत्तैरुपजातिं कुरुष्वेत्यनेन विषमाचरचरणजातीयैर्वृत्तैर्नोपजातिरित्युक्तं भवति, तथाचेंद्रवज्रोपेंद्रवज्राभ्यां न विंद्र[वज्रेंद्र]वंशाभ्यामिंद्रवंशावंशस्थाभ्यां वातोर्मीशालिनीभ्यां न मालिनीशालिनीभ्यामुपजातिर्भवति इति परमार्थ इति। (E).

११८। इंदेति। इंद्रवज्रोपेंद्रवज्रे एकत्र कुरुष्व चतुरधिकदश-नामानि जानीहि। समजातिभिः समाचराणि देहि पिंगलो-भणति उपजातिं कुरुष्व॥ (G).

चउ अक्खरके पत्थर[1] किज्जसु
इंद[2] उबिंदा[3] गुरु लहु[4] बुज्झसु[5] । [अलिल्ला]
मज्झह[6] चउद[ह]ह हो उबजाइ
पिंगल जंपइ[7] कित्ति वेलाइ[8] ॥ ११९[9] ॥ [पज्झटिका ?]

११९ । चतुर्दशानां ज्ञानप्रकारमाह, चतुरक्षरप्रस्तारं कुरुष्व इन्द्रोपेन्द्रयोर्गुरुलघून् बुध्यस्व । मध्ये चतुर्दश भवन्त्युपजातयः पिङ्गलो-जल्पति हत्वा मन्यते ॥ अयमर्थः, चतुरक्षरस्य षोडश प्रस्ताराः भवन्ति, तत्र प्राथमिकश्चतुर्गुरुः स चेन्द्रवज्रायामन्तर्भूतः तत्र चतुर्षु पादेष्वाद्याक्षरस्य गुरुत्वादेव, अन्तिमश्चतुर्लघुर्भवति स चोपेन्द्रवज्राया-मन्तर्भूतः तत्र चतुर्षु पादेषु प्रथमाक्षरस्य लघुत्वात्, अतो मध्यवर्त्ति-चतुर्दशभेदानुसाराच्चतुर्दशोपजातयो भवन्ति । तथाहि चतुरक्षरस्य द्वितीयप्रस्तार आदिलघुर्भवति, तत्रापि प्रथमपादो लघ्वादिः परे त्रयो गुर्वादयः, एवमन्येऽपि । (C).

११९ । अथासां चतुर्दशभेदानयनप्रकारमाह, चउ अक्खरेति । चउ अक्खरके — चतुरक्षराणां पत्थर — प्रस्तारं किज्जसु — कुरुष्व, इंद उबिंदा — इंद्रोपेंद्रयोः गुरु लहु — गुरुलघू इंद्रवज्रायां गुरु-मुपेंद्रवज्रायां लघुमित्यर्थः बुज्झसु — बुध्यस्व । मज्झह — मध्ये सर्व-गुरु-सर्वलघुप्रस्तारयोरिति यावत् चउद्दह — चतुर्दश उबजाइ — उपजातयः हो — भवंति इति कित्ति वेलाइ — वेष्टितकीर्त्तिः

११९ । १ पत्थर (A). २ इंदु (B). ३ उपेंदा (F). ४ लहु गुरु (A). ५ दिज्जसु (A), बुज्झसु (B & C), बुज्झसु (E). ६ मज्झआरिं (A), मज्झर (B), मज्झाउ (C). ७ परप्रवारं (E). ८ वोलाइ (A). ९ ११९ (A), ८१ (E).

पिंगलः अंपद्द — जल्पति ॥ अयेदं तत्त्वं — चतुरक्षरस्य प्रस्तारक्रियया षोड़श भेदा भवंति, तत्र चतुर्गुरुः प्रथमः स चेंद्रवज्रापादचतुष्टय-ज्ञापकस्तत्र प्रतिचरणं प्रथमगुरोरुपादानात् तत्रैकैको गुरुरिंद्र-वज्राया एकैकचरणज्ञापक इति हृदयं। चतुर्लघुश्चांतिमः स चोपें-द्रवज्रापादचतुष्टयज्ञापकस्तत्रै[कै]को लघुरुपेंद्रवज्राया एकैकचरण-ज्ञापक इति सहृदयैकगम्योऽर्थस्तत्र प्रतिचरणं प्रथमलघोरुपादानात्। एवं यावच्छिष्टा मध्ये चतुर्दशभेदास्तदनुसाराच्च चतुर्दशोपजातयो-भवंति। तथाहि चतुरक्षरस्य द्वितीयप्रस्तारे प्रथममेको लघु-स्तदनन्तरं च त्रयो गुरवो भवंति, तथा चोपेंद्रवज्रायाः प्रथम-चरणः त्रयश्चेंद्रवज्राया एवं मिलित्वा प्रथमो भेदः। चतुरक्षरस्य तृतीयप्रस्तारे प्रथममेको [गुरुस्तत एको] लघुस्तदनंतरं गुरुद्वयं, तथा चेंद्रवज्रायाः प्रथमश्चरणो द्वितीयश्चोपेंद्रवज्रायाः तृतीयचतुर्थौ च पुनरिंद्रवज्राया एवं मिलित्वा द्वितीयो भेदः। चतुरक्षरस्य चतुर्थप्रस्तारे प्रथमं लघुद्वयं तदनंतरं गुरुद्वयं भवति, तथाच प्रथम-द्वितीयौ चरणौ उपेंद्रवज्रायाः तृतीयचतुर्थौ चेंद्रवज्राया एवं मिलित्वा तृतीयो भेदः। एवमन्येऽपि सुधीभिरवधेयमित्यस्मत्तात-चरणोपदिष्टः पंथाः। (E).

११८। अथासां चतुर्दशभेदानयनप्रकारमाह चउरि[द्द]ति। चतुरक्षरस्य प्रस्तारं कुरु, इंद्रवज्रोपेंद्रवज्रयोर्गुरुलघु बुध्यस्व। मध्ये चतुर्दश भवंति, उपजातिं पिंगलो जल्पति कीर्त्तिवेलायां॥ कीर्त्तिः प्रस्तारः, मध्ये — सर्वगुरुसर्वलघुप्रस्तारयोरंतराले। (G).

[Vide Ghosha's Compendium, Introduction, p. xix, para 45.—Ed.]

जहा, बालो[1] कुमारो[2] स छ[3]मुंडधारी
उप्पाउ[4] हीणा हउ[5] एक णारी ।
अहं णिसं[6] खाहि[7] विसं[8] भिखारी[9]
गई भविती[10] किल का हमारी[11] ॥ १२०[12] ॥

---

१२० । उदाहरति । बालः कुमारः स षण्मुण्डधारी, उपायहीना अहमेका नारी । भर्त्ता तु भिक्षुकः सोऽपि अहर्निशं विषं खादति, अतः का गतिर्मम भविचीति शोचति पार्व्वती ॥ (C).

१२० । उपजातिमुदाहरति, बाल इति । कुमारः कार्त्तिकेयः बालः स छमुंडधारी — स च षण्मुण्डधारी, उप्पाउ हीणा — अर्ज्जनोपायविकला एक — एका अपरा असहाया णारी — स्त्री हउ — अहं, भिखा[खा]री — भिक्षुकस्त्वम् अहर्निशं विषं खाहि — भक्षयसि, अतः हमारी — अस्मदीया का गतिरवस्था किल निश्चयेन भविची ॥ षडमुखधारिणो बालस्य बहुतरमत्यावश्यकं च भक्ष्यमपेक्षितमहं च निस्सहाया अर्ज्जनासमर्था स्त्री, त्वं चाहर्निशं विषभोजनेनैव स्वस्य तृप्तिमुत्पादयस्यतोऽस्मदीया का गतिर्भविष्यति तन्न जाने इति महादेवं प्रति पार्वतीवाक्यं । पूर्वार्द्धं

---

१२० । १ बालः (A). बाल (B). २ कुमारः (A), कुमारा (B). ३ सच (B). ४ उपाय (A), उंवाय (B & C). ५ मुह (B), मुक्ति (C). ६ णिसि (A), निसं (C). ७ खाद (B & C) ८ विषं (A), विसं (E). ९ भिषारी (E). १० गतिर्भविची (A), गतिम्भविची (B & C). ११ चामारी (C). १२ ११० (A).

कित्ती[1] बाणी माला साला हंसी माआ जाआ[2] बाला।
अद्दा भद्दा पेम्मा रामा रिद्धी बुद्धी ताहू णामा॥ १२१[3]॥
[विद्युन्माला ।] उवजाइ[4] ।

---

इंद्रवज्राया उत्तरार्द्धे चोपेंद्रवज्राया लक्षणसत्वाद्रामाख्या द्वादशीय-मुपजातिः । (E).

१२० । यथा । बालः कुमारः स षण्मुखधारी उपायहीनाहमेका नारी । अहर्निशं खादति विषं भिक्षुर्गतिर्भविची किल कामाकं ॥ (G).

१२१ । चतुर्दश नामान्याह । कीर्त्तिर्वाणी माला शाला हंसी माया जाया बाला । आर्द्रा भद्रा प्रेमा [रामा] ऋद्धिर्बुद्धिः तासां नाम ॥ (C).

१२१ । अथासां नामान्याह, कित्तीति । निगदेनैव व्याख्यातं । अथासामस्मत्तातचरणनिर्म्मितानि क्रमेणोदाहरणानि यथा,—

दृढं धनुर्वामकरे दधानोऽवामे शरं स्वर्णविचित्रपुंखं ।
पृष्ठप्रदेशेऽथयि तूणयुग्मं बिभ्रत्स रामः शरणं ममास्तु ॥ १ ।
यस्यानुकम्पायुतदृष्टिपद्म-कटाक्षसंप्रेक्षित एव लोकः ।
सर्वापदब्धिं तरति प्रतूर्णं श्रीरामचंद्रः शरणं ममास्तु ॥ २ ।
यदीयपादाब्जपरागपातात् शिलामयी गौतमयोषिदाशु ।
कामस्त्रियोऽपि स्पृहणी[य]रूपं लेभे स रामः शरणं ममास्तु ॥३।

---

१२१ । १ किति (A). २ बाआ (C). ३ ११८ (A), ८९ (E). ४ उप-जाति (A & B).

सुग्रीववातात्मजमुख्यकीशै-र्वद्धाञ्जलीकैरुपसेव्यमानः ।
सुवर्णसिंहासनसंस्थितः स श्रीरामचंद्रः शरणं ममास्तु ॥ ४ ।
त्रिलोकसंपालनबद्धसंधः कारुण्यपीयूषमहांबुराशिः ।
स्वभक्तदुःखोद्धरणैकवीरः श्रीरामचंद्रः शरणं ममास्तु ॥ ५ ।
आजानुबाहुद्वितयः प्रबद्ध-समासनस्थो धृतपीतवासाः ।
प्रफुल्लराजीवपलाशनेत्रः श्रीरामचंद्रः शरणं ममास्तु ॥ ६ ।
समस्तपृथ्वीपतिमौलिरत्न-प्रभाभिनीराजितपादपद्मं ।
अशेषगीर्वाणगणप्रगीत-कीर्त्तिं तमीशं प्रणतोऽस्मि रामं ॥ ७ ।
नानाविभूषामणिरश्मिजाल-प्रच्छन्ननीलाश्मसमानगात्रः ।
सौंदर्य्यसंनाशितकामगर्वः स रामचंद्रः शरणं ममास्तु ॥ ८ ।
अरातिनारीहृदयं प्रविष्ट-स्तत्र स्थितान्दग्धुमिवारिवर्गान् ।
यस्य प्रतापप्रबलानलस्तु स रामचंद्रः शरणं ममास्तु ॥ ९ ।
स्वांकप्रसुप्तां धृतकांचनाभां समीक्ष्य सीतां कनकप्रभांगीं ।
आनंदितांतःकरणः स पाया-दपायतो मां रघुवंशकेतुः ॥ १० ।
अनन्यसाधारणकीर्त्तिचंद्र-करावधूताष्टदिगंधकारः ।
पौलस्त्यवंशद्रुमकालवह्निः स जानकीशः शरणं ममास्तु ॥ ११ ।
मत्वा भवंतं त्रिजगद्विपत्ति-संनाशकं देवगणान् विहाय ।
भवत्पदाब्जं शरणं गतोऽस्मि प्रसीद राम त्वमतोऽतिशीघ्रम् ॥१२।
भवत्समानोऽपि यदा नरेंद्रः श्रीराम कार्पण्यमुरीकरोति ।
तदाश्रयेत्कः खलु दातृभाव-मतस्त्वमीश त्यज निष्ठुरत्वं ॥ १३ ।
वीरासनाध्यासित उग्रवीर्यो मवाम्बुदश्यामरुचिर्ज्जितारिः ।
समस्तविद्याम्बुधिपारगश्च स रामचंद्रः शरणं ममास्तु ॥ १४ । (E).

चारी[1] कसा[2] पाए दिस्रा सव्वा सारा[3]
पाश्रा अंते[4] दिज्जे कंता[5] चारी हारा ।
छस्राबेश्रा मत्ता पत्ता चारी पाश्रा
विज्जाहारा जंपे सारा णाश्राराश्रा ॥ १२२[6] ॥*

[For examples of Upajáti, culled from the Kumárasambhava of Kálidása, vide Ghosha's Compendium, pp. 118-119.—Ed.]

१२१ । किर्त्तीति । कीर्त्तिर्वाणी माला शाला हंसी माया जाया बाला । आर्द्रा भद्रा प्रेमा रामा ऋद्धिर्बुद्धिरिति तासां नामानि ॥ (G).

१२२ । अथ द्वादशाक्षरा । चत्वारः कर्णाः पादे दत्ताः सर्व्वसाराः पादान्ते दत्ताः कान्तास्चत्वारो हाराः । षस्रवति-मात्राः प्राप्ताः चतुर्भिः पादैर्विद्याधरं जल्पति सारं नाग-राजः ॥ प्रतिपादं चतुर्विंशतिमात्रत्वाच्चतुर्भिः पादैः षस्रवति-र्मात्राः स्युः । (C).

१२२ । अथ द्वादशाक्षरचरणस्य वृत्तस्य षस्रवत्युत्तरं सहस्र-चतुष्टयं भेदाः ४०९६ भवंति, तत्राद्यं भेदं विद्याधरनामकं वृत्तं लक्षयति, चारीति । यत्र पाए—पादे सव्वा सारा—सर्वसारान् सर्वसारं वा चारी कसा—चतुरः कर्णान् कर्णचतुष्टयं वा गुरु-द्वयात्मकगणचतुष्टयमिति यावत् दिस्रा—दत्त्वा, पाश्रा अंते—

१२२ । १ चारि (A), चारो (C). २ कसां (F). ३ सारा (A). ४ अंता (A). ५ कसा (A), अंते (C). ६ ११९ (A). * Second half dropt in (B).

जहा, *जासु कंठा[1] बीसा दीसा[2] सीसा[3] गंगा
णाआराआ किज्जे हारा गोरी[4] अंगा ।
गंते[5] चामा[6] मारू कामा लिज्जे[7] कित्ती
सोई[8] देऊ[9] सुक्खं[10] देओ[11] तुम्हा[12] भत्ती[13] ॥
१२३[14] ॥ विद्याधरः[15] ।

पादांते कंता—कांताः चारी हारा—चत्वारो हारा गुरवः दिज्जे—दीयंते । तं छत्राबेआ मत्ता पत्ता चारी पाआ—षण्णवतिमात्राप्राप्तचतुष्पादं प्रतिपादं चतुर्विंशतिमात्राणां विद्यमानत्वात् षण्णवतिमात्रां प्राप्ताश्चत्वारः पादा यस्य तत्ताहृशमिति यावत् सारा—द्वादशाक्षरचरणवृत्तमध्ये आदिभूतत्वात् सा[र]भूतं श्रेष्ठमिति यावत् तं विज्जाहारा—विद्याधरं विद्याधरनामकं वृत्तं णाआराआ—नागराजः जंपे—जल्पति ॥ अत्र वर्णवृत्ते मात्राकथनस्यानतिप्रयोजनकत्वान्मात्राज्ञापकस्वरणः सव्वासारेति कर्ण[वि]शेषणं [च] पद्यपूरणार्थमेवेति मंतव्यं, द्वादशगुरुरचितचरणो विद्याधर इति फलितार्थः । (E).

१२२ । अथ द्वादशाक्षरं जगतीछंदः । चारीति । चत्वारः कर्णाः पादे दत्ताः सर्वसाराः पादांते देयाः कांताश्चत्वारो

१२१ । * Dropt up to सारा in the 2nd quadrant in MS. (B).
१ कंठे (A). २ दिट्ठा (C). ३ सीसे (A). ४ गोरी (F). ५ गच्छे (A, B & C).
६ वामा (A & B), रामा (C). ७ पिज्जे (C). ८ सोऊ (A). ९ देयो (E).
१० सोक्खा (A), सोक्खं (B & C). ११ देऊ (A). १२ तुम्हा (A), तुम्मा (C).
१३ भत्ती (A), भत्ती (B). १४ ११० (A). १५ विद्याधरा (A).

धआो[1] चामरो रूअओ सेस सारो[2]
ठए कंठए मुद्धए जत्थ[3] हारो ।
चउ च्छंद किज्जे तहा सुद्ध देहं
भुअंगापआअं पए बीस रेहं ॥ १२४[4] ॥

---

हाराः । यत्रवतिमाचाप्राप्ताश्चत्वारः पादाः, विद्याधरं जल्पति सारो नागराजः ॥ कर्णो द्विगुरुः, हारो गुरुः । (G).

१२३ । उदाहरति । यस्य कण्ठे विषं दृश्यते शीर्षे गङ्गा नागराजः कृतो हारः गौरी अङ्गे । गर्व्वितो रामः प्रतिकूलमारितः कामः गृहीता कीर्त्तिः स देवः सुखं ददातु युष्माकं भक्त्या ॥ (C).

१२३ । विद्याधरमुदाहरति, जासू इति । जासू—ज[य]स्य कंठा—कंठे बीसा—विषं दीसा—दृश्यते, सीसा—शीर्षे गंगा दृश्यते, अंगा—अंगे अर्द्धांगे इति यावत् गोरी—गौरी पार्वतीत्यर्थः दृश्यते, येन णाआराआ—नागराजः हारः कंठभूषा किज्जे—क्रियते कृतो वा । गंते—गाचे चामा—चर्म करिकृत्तिरिति यावत् धृतमिति शेषः, येन च कामा—कामं मारू—मारयित्वा दग्ध्वेति यावत् कित्ती—कीर्त्तिः लिज्जे—गृहीता, सोई—स एव देओ—देवः शशिकलाभरण इत्यर्थः भत्ती—भक्त्या तुम्हा—युष्मभ्यं सुक्खं—सुखं निरतिशयानन्दमिति यावत् देओ—ददातु ॥ विद्याधरो निवृत्तः । (E).

---

१२४ । १ धओ (A). २ राओ (C). ३ जत्व (A). ४ १२१ (A).

१२३ । यथा । यस्य कंठे विषं दृश्यते शीर्षे गंगा नागराजाः क्रियंते हाराः गौरी अंगे । गात्रे चर्म मारितः कामो गृहीता कीर्त्तिः सोऽपि देवः सुखं ददातु युष्माकं भव्या ॥ (G).

१२४ । ध्वजं चामरं रूपकं शेषसारः स्थाप्यते कण्ठे मुग्धे-यथा हारः । चतुश्छन्दः क्रियते तथा शुद्धदेहं भुजंगप्रयातं पादे विंशतिरेखं ॥ ध्वज आदिलघुस्त्रिकलः, चामरं गुरुः, रूपकं छन्दः, शेषो नागः पिङ्गल एव तस्य सारः । चतुश्छन्दश्चतुर्गणं तेन चतुर्भिर्गणैश्छन्द इत्यर्थः । विंशतिरेखं विंशतिकलं । (C).

१२४ । अथैका[यद्वा]दशाक्षरचरणस्य वृत्तस्य षडशीत्युत्तर-पंचशततमं ५८६ भेदं भुजंगप्रयातनामकं वृत्तं लक्षयति, धआो इति । हे मुद्ध — हे मुग्धे यत्र धआो — ध्वजो लघ्वादिस्त्रिकलः चामरो — चामरं गुरुः एवं चउ — चत्वारः रूअओ — रूपकाः गणा इति यावत् पए — पदे प्रतिचरणमित्यर्थः किज्जे — क्रियंते तत्पदे इत्यनुषंजनीयं बीस रेहं — विंशतिरेखं विंशतिः रेखाः मात्रा यत्र तादृशमित्यर्थः शुद्धदेहं भुअंगापआअं — भुजंगप्रयातं छंद — छन्दः सेस — शेषेण पिंगलेन जत्थ — यथा हारो — हारः मुक्तादाम तहा — तथा कंठए — कंठे ठए — स्थाप्यते । केचित्तु धआो — ध्वजः लघ्वादिस्त्रिकल इति यावत् ततः चामरो — चामरं गुरुरिति यावत् रूअओ — एवं रूपेण चउ — चतुर्भि-र्गणैर्यत्र चरण इति शेषः सारो — सारः श्रेष्ठ इति यावत् सेस — शेषः संपूर्ण इत्यर्थः तहा — तथा किज्जे — क्रियते पूर्य्यते इति यावत्, पए बीस रेहं — पदे विंशतिरेखं शुद्धदेहं ढक्कवणिकया

56

अहिगण[1] चारि पसिद्धा सोलह चरणेण पिंगलो भणइ[2]।
तीणि[3] सआ बीसग्गल[4] मत्ता संखा[5]समग्गाइं ॥ १२५[6] ॥
[गाहा]

---

यमीकृतगणं तत् भुअंगापआअं — भुजंगप्रयातं छन्दः, तथा कथमित्याह, ठए इति, अत्र — यथा मुद्धए — मुग्ध[या] कंठए — कंठे हारः मुत्तादाम ठए — स्थाप्यते इत्याद्यः। अत्र ठए इति द्वितीयचरणः मात्राकथनं च पद्यपूरणार्थमेवेति मंतव्यं, यग[ण]-चतुष्टयरचितचरणं भुजंगप्रयातमिति फलितोऽर्थः। (E).

१२४। धअ[ओ] इति। ध्वजचामरं रूपकाः संस्थाप्यते कंठे मुग्धया यथा हारः। चत्वारः छंदः क्रियते तथा शुद्धदेहं भुजंगप्रयातं पदे विंशतिरेखं॥ ध्वजो लघ्वादिस्त्रिकलः, चामरं गुरुः, एवंरूपाश्चत्वारो गणाः पदे कार्या इत्यर्थः। शुद्धेति दोषादिप्रागभावं सूचितं। यथा मुग्धया हारः कंठे भ्रियते तथा ग्रीवेवेत्यर्थः। (G).

१२५। एतस्यैव विशेषान्तरमाह। अहिगणाश्चत्वारः प्रसिद्धाः षोडशचरणैः पिङ्गलो भणति। त्रीणि शतानि विंशत्यधिकानि मात्रासंख्याः स[म]ग्राणि॥ अहिगण आदिलघुः पञ्चकलः, षोडशचरणैरेताद्दृशैर्भुजङ्गप्रयातं पिङ्गलो भणति, समग्रैः षोडशचरणैर्विंशत्यधिकशतत्र[य]मात्रा भवन्तीत्यर्थः। (C).

---

१२५। १ अभिनव (F). २ कबर (A). ३ तिणि (A & C), तिण (B). ४ बीसग्गा (A). ५ संखा (C). ६ This śloka comes after १२६ in MSS. (A, B & C).

जहा, मत्ता मत्त माअंग[1] पाए ठवीआ
तहा तिक्ख[2]बाणा कडक्खे[3] धरीआ ।
भुआ[4] पास[5] भोहा[6] धणूहा[7] समाणा
अहो णाअरी कामराअस्स सेणा[8] ॥ १२६[9] ॥
भुअंगपआतं । (C).

१२५ । अथास्यैव प्रकारांतरं गाथया वदति, अहिगणेति पसिद्धा — सर्वत्र छंदोग्रंथे प्रसिद्धाः चारि — चत्वारः अहिगण — अहिगणाः पञ्चकलाः यगणा इति यावत् यत्र प्रतिचरणं पतंतीति शेषः, वीसग्गल — विंशत्यधिकानि तीणि सआ — त्रीणि शतानि समग्गाइं — समग्रा मत्ता संखा — मात्रासंख्या यत्र भवतीति शेषः, सोलह चरणेण — षोडशचरणेन उपलक्षितं तत् भुजंगप्रयातनामकं वृत्तमिति शेषः पिंगलो — पिंगल इति भणइ — भणति ॥ श्लोक-चतुष्टयस्यैकः श्लोकः कर्त्तव्य इति फलितार्थः। (E).

१२५ । गाथयास्यैव प्रकारांतरमाह, अहीति । अहिगणाश्चत्वारः प्रसिद्धाः षोडशचरणेन पिंगलो भणति । त्रीणि शतानि विंश-त्यधिके[कानि] मात्रासंख्या समग्रा ॥ अहिगणो यगणः । (G).

१२६ । उदाहरति । मत्तामत्तमातङ्गः पादे स्थापितः तथा तीक्ष्णबाणाः कटाक्षे धृताः । भुजः पाशः भ्रुवौ धनुःसमाने अहो नागरी कामराजस्य सेना ॥ (C).

१२६ । १ मातङ्ग (C). २ तिक्ख (C). ३ कडक्खे (B & C). ४ भुजा (F). ५ पाश (E & F). ६ भौहा (A), भोंहा (B & C). ७ धणूहा (B & C). धणूहा (F). ८ सेना (E). ९ १२२ (A).

हार गंधा तहा कम[1] गंधा उणो
कम सद्दा[2] तहा तो[3] गुरूआ गणो[4] ।
चारि[5] ओहा गणा णाअ राआ भणो[6]
एहु[7] रूएण लच्छीहरो[8] सो मुणो[9] ॥ १२७[10] ॥

१२६ । भुजंगप्रयातमुदाहरति, महामत्तेति । यस्याः पाए—पादे महामत्तमातंगः ठवीआ—स्थापितः, तहा—तथा यस्याः कडक्खे—कटाक्षे तिक्ख बाणा—तीक्ष्णबाणाः धरीआ—धृताः । यस्याः भुआ—भुजयोः फास—पाशो धृत इति पूर्वेणान्वयः, यया च भोंहा—भ्रुवोः धणूहा—धनुः धृतमिति पूर्वेणान्वयः, सेयं णागरी अहो इत्याश्चर्ये कामराअस्स—कामनृपतेः [समाणा] —समाना त्रिभुवनविजयेनातिगर्विता सेणा—सेनैव सेनेति भावः ॥ यद्वा पादस्थापितमहामातंगा कटाक्षा एव धृतास्तीक्ष्णबाणाः यया सेत्यर्थः, भुजपाशा भुजैव पाशो यस्याः सेत्यर्थः, धनुःसमान-भ्रूका णागरी कामनृपतेः सेनेव भातीति शेष इति योजनीयं । पूर्वापरशब्दव्यत्यासस्तु प्राकृतभाषायां न दोषायेति मंतव्यम् । भुजंगप्रयातं निवृत्तम् । (E).

१२६ । भुजंगप्रयातं यथा । महामाया मातंगाः पादे स्थापिता-स्तथा तीक्ष्णबाणाः कटाक्षे धृताः । भुजा पाशो भ्रूर्धनुषा समाना, अहो णागरी कामराजस्य सेना ॥ (G).

१२७ । १ कम (B). २ सद्दा (C). ३ तहा ता (A), तहारा (B & C). ४ रण (B). ५ चारी (F). ६ भणे (A, B & C). ७ एव (A). ८ लच्छी-हर (C), लच्छीधरो (F). ९ मुणे (C). १० १२४ (A).

१२७। हारगन्धौ तथा कर्णगन्धौ पुनः कर्णशब्दौ तकारो-गुरुको गणः। चत्वारो योधगणा नागराजो भणति एतद्रूपेण लक्ष्मीधरो ज्ञायते ॥ हारो गुरुः, गन्धः शब्दश्च लघुः, कर्णो-द्विगुरुः, तकारोऽन्त्यलघुको गणः, गुरुको गण एकः। चत्वारो योध-गणा इत्यनेन उक्तार्थ एव स्पष्टीकृतः, योधो मध्यलघुः पञ्चकलः। (C).

१२७। अथ द्वादशाक्षर[चर]णवृत्तस्यैकसप्तत्युत्तरैकादशशततमं ११७१ भेदं लक्ष्मीधरनामकं वृत्तं लक्षयति, हार गंधेति। हार गंधा—हारगंधौ गुरुलघू इति यावत् तह्ना कण्ण गंधा—तथा कर्णगंधौ कर्णौ गुरुद्वयात्मको गणः गंधो लघुस्तावित्यर्थः उणो—पुनः कण्ण सद्दा—कर्णशब्दौ गुरुद्वयात्मकगणलघू इति यावत् तह्ना तो—तथा तोऽन्तलघुस्तगण इत्यर्थः गुरुआ गणो—गुरुक-गणः। एऊ रूएण—एवं रूपेण एतावदुपादानविधिनेति यावत् चारि जोहा गणा—चत्वारो योद्धृगणा रगणा इति यावत् यत्र प्रतिचरणं पतंतीति शेषः, सो—सः लच्छीहरो—लक्ष्मीधरः मुणो—ज्ञातव्यः, इति णाअराआ—नागराजः पिंगल इति यावत् भणो—भणति ॥ रगणचतुष्टयरचितचरणं लक्ष्मीधरनामकं वृत्तं ज्ञातव्यमिति फलितार्थः। अत्र रगणचतुष्टयोद्भवनिकाप्रकारः पूर्वार्द्धेणोक्तमिति ध्येयम्। (E).

१२७। हारेति ॥ हारगंधौ तथा कर्णगंधौ पुनः कर्णशब्दौ तथा तगणो गुरुको गणः। चत्वारो योद्धृगणा नागराजो भणति एवं रूपेण लक्ष्मीधरस्तुः ॥ हारो गुरुः, गंधो लघुः, कर्णो द्विगुरुः, शब्दो लघुः। एवं चत्वारो रगणाः। (G).

जहा, भंजिआ मालवा गंजिआ कसला[1]
जिझिआ[2] गुज्जरा[3] लुंठिआ[4] कुंजरा[5] ।
बंगला भंगला ओड्डिआ[6] मोड्डिआ[7]
मेच्छआ[8] कंपिआ कित्तिआ थप्पिआ ॥ १२८[9] ॥
लक्ष्मीधरः[10] ।

---

१२८ । उदाहरति । भञ्जिता मालवा गञ्जिताः कर्णाटाः जिता गुर्ज्जरा लुण्ठिताः कुञ्जराः । वङ्गा भग्ना ओड्रा मोटिताः म्लेच्छाः कम्पिताः कीर्त्तिः स्थापिता ॥ कर्णेनेत्यध्याहार्य्यम् । (C).

१२८ । लक्ष्मीधरमुदाहरति, भंजिआ इति । मालवा—मालवदेशाधिपतयो राजानः भंजिआ—भंजिता भग्ना इति यावत्, कसला—कर्णाटाः कर्णाटदेशीया राजान इति यावत् गंजिआ—गंजिता मारिता इति यावत्, लुंठिआ कुञ्जरा—लुंठितकुंजराः लुंठिताः बलाद्गृहीताः कुंजरा हस्तिनो येषां तादृशा इत्यर्थः गुज्जरा—गुर्ज्जरदेशीया राजानो जिझिआ—जिताः । बंगला—बंगाः भंगला—पलायिताः, ओड्डिआ—ओड्रदेशीया राजानः मोड्डिआ—मोटिताः, मेच्छआ—म्लेच्छाः कंपिआ—कंपिताः, कित्तिआ—कीर्त्तयः थप्पिआ—स्थापिताः ॥ स रामो जयतीति प्रबंधेन युज्यते । लक्ष्मीधरो निवृत्तः । (E).

---

१२८ । १ कासला (A), कासला (B & C). २ जीझिआ (A & C), जीझिआ (B). ३ गुज्जरा (B & C). ४ लूडिआ (A, B & C). ५ पिंजरा (A), कुञ्जरा (E). ६ जड्डिआ (A), उड्डिआ (C). ७ मुंडिआ (A), मुड्डिआ (B & C). ८ मिच्छआ (E). ९ १२५ (A). १० लक्ष्मीधरा (A).

सगणा[1] धुव[2] चारि पलंति जही[3]
भण[4] सोलह मत्त बिराम कही ।
तह पिंगलिअं[5] भणिअं उचिअं[6]
इअ तोटअ[7] छंद वरं रइअं[8] ॥ १२९[9] ॥

---

१२८ । यथा । भंजिता मालवाः गंजिताः कर्णाटका जिताः गुर्ज्जरा लुंठिताः कुंजराः । वंगा भंगिता ओड्रदेशा मोटिताः म्लेच्छाः कंपिताः कीर्त्तयः स्थापिताः ॥ (G).

१२९ । सगणा ध्रुवाश्चत्वारः पतन्ति यत्र गणषोडशमात्राभिर्विरामस्तत्र । तथा पैङ्गलिकैर्भणितम् उचितमिति तोटकच्छन्दवरो रचितः ॥ सगणचतुष्केण षोडशमात्राकथनं स्पष्टार्थमेव, विरामः पादसमाप्तिः । (C).

१२९ । अथ द्वादशाक्षरचरणस्य वृत्तस्य पंच[षट्]पंचाशदधिकसप्तदशशततमं १७५५ [१७५६] भेदं तोटकनामकं वृत्तं लक्षयति सगणेति । जही — यत्र चारि चत्वारः सगणा गुर्वंतगणाः धुव — ध्रुवं पलंति — पतंति, सोलह मत्त बिराम कही — षोडशमात्राकथितविरामं षोडशमात्रासु कथितो विरामो विच्छेदो यस्मिंस्तदित्यर्थः । तह — तथा रइअं — रचितं पिंगलेनेति यावत् छंद वरं — छंदःश्रेष्ठं इअ — एतत् तोटअ — तोटकं भण — कथय

---

१२९ । १ सगणा (A). २ धुव (A, B & C). ३ जिहौ (F). ४ भण (A), भन (B & C). ५ पिंगलअं (A & C). ६ Dropt in (B). ७ तोडअ (B), तोडअ (C). ८ रचिरं (B), रचिअं (C). ९ १२१ (A).

जहा, चल[1] गुज्जर[2] कुंजर[3] तेज्जि[4] महो[5]
तुअ[6] बब्बर जीवण[7] अज्जु[8] णहो ।
जइ कुप्पिअ[9] कम्म णरेंद वरा
रण[10] को हरि[11] को[12] हर वज्जहरा[13] ॥ १३०[14] ॥
तोटकं ।

---

इति पिंगलिअं—पिंगलोयैः पिंगलप्रयुक्तच्छंदःशास्त्राभिज्ञैरिति यावत् उचिअं—उचितं भणिअं—भणितं ॥ (E).

१२९ । सगेति । सगणा ध्रुवं चत्वारः पतंति यत्र भण षोडश-मात्राविरामः कथितः । तथा पिंगलीयेर्भणितम् उचितमेत-त्तोटकं छंदोवरं रचितम् ॥ (G).

१३० । उदाहरति । चल गुर्ज्जर कुञ्जरांस्त्यक्त्वा तव तव बर्ब्बर जीवनमद्य नास्ति । यदि कुप्यति कर्णनरेन्द्रवरो रणकेश्वरौ कोहरराज्यहरः ॥ कोहरो राज्यभेदः । (C).

१३० । तोटकमुदाहरति, चलेति । हे बब्बर—बर्ब्बर गुज्जर—गुर्ज्जराधीश तुअ—तव जीअ[ब]ण—जीवनं अज्जु—अद्य णहो—नास्ति, अतः कुञ्जर—कुंजरान् महो—महीं तेज्जि—त्यक्त्वा चल—गच्छ त्वमिति शेषः । कथं जीवनं नास्तीत्यत आह

---

* ११० । १ जल (C). २ गुझर (B). ३ कुञ्जर (E). ४ तज्जि (A). ५ हरो (A, B & C). ६ तुव (B), वव (F). ७ जिवण (B & C). ८ अज्ज (B). ९ कोप्पिअ (A), कोप्पइ (B & C). १० वर (A). ११ के हरि (A), dropt in (B), केहरि (C). १२ के (A). १३ वज्जधरा (A). १४ ११० (A).

जा[1] चारि तक्कार संभेअ उक्किट्ठ[2]
सारंगरूअक्क सो पिंगले दिट्ठ[3] ।
जा तीअ[4] बीसाम[5] संजुत्त पाएहि
णा जाणिए कंति[6] अस्सोअ[7] भाएहि[8] ॥ १३१[9] ॥

जइति । कस्र णरेंद वरा—कर्णनरेंद्रवरः जइ—यदि कुप्पिअ—कुपितस्तदेति शेषः रण—रणे को हर—को हरः को हरि—को हरिः कः बज्जहरा—वज्रधरः ॥ गुर्ज्जरजयार्थप्रयातकर्णनरपतिप्रतियुद्धाय समुपस्थितं गुर्ज्जरदेशाधिपतिं प्रति कस्यचिद्वन्दिजनस्यैतद्वचनम् । तोटकं निवृत्तम् । (E).

१३० । यथा । चल गुर्जर कुंजरान् त्यक्त्वा महीं तव बर्ब्बर जीवनमद्य न हि । यदि कुपितः कर्णनरेंद्रवरो रणे को हरिः कौ हरवज्रधरौ ॥ (G).

१३१ । यत्रचतुस्तकारसम्भेदेनोत्कृष्टं सारङ्गरूपकं तत् पिङ्गलेन दृष्टं । यत्रो[ये] विश्रामाः संयुक्तपादैर्न ज्ञायते कान्तिरन्योन्यभागैः ॥ संभेदः सम्बन्धः, उत्कृष्टम् उत्कर्षः सुश्राव्यत्वं, रूपकं छन्दः, संयुक्ताचरप्रधानपादैर्विश्लिष्टं, विश्रामो यतिः, कान्तिः सा केनापि [न] ज्ञायत इत्यर्थः । (C).

१३१ । अथ द्वादशाक्षरचरणस्य वृत्तस्य एकचत्वारिंशोत्तरचतो-

१३१ । १ जं (A). २ उक्किट्ठ (B & C). ३ दिट्ठ (B & C). ४ तीअ (A). ५ बिस्साम (B & C). ६ किंत्ति (E). ७ अस्सेअ (A). ८ भाएहि (A), पाएहि (C). ९ १२८ (A).

जहा, रे गोड[1] थक्कंति[2] ते हत्थि[3] जूहाइ[4]
पक्कट्टि जुज्झंतु[5] पाइक्क बूहाइ[6] ।
कासीस राआ सरासार अग्गे ण[7]
को हत्थि[8] को पत्ति को बीर बग्गेण ॥ १३२[9] ॥
सारंग[रूपकं] ।

---

विंशतिशततमं १२४१ भेदं सारंगरूपकनामकं वृत्तं लक्षयति, जा चारीति । यत् चारि तक्कार संभेअ उक्किट्ठ — चतुस्तकारसंभेदो-त्कृष्टं चतुस्तकाराणां चतुर्णामंतलघुतगणानां यः संभेदः संबंध-स्तेनोत्कृष्टं सुश्राव्यलाघुत्कर्षयुक्तमित्यर्थः, यत् पाएहि — पादेषु तीअ वीसाम संजुत्त — तृतीयविश्रामसंयुक्तं तच तृतीयाक्षरे यतिस्तादृश-मित्यर्थः अणोन्न भाएहि — अन्योन्यभागैः परस्परविच्छेदैरिति यावत् यस्येति शेषः कंति — कांतिः ण जाणिए — न ज्ञायते, सो — तत् पिंगले दिट्ठ — पिंगले दृष्टं सारंगरूअक्क — सारंगरूपकं तत्सारंगरूपकनामकं वृत्तमित्यर्थः ॥ अत्र चतुर्थस्वरणः पद्यपूरणार्थ-मेवेति मन्तव्यम् । (E).

१३१ । जेति । यत्र चतुस्तगणसंभेद उत्कृष्टः सारंगरूपकः

---

१३१ । १ गजड (A), गोण (B & C), गोड (E). २ थक्कंतु (A & C), थक्कइ (B). ३ हत्थि (A), हत्थी (E), हत्थ (F). ४ जूथाइं (A), जूथाहि (B), जूथाए (C), जूहाए (E & F). ५ जज्झंत (A), जज्झन्तु (B & C), जुज्झंतु (E). ६ जूथाए (A), जूथाए (C). ७ अग्गेण (C). ८ हत्थि (A), हत्थि (B). ९ १२९ (A).

पओहर चारि पसिद्धह ताम[1]
ति तेरह[2] मत्तह मोत्तिअ[3]दाम।
ण पुव्वहि[4] हारु[5] ण दिज्जइ[6] अंत
बिहु सअ अग्गल छप्पण[7] मत्त॥ १३३[8] ॥

---

पिंगलेन दृष्टः। यः तृतीये विश्रामसंयुक्तः पादेषु न ज्ञायते कांतिरन्योन्यभागैः॥ उल्लाहलं आद्यत्वादिना। (G).

१३२। उदाहरति। रे गौड़ तिष्ठन्तु ते हस्तियूथानि परावृत्य भजन्तु पदातियूथानि। काशीश्वरराजशरासाराये किं पत्तिभिः किं हस्तिभिः किं वीरवर्गेण॥ अत्र जयस्यासम्भावितत्वात् किं हस्त्यश्वादिना, तथाच पलायनं युक्तमिति व्यज्यते। (C).

१३२। सारंगरूपकमुदाहरति, रे गौडेति। रे गौड—रे गौडदेशाधीश ते हत्थि बूहाइ—हस्तिव्यूहानि[?] थक्कंति—आस्यंति, अत इति शेषः पाइक्क बूहाइ—पदातिव्यूहानि पलट्टि—परावृत्य जुज्झंतु—युध्यंतु[ताम्]. नाम, तथापीति शेषः कासीस राआ सरासार अग्गे—काशीश्वरराजशराऽऽसाराग्रे दिवोदासबाणधाराग्रे इति पाठश्च, ण—ननु निश्चयेन को हत्थि—किं हस्तिभिः को पत्ति—[किं] पत्तिभिः को बीर बग्गेण—किं वीरवर्गेण॥ (E).

१३२। यथा। रे गौड आस्यंति ते हस्तियूथानि परावृत्य

---

१३३। १ ताम (E & F). २ तेरह (B). ३ मोत्तिम (B). ४ पूब्ब (B), पूब्ब (C). ५ हार (B, C & E). ६ दिज्जहि (A & B). ७ छप्पण (B). ८ १३० (A).

युध्यंतु[ताम्] पत्तिव्यूहाः। काशीशराजशराधाराये किं हस्तिभिः किं पत्तिभिः किं वीरवर्गेण॥ दिवोदासखड्गाये सर्वे तृणप्राया-इत्यर्थः॥ (G).

१२२। पयोधरैश्चतुर्भिः प्रसिद्धैर्युक्तं चित्रयोदशमात्राभिः मौक्तिकदाम। न पूर्व्वस्मिन् हारो न दीयते अन्ते दिशते अग्रे षट्पञ्चाशन्मात्राः॥ अधिकास्त्रयोदश चित्रयोदश, अत्र च आद्य-न्तयोर्गुरुरहितत्वेन जगण एवोक्तः, तथाच पयोधरशब्दोऽर्थस्पष्टी-करणार्थमेवेति। यद्वा, आद्यन्तगुरुरहित-षोडशमात्रिक-पादषोड-शकेनापि मौक्तिकदामच्छन्दो भवतीति ज्ञापनार्थं। न चैवं मात्रा-वृत्त एवोपन्यासः स्यादिति वाच्यं, द्वादशाक्षरनियमस्यैव विनिगम-[क]त्वात्, षोडशपादैः षट्पञ्चाशदधिकशतद्वयं मात्रा भवन्ति। (C).

१२२। अथ द्वादशाक्षरचरणस्य वृत्तस्य षट्त्रिंशत्युत्तरैकोनविं-[शं]शशततमं २९२६ भेदं मौक्तिक[दाम]नामकं वृत्तं लक्षयति, पओहरेति। जाम — यन्मध्ये ति तेरह मत्तह — चित्रयोदशमात्राभिः षोडशभिर्मात्राभिरिति यावत् उपलक्षिताः चारि — चत्वारः पओहर — पयोधरा मध्यगुरुका जगणा इति यावत् प्रसिद्धाः भवंतीति शेषः, यत्र च अंत — अंते पादान्ते इत्यर्थः पुब्वहि — पूर्वं पादादावित्यर्थः हार — हारो गुरुः ण दिज्जे — न दीयते, किन्तु सप्त-पञ्चाश ऊण्णअ मंत — द्विशताधिकषट्पंचाशन्मात्राकं तत् मोत्तिअ-दाम — मौक्तिकदामनामकं वृत्तमित्यर्थः॥ ननु यत्र पयोधरचतु-ष्टयं पततीत्युक्तैव पादाद्यंतयोर्गुरुदानाप्रसक्तेः कथं ण पुब्बहीत्यनेन तत्र तत्प्रतिषेधः साधु संगच्छत इति चेत्, अत्र केचित् यत एवं

अहा, कआ भउ[1] दुब्बरि[2] तेज्जि[3] गरास
खणे खण[4] जाणिअ अच्छ[5] णिसास ।
कुहू रव तार[6] दुरंत बसंत
कि णिद्दअ[7] काम कि णिद्दअ[7] कंत[8] ॥ १३४[9] ॥
मौक्तिकदाम ।

चत्वारो जगणाः पतंतीत्यत एव पूर्व्वम् अंते वा हारो न दीयत-इति पूर्व्वोक्तस्यैव विवरणमेतदित्याहुः । षट्पञ्चाशदुत्तरशतद्वय-मात्राकथनं षोडशचरणाभिप्रायेण, जगणमात्राज्ञापकं तद्विशेषण-पदं पादपूरणार्थमेवेति मंतव्यम् । (E).

१३३ । पओ इति । पयोधराश्चत्वारः प्रसिद्धाः यत्र चिचयो-दश मात्रा मौक्तिकदाम । न पूर्व्वं हारो न दीयते अंते द्विशता-धिकषट्पंचाशन्मात्रं ॥ चिचयोदश षोड़शेत्यर्थः, द्विशतेत्यनेनास्य षोड़शचरणता भवतीत्युक्तं, पयोधरो जगणः । (G).

१३४ । उदाहरति । कायो भरः दुर्ब्बलस्त्यक्ता ग्रासं क्षणे क्षणे ज्ञायते अस्ति[च्छ]निश्वासः । कुहूरवस्तापयति दुरन्तो वसन्तः * * * किं निर्द्दयः कान्तः ॥ दुर्ब्बलत्वात् भारो भरः, ग्रासं भक्ष्यं त्यक्त्वा दुर्ब्बलो जातो ज्ञायते । एतावत्यां विसंष्ठुलतायां निर्द्दयः कामः कान्तो वा वीजमपि तु द्वावेव । (C).

१३४ । १ भच (A), चउ (B). २ दुब्बर (A), दुब्बल (B & C). ३ तेज्ज (C). ४ खणे (A, B & C). ५ दोष (A). ६ ताव (A, B & C). ७ णिकुब (B & C). ८ Dropt in (C). ९ १११ (A).

तोटअ[1] छंद बिरीअ ठबिज्जसु[2]
मोदअ छंदअ[3] णाम करिज्जसु ।
चारि गणा भगणा सुपसिद्धउ[4]
पिंगल जंपइ[5] कित्तिहिं[6] लुद्धउ[7] ॥ १२५[8] ॥

१२४ । मौक्तिकदामोदाहरति । गरास—ग्रासं भोजनमिति यावत् तेज्जि—त्यक्ता कआ—कायः दुब्बरि—दुर्बलः भउ—जातः, खणे खणे[ण]—क्षणे क्षणे अच्छ—स्वच्छः णिसास—निश्वासः रोदनकालीनश्वास इत्यर्थः जाणिअ—ज्ञायते । तार—तारेण कुहु रव—कोकिलारावेण दुरंतः दुष्टः मरणादिजनकः अंतो यस्य तादृशो वसंतनामा ऋतुः, तस्मात् कि णिद्दअ काम—किं निर्दयः कामः कि णिद्दअ कंत—किं निर्दयः कांतः ॥ एतादृशेऽपि समये न आगतः सः प्रियो निर्दयः, प्राणेश्वरप्राणां मां ज्ञात्वा योऽतिदुःखं प्रयच्छति स कामो वा निर्दय इति कस्याश्चित्प्रोषितपतिकायाः सखीं प्रति वचनमेतत् । मौक्तिकदाम निवृत्तम् । (E).

१२४ । यथा । कायो जातो दुर्बलस्त्यक्तो ग्रासः क्षणे क्षणे जातोऽच्छनिश्वासः । कुहुरवतारदुरंतो वसंतः किं निर्दयः कामः किं निर्दयः कांतः ॥ (G).

१२५ । तोटकच्छन्दो विपरीतं स्थापय, मोदकच्छन्दो नाम

१२५ । १ तोलअ (B & C), तोलआ (E). २ ठविज्ज (C). ३ छंदइ (A). ४ सुपिसिद्धउ (B). ५ जप्पइ (B). ६.कित्ति (A), कित्तिअ (B & C). ७ लुबउ (B), लद्धउ (C). ८ १२१ (A).

जहा, गज्जउ[1] मेह कि अंबर[2] सावर[3]
फुल्लउ[4] णीव कि बुल्लउ[5] भम्मर[6]।
एक्कउ[7] जीअ पराहिण[8] अम्मह[9]
कीलउ[10] पाउस कीलउ[10] बम्मह[11] ॥ १३६[12] ॥
मोदकं।

---

कुरु। चत्वारो गणा भगणाः सुप्रसिद्धाः, पिङ्गलो जल्पति कीर्त्ति-लुब्धः ॥ सगणचतुष्कात्मकतोटकस्य वैपरीत्येनापि चत्वार इति अत्र चत्वारो गणा भगणरूपाः स्थाप्याः, अन्तगुरुर्हि सगणः, तस्य वैपरीत्येन भगणः। (C).

१३५। अथ द्वादशाक्षरचरणस्य वृत्तस्यैकादशोत्तरपंचचिंशत्शत-तमं ३५११ भेदं मोदकनामकं वृत्तं लक्षयति, तोलेति। तोलअ छंद — तोटकच्छंदः विरीअ — विपरीतं ठविज्जसु — स्थापयस्व, अतएव चारि गणा — चत्वारो गणाः भअणा — भगणा आदिगुरुकाः गणा इति यावत् सुपसिद्धउ — सुप्रसिद्धा यत्र प्रतिचरणं पतंतीति शेषः, तस्य छंदह — छंदसः मोदअ — मोदकं नाम अभिधानं करिज्जसु — कुरुष्व इति कित्तिहि लुद्धउ — कीर्त्तिलुब्धः पिंगलः जंपइ — जल्पति ॥ इदमत्र तत्त्वं, चतुर्भिर्गुर्वंतगणैस्तोटकच्छंदो भवति

---

१३६। १ गज्जहि (B). २ अंमर (A). ३ सामर (A, B & C). ४ फुल्लह (B), फुल्लउ (C). ५ भम्मउ (A, B & C). ६ भामर (A). ७ एक्कल (A & B), एक्कल (C). ८ पराधिण (C). ९ चम्मह (C). १० कीलेउ (A & E), कौतुक (B). ११ मम्मह (C). १२ १३३ (A).

तद्विपरीतस्थापनेनादिगुरुकैश्चतुर्भिर्गणैर्मोदकं भवति । वकोऽपिस्तु पद्यपूरणायेति मंतव्यम् । (E).

१२५ । तोटेति ॥ तोटकच्छंदो विपरीतं स्थापय, मोदकं छंदो-नाम कुरुष्व । चत्वारो गणा भगणाः सुप्रसिद्धाः, पिंगलो जल्पति कीर्त्तिलुब्धकः ॥ चत्वारो भगणाः कार्य्या इत्यर्थः । (G).

१२६ । उदाहरति । गर्ज्जंतु मेघः किमम्बरं श्यामलं फुल्लतु नीपः घूर्ण[तु] भ्रमरः । * * * पराधीन * * * क्रीडतु प्रावृट् क्रीडतु मन्मथः ॥ गर्जो मेघस्य वास्तु दुःखे न कोऽपि विशेषः, किमित्याक्षेपे, क्रीडत्विति, मम तु मरणं सिद्धमेवेति व्यज्यते । स्थानद्वये को णउ इति पाठे किं नयतु प्रावृट् किं नयतु मन्मथः इति वार्थः । (C).

१२६ । मोदकमुदाहरति । गज्जेति । मेह — मेघः गज्जउ — गर्ज्जंतु, कि — किंवा अंबर — अंबरम् आकाशमिति यावत् सावर — श्यामलं भवत्विति शेषः, णीव — नीपः कदम्बः फुल्लउ — विकसतु, कि — किंवा भम्मर — भ्रमराः बुल्लउ — गुंजंतु । अम्मह — अस्माकं पराहिण — पराधीनमन्यायत्तमिति यावत् एक्कउ — एकमेव जीवं किंवा पाउस — प्रावृट् लेउ — गृह्णातु, किं वा वम्मह — मन्मथः लेउ — गृह्णातु ॥ अत्र लेउ इति एकारो ह्रस्वो-बोध्यः । वर्षागमेऽप्यनागतं विदेशिनं पतिं ज्ञात्वा अतिकामार्त्तायाः कस्याश्चित्प्रोषितभर्त्तृकायाः कांचित्प्रियसखीं प्रति वचनमेतत् । मोदकवृत्तं निवृत्तम् । (E).

१२६ । यथा । गर्जंतु मेघः किमंबरं श्यामलं, विकसंतु नीपाः

णगण णगण कइ[1] चउ गण[2]
सुकइ[3] कमलमुहि[4] फणि भण[5] ।
तरलणअणि सब कर[6] लहु
सब गुरु जबउ[7] णिबरि कहु[8] ॥ १३७[9] ॥

किं गुंजंतु भ्रमराः। एको जीवः पराधीनोऽस्माकं, किं गर्जतु पर्यन्यः, किं गर्जतु मन्मथः ॥ (G).

१३७। नगणं नगणम् इति चतुर्गणं सुकविकमलरविः फणी भणति। तरलनयनी सर्वंच सर्वलघु सगुरुरूपकं न निरूप्य कथय ॥ आदौ नगणस्ततो नगण एवंक्रमेण चत्वारो गणा इत्यर्थः। तरलनयनीति छन्दसो नाम, सर्वंच चयोदशाक्षरादावपि, निरूप्य निर्णीय। (C).

१३७। अथ द्वादशाक्षरचरणस्य वृत्तस्यांतिमं भेदं तरलनयना-नामकं वृत्तं लक्षयति, णगणेति। हे कमलमुखि णगण—प्रथमं नगणः सर्वलघ्वात्मको गणः पुनः नगणः स एव, एवंप्रकारेण चउ गण—चतुरः गणान् नगणचतुष्टयमित्यर्थः कइ—कृत्वा सब—सर्वान् द्वादशापि पादस्थान् वर्णान् लहु—लघून् कुरु, जबउ—यावंतः सब गुरु—सर्वगुरवो गुरुयुक्ता यावंतो द्वादशाक्षरभेदा-

१३७। १ कर (A, B & C). २ मुच (C). ३ छकर (E). ४ कमलवदद (A, B & C). ५ फण (B). ६ सर सब (A), सब सब (B & C). ७ सब गुरु जबब (A), सगुरु बबउ स (B & C), सब गुरु बबउ (E). ८ विरचि करउ (A), विरचि कउ (B & C), विरवि कर (E). ९ १३४ (A).

जहा, कमल वअण तिणअण हर[1]
गिरि वर सअण[2] तिसुलधर[3] ।
ससहर[4] तिलअ पलअकर[4]
वितरउ[5] मझु[6] अभिमत[7] वर ॥ १३८[8] ॥
तरलणअणि[9] ।

इत्यर्थः तावंत इति शेषः णिवरि — निराकृत्य भिन्नीकृत्येति यावत् तरलणअणि — तरलनयना एतन्नामकं वृत्तमित्यर्थः कह — कथय इति सुकइ — सुकविः फणि — फणी पिंगलः भण — भणति ॥ अथ गुरुद्वयकथनावहे[द]कथनं पद्यपूरणार्थमेवेति मंतव्यं, नगणचतुष्टयरचितचरणा तरलनयनेति निःकृष्टोऽर्थः । (E).

१३७ । णगेति । नगणं नगणं कृत्वा चतुरो गणान् सुकविः कमलमुखि फणी भणति । तरलनयना सर्वान् कुरु लघून् सर्वगुरुं यावत् केवलं कथय ॥ सर्वगुरुमगणमारभ्य नगणपर्यंतं भेदाः कथिता इत्यर्थः । तरलनयनेति छंदः । (G).

१३८ । उदाहरति । कमलवदनस्त्रिलोचनो हरो गिरिवरशयनस्त्रिशूलधरः । शशधरतिलकः प्रलयकरो वितरतु मह्यं अभिमतं वरम् ॥ (C).

१३८ । तरलनयनामुदाहरति, कमलेति । कमल वअण —

१३८ । १ तिण वर (E). २ गिरिसअण (A). ३ सुलधर (F). ४ ससहर तिलअ (A), पलअकर (B), मअ-अरद (E & F). ५ वितरहि (A & C). ६ मझ (B). ७ अभिमअ (C), अहिमत (F). ८ १४५ (A). ९ तरलणअणी (A).

णगण चामर गंधजुआ ठवे
चमर सल्ल[1]जुआ जइ संभवे ।
रगण[2] एक्क[3] पअंतहि लेक्खिआ[4]
सुमुहि[5] सुंदरि पिंगल देक्खिआ[6] ॥ १३९[7] ॥

---

कमलवदनः तिणअ[ण] — त्रिनयनः गिरि बर सअण — गिरिवरशयनः तिसुलधर — त्रिशूलधरः । ससहर तिलअ — शशधरतिलकः गल गरल — कंठस्थितविषः हर — हरः महादेवः मज्झ — मह्यं अभिमत बर — समीहितवरं बितरउ — वितरतु ॥ तरलनयना निवृत्ता । (E).

१३८ । यथा । कमलवदन त्रिनयन हर गिरिवरशयन त्रिशूलधर । शशधरतिलक गलगरल वितर ममाभिमतं वरं ॥ (G).

१३९ । नगण-चामर-गन्धयुगानि स्थितानि चामरं शल्ययुगं यत्र सम्भवति । रगण एकः पादान्ते लिख्यते शृणु सुन्दरी पिङ्गलेन दृष्टा ॥ चामरं गुरुः, गन्धः शैल[शल्य]श्च लघुः । (C).

१३९ । अथ द्वादशाक्षरचरणस्य वृत्तस्य चतुःसप्तत्यधिकद्विसहस्रतमं [१४६४] सुंदरीनामकं वृत्तं लक्षयति, णगणेति । हे सुमुखि यत्र पूर्वं णगण चामर गंधजुआ — नगणचामरगंधयुगानि नगणस्त्रिलघ्वात्मको गणः चामरम् एको-

---

१३९ । १ सेल (A, B & C). २ रअ गण (B). ३ एक (F). ४ देक्खिआ (A, B & C). ५ सुमुखि (B), समुहि (C). ६ पेक्खिआ (A), लेक्खिआ (B). ७ १३६ (A).

अहा, वहइ[1] दक्खिण मारुअ[2] सीअला[3]
गवइ[4] पंचम कोमल कोइला ।
महुअरा[5] महु पाण बहू सरा[6]
भमइ[7] सुंदरि[8] माहव[9] संभवा[10] ॥ १४०[11] ॥
सुंदरी[12] ।

---

गुरुः गंधजुआ — गंधयुगं लघुद्वयमिति यावत् तानीत्यर्थः ठवे — स्थाप्यंते, ततः जइ — यदि चामरम् एको गुरुः सल्लजुआ — शल्यगं शल्यौ लघुलद्वयमित्यर्थः संभवे — संभवति । पअंभ[त]हि — पादांते एक्क — एकः रगण — मध्यलघुर्गणः लेक्खिआ लिखितः सा पिंगलदृशिता पिंगलेन उपदर्शितेति यावत् सुंदरी सुंदरीनामकं तद्वृत्तं पिंगलेनोपदिष्टमित्यर्थः ॥ तस्यैव ग्रंथांतरे द्रुतविलम्बिते-[तमि]ति नाम, अतएव द्रुतविलम्बितमाह नभौ भराविति लक्षणमपि तत्रैव कृतमिति । (E). [Vide Ghosha's Compendium, p. 75—Ed.]

१३९ । णगेति । नगणं चामरं गंधयुगं स्थाप्यं चामरं शल्ययुगं यदि संभवति । रगण एकः पादांते लेख्यः सुमुखि सुंदरी पिंगल-दृष्टा ॥ चामरो गुरुः, गंधशल्यौ लघू । (G).

---

१४० । १ वहइ (B), वहति (C). २ मारुव (B), मारुअ (E). ३ सिअला (E). ४ रवइ (A & C). ५ बहुअरा (B). ६ मअरसा (A, B & C). ७ नवइ (A), भवइ (B & C). ८ सुंदरि (E). ९ संभर (A), सवर (B), संभव (C), माधव (F). १० माहवा (A, B & C), संभरा (F). ११ १३० (A). १२ सुंदरि (B & C).

कण्णा[1] दुण्णा चामर[2] सल्ला[3] जुअला जं
वीहा[4] दीहा[5] गंधअ[6] जुग्गा पअला[7] तं[8] ।
अंते कंता[9] चामर[10] हारा सुहकाआ[11]
बाईसा मत्ता गुणजुत्ता भणु[12] माआ ॥ १४१[13] ॥

१४० । उदाहरति । वहति दक्षिणमारुतः शीतलः रौति पञ्चमं कोमलं कोकिलः । मधुकरो मधुपानमहोत्सवो गायति सुन्दरि संभूतो माधवः ॥ संस्मरेति पाठे माधवं कृष्णं संस्मर । (C).

१४० । सुंदरीमुदाहरति । काचित्सखी कलहांतरितां महामानवतीं कांचिन्नायिकामाह, वहईति । हे सुंदरि सर्वावयवरमणीये माहव संभवा — माधवो वसंतस्तत्रोत्पन्न इत्यर्थः सीअला — शीतः दक्खिण मारुअ — दक्षिणमारुतः वहइ — वाति, कोइला — कोकिलः पंचम कोमल — पंचमं कोमलं यथा स्यात्तथा गवइ — गायति । महु पाण बहु सरा — मधुपानबहुस्वरा मधु मकरंदस्तस्य पानेनातिगंभीरस्वरा इत्यर्थः महुअरा — मधुकरा भ्रमराः भमइ — भ्रमंति ॥ अतस्त्वमपि मानं विहाय कांतमभिसरेत्याशयः । सुमुखी [सुंदरी] निवृत्ता । (E).

१४० । यथा । वहति दक्षिणमारुतः शीतलो गायति पंचमं

१४१ । १ कण्ण (B). २ Dropt in (B). ३ सेल्ला (B & C). ४ वीहा (B & C). ४ and ५ transposed in (A). ६ गंध (A). ७ पक्खिआ (A). ८ जं (F). ९ कंता (A). १० चामर (A). ११ सुहकाआ (A & E). १२ भणू (E). १३ १३८ (A).

कोमलं कोकिलः । मधुकरा मधुपानबहुलखरा भ्रमंति सुंदरि माधवसंभवे वसंते ॥ (G).

१४१ । अथ चयोदशाचरा । कर्णौ द्विगुणः चामरं शेष[शल्य]-युगं यच द्वौ दीर्घौ गन्धयुगं प्रकटं तत् । अन्ते कान्तौ चामर-हारौ शुभकरौ द्वाविंशतिमाचा गुणयुक्ता * * * ॥ कर्णौ द्विगुरुः तद्द्वैगुण्ये गुरुचतुष्कं, चामरं दीर्घः हारश्च गुरुः, शेल्यं[शल्यं] गन्धश्च लघू, कान्तौ कमनीयौ, द्वाविंशतिमाचा इति मिलितानां संग्रहः । (C).

१४१ । अथ चयोदशाचरचरणस्य वृत्तस्य द्विनवत्युत्तरैकशतो-त्तराष्टसहस्रं ८१९२ भेदा भवंति, तच द्वा[चयः]चिंशोत्तरषोडश-[शत]तमं भेदं [१६३२] मायानामकं वृत्तं लचयति, कसेति । जं — यच पूर्वं कसा दुसा — कर्णद्वयं गुरुद्वयात्मकगणयुगमिति यावत्, ततः चामर — चामरं गुरुस्ततश्च सल्ला जुअला — शल्ययुगलं शल्यो-लघुस्तद्द्वयमित्यर्थः, ततोऽपि बीहा दीहा — द्वौ दीर्घौ गुरुद्वयमिति यावत्, ततश्च गंधअ जुग्गा — गंधयुगं गंधो लघुस्तद्द्वयमित्यर्थः, अंते लघुद्वयांते पादांते वा कंता — कांतौ चामर हारा — गुरु-द्वयमित्यर्थः, एते गणा इति शेषः पअला — प्रकटिताः, तं — तां सु[सु]हकाआ — शुभकायां बाईसा मत्ता — द्वाविंशतिमाचाकां गुणजुत्ता — गुणयुक्तां माआ — मायां भणू — कथय ॥ केचित्तु शुभकायाः शुद्धशरीराः गुणजुत्ता — गुणयुक्ताः द्वाविंशतिर्माचास्य पतंतीति माचाविशेषणतया पदद्वयं योजयंति । माचाकथनं सुह-काआ गुणजुत्तेति च पदद्वयमच पादपूरणार्थमेवेति ध्येयम् । (E)

जहा, ए अत्थीरा[1] देक्खु[2] शरीरा घरु[3] जाआ
वित्ता पुत्ता सोअर[4] मित्ता[5] सबु[6] माआ ।
काहे लागी बब्बर बेलावसि[7] मुज्झे[8]
एक्का[9] कित्ती किज्जहि[10] जुत्ती जइ सुज्झे[11] ॥
१४२[12] ॥ माआ[13] ।

---

१४१ । अथ [अति]जगती चयोदशाक्षरा ॥ कर्णेति ॥ कर्णौ द्वौ चामरः शल्ययुगलं यत्र द्वौ दीर्घौ गंधयुग्मं प्रकटं ततः । अंते कांतौ चामरहारौ शुभकार्यां द्वाविंशतिमात्रां गुणयुक्तां भण मायां ॥ कर्णो द्विगुरुः, चामरो गुरुः, शल्यो लघुः, गंधो लघुः, हारो गुरुः, मायेति छंदोनाम । (G).

१४२ । उदाहरति । एतदस्थिरं पश्य शरीरं गृहं जायां वित्तं पुत्रं सोदरं मित्रं, सर्व्वं माया । किंनिमित्तं बर्व्वर भ्रमसि एकां कीर्त्तिं कुरु युक्त्या यदि शुध्यसि ॥ (C).

१४२ । मायामुदाहरति । ए — एतत् शरीरा — शरीरं अत्थीरा — अस्थिरं देक्खु — पश्य, घरु जाआ वित्ता पुत्ता सोअर मित्ता — गृहजायावित्तपुत्रसोदरमित्राणि एतत्सर्वं माया मिथ्याभूतमित्यर्थः । अतः हे बब्बर — बर्वर काहे लागी — किमर्थं

---

१४२ । १ अत्थीरा (A). २ देक्ख (B & C). ३ वर (A), घर (B & C). ४ सोचर (F). ५ मित्त (E). ६ सबू (A). ७ वेलवावसि (A). ८ मुज्झं (B, C & F). ९ एका (B & C). १० किज्जिअ (B), किज्जइ (C). ११ सुज्झ (B & C), सुज्झे (E), सुज्जे (F). १२ १२९ (A). १३ माया (A).

ठइ आइ लहुजुअ पाअ करीजे
गुरु सल्ल[1]जुआ भगणा जुअ दीजे[2] ।
पअ[3] अंतह[4] पाइ[5] गुरू[6]जुअ[7] किज्जे
सहि तारअ[8] छंदह[9]णाम[10] भणिज्जे[11] ॥ १४३[12] ।

---

मुञ्चसे—विमुञ्च बेलाबसि—विलम्बयसि जइ सूझसे—यदि जानासि, तदा जुत्ती—युक्तां कित्ती—कीर्त्तिं किज्जहि—कुरु ॥ अतिसंसारासक्तं कुकर्म्मिणं कंचित्प्रति कस्यचिन्मित्रस्योपदेशवाक्यमेतत् । माया निवृत्ता । (E).

१४२ । यथा । एतदस्थिरं पश्य शरीरं गृहं जायां वित्तं पुत्रान् सुहृदो मित्राणि, सर्वं माया । किमर्थमेतदुद्दिश्य बर्व्वर विलम्बयसि मुग्ध एका कीर्त्तिः क्रियतां युक्तो यदि जानासि ॥ [का]हे लागीत्युक्तार्थे देशी । (G).

१४३ । स्थापयित्वा आदौ लघुयुगं पादः क्रियते गुरुशेष्य-[शल्य]युगं भगणद्वयं दीयते । पदान्ते पादे गुरुयुगं क्रियते सखि तारकं छन्दो[नाम] भण्यते ॥ (C).

१४३ । अथ चयोदशाक्षरचरणस्य वृत्तस्य षट्पंचाशदुत्तरसप्तदशशततमं भेदं [१७५६] तारकनामकं वृत्तं लक्षयति, ठईति । यच

---

१४३ । १ सेल (A, B & C). २ गुरु सेल जुआ जे (A, B & C). ३ पुणु (B). ४ आंतहि (A, B & C). ५ पाअ (A, B & C). ६ गुरु (A & E). ७ जुर (B), जुआ (C). ८ तारअ (B). ९ छंदह (A). १० णाम (A). ११ भणीजे (A). १२ १४० (A).

अहा, णव[1] मंजरि[2] लिज्जिअ[3] चूअह[4] गाछे[5]
परिफुल्लिअ केसु णआ[6] बण आछे[7] ।
जइ एत्थि[8] दिगंतर जाइहि[9] कंता
किअ[10] बम्मह[11] णत्थि[12] कि णत्थि[12] बसंता ॥
१४४[13] ॥ तारअ[14] ।

---

पाअ—पादे आइ—आदौ लहु जुअ—लघुद्वयं ठइ—स्थापयित्वा गुरु सल्ल जुआ—गुरु-शल्ययुगे करीजे—क्रियेते एको गुरुः लघुद्वयं च क्रियत इत्यर्थः, ततो भअणा जुअ—भगणौ गुर्वादिर्गणस्तद्युगं दीजे—दीयते । पअ अंतह पाइ गुरु जुअ—पादांतःपातिगुरुयुगं किज्जे—क्रियते, सहि—हे सखि तस्य छंदह—छंदसः तारअ—तारकम् इति णाम—अभिधानं भणिज्जे—भण्यते ॥ सगणचतुष्टयोत्तरगुरुरचितचरणं तारकमिति फलितार्थः । (E).

१४३ । ठईति । स्थापयादौ लघुयुगं पादे क्रियते गुरुः शल्ययुग्मं दीयते । पादांतःपातिगुरुयुगं क्रियते सखि तारकं छंदो-नाम भण्यते ॥ (G).

१४४ । उदाहरति । नवमञ्जरी सज्जिता चूतवृक्षे परिफुल्लिता

---

१४४ । १ णवि (A), णवि (B & C). २ मञ्जरि (C & E). ३ लिज्जिअ (A), सज्जिअ (C). ४ चूअर (B). ५ गाच्छे (B & C). ६ केसु णआ (A, B & C), केसू णआ (E & F). ७ आच्छे (B & C). ८ एत्थ (A), इत्थि (B & C). ९ जाइह (B & C). १० कि (A), किणु (B & C). ११ मम्मह (C). १२ णत्थि (A). १३ १४१ (A). १४ तारका (A), तारक (B).

धआ तूर हारो[१] उणो[२] तूर हारेण
गुरू सह किज्जे अ एक्का तआरेण[३] ।
कईसा कला कंदु[४] जंपिज्ज णाएण
असी होइ चो[५] अग्गला सव्व पाएण ॥ १४५[६] ॥

किंशुकलता वनकच्छे । यदि अत्र दिगन्तरं याति कांतः किं मन्मथो नास्ति किं नास्ति वसन्तः ॥ (C).

१४४ । तारकमुदाहरति, णवेति । चूअ गाछे — चूतवृक्षेण णव — नवा मंजरि — मंजरिः लिज्जिअ — गृहीता, केसु[सु] णआ वण — किंशुकनूतनवनं आछे सम्यक् यथा स्यात्तथा परिफुल्लिअ — परिपुष्पितं । जइ — यदि एत्थि — अत्र वसंतसमये इत्यर्थः कंता — कांतः दिगंतर — दिगंतरं जाइहि — यास्यति, तदा किअ — किं वम्मह — मन्मथः णत्थि — नास्ति, कि — किंवा नास्ति वसंतः ॥ कांतं देशांतरजिगमिषुं ज्ञात्वा विमनायमानां कांचिन्नायिकां [प्र]ति — यद्यस्मिन्नपि समये कान्तो गमिष्यति तदा तस्य निवारकः कामः वसंतो वा नास्ति किंतु विद्यत एवेति त्वं मा विषीदेति गूढाभिप्रायायाः कस्याश्चित् सख्या वाक्यमेतत् । तारकं निवृत्तम् । (E).

१४४ । यथा । नवा मंजरी गृहीता चूतवृक्षेण परिपुष्पितं किंशुकानां नवं वनमस्ति । यद्यत्र दिगंतरं यास्यति कांतः किं मन्मथो नास्ति किं नास्ति वसंतः ॥ (G).

१४५ । १ धारा (A, B & C). २ पुणो (A, B & C). ३ गुरू काहला कम एहेव पाएण (A), गुरू काहला कम एक्को लघारेण (B & C). ४ कंदु (A), कन्द (B & C). ५ चउ (A & E), चो (F). ६ १५१ (A).

१४५। ध्वजस्तूर्य्यं हारः पुनस्तूर्य्यं हारेण गुरुः काहलः कर्णः एकलकारेण। कवीशेन कला कन्दो जल्पते नागेन अशीतिर्भवति चतुरधा सर्व्वपादेन॥ केचित्तु कईसा कला एकविंशतिः कलाः अर्थात् पादे इत्यर्थमाहुः। ध्वज आदिलघुस्त्रिकलः, तूर्यम् आदि-गुरुत्रिकलं, हारो गुरुः, काहलो लघुः, कर्णो द्विगुरुः, लकारो-लघुः—भवन्ति मात्रा इति शेषः। (C).

१४५। अथ चयोदशाचरचरणवृत्तस्य द्वाशीत्युत्तरषट्शता-धिकचतुःसहस्रतमं ४६८२ भेदं कंदनामकं वृत्तं लचयति, धआ इति। यत्र पूर्वं धआ—ध्वजो लघ्वादिस्त्रिकल इति यावत् ततः तूर—तूर्य्यं गुर्वादिस्त्रिकल इति यावत् हारो—गुरुः उणो—पुनः हारेण—गुरुणा सह तूर—तूर्य्यं गुर्वादिस्त्रिकलः पुरःस्थित-गुरुर्गुर्वादिस्त्रिकल इति यावत् अ—पुनः एक्का तआरेण—एक-तकारेण लब्धं तगणेनेति यावत् गुरू—गुरुः सद्द—शब्दो लघुः पुरस्थिततगणो गुरुर्लघुश्चेति यावत् किज्जे—क्रियते, इदं च क्रियापदं यथायथं योज्यं। यत्र च सव्व पाएण—सर्वपादेन पाद-चतुष्टयेनेति यावत् चउ अग्गला—चतुरधिका असी—अशीतिः कला—मात्राः होइ—भवंति, तत् कईसा—कवीशेन णाएण—नागेन पिंगलेन जंपिअ—जल्पितं कंदु—कंदः॥ तत्कंदनामकं वृत्तमित्यर्थः। अत्र मात्राकथनं पद्यपूरणार्थमिति ध्येयं। गुरु-[लघू]त्तरयगणचतुष्टयेन कंद इति फलितार्थः। (E).

१४५। धआ इति। ध्वजस्तूर्यं हारः पुनस्तूर्यं हारेण सहेति शेषः गरुशब्दो कुरुते एकतकारेण। कवीशेन कलाः कंदुकं जल्पते

देइ[1] भुअंगम अंत लहु[2] तेरह वस पमाण ।
चउरासी चउ पाअ कल कंद छंदु वर जाण ॥
१४६[3] ॥ दोहा ।

जहा, ण रे कंस जाणेहि[1] हो[2] एक[3] बाला इ[4]
मुहे[5] देवई[6] पुत्त तो बंस कालाइ[7] ।
तहा गेण्ह[8] कंसो जणाणंद कंदेण
जहा हंति[9] दिठ्ठो[10] णिआ णारि बिंदेण[11] ॥
१४७[12] ॥ कंदः ।

मागेनाशीतिर्भवति चतुरधिका सर्वपादेन ॥ ध्वजो लघ्वादि-
स्त्रिकलस्तद्वयं गुरुलघू, शल्यो लघुः, तकारस्तगणः । (G).

१४७ । न रे कंस जानीहि अहमेको बाल इति भवामि
देवकीपुत्रस्त्वद्वंशकालः । तथा गृहीतः कंसो जनानन्दकन्देन यथा
हेति दृष्टो निजनारीवृन्देन ॥ हा इति शब्दं कृत्वेति शेषः । (C).

१४७ । कंदमुदाहरति, ण रे इति । रे कंस तो बंस कालाइ
—त्वद्वंशकालः देवई पुत्त—देवकीपुत्रः एक—एकः अद्वितीय-
इति यावत् बाला—बालकः हो—भवामि इति मुहे—मां ण
जाणेहि—न जानासि । इत्युक्तेति शेषः जणाणंद कंदेण—सकल-

१४६ । १ देवि (B). २ लह (C). ३ This śloka is found in MSS. (B & C), but not in the others.—Ed.

१४७ । १ जाणेषो (B), जाणेड (C). २ चउ (A), चर (B), चो (F). ३ एक (A, B & C). ४ बाला (A). ५ मज (A & C), म (B). ६ देवर (E & F). ७ काला (A). ८ गेह (A, B & C), गण्ह (E). ९ चाकि (B), चकि (C). १० दिहो (B & C). ११ हम्देष (E). १२ १४२ (A).

चामर पढमहि पाप गणो[1] धुअ[2]
सल्ल चरण गण ठावहि[3] तं जुअ[4] ।
सोलह[5] कलअ पए पअ[6] जाणिअ
पिंगल पभणइ[7] पंकअ[8]वालिअ[9] ॥ १४८[10] ॥

जीवानंदहेतुना श्रीकृष्णेनेत्यर्थः तथा कंसो — कंसः गण्ठ — गृहीतः यथा णिअ णारि विंदेण — निजनारीवृंदेन हंति — हतः दिट्ठ — दृष्टः ॥ कंदो निवृत्तः । (E).

१४७ । यथा । न भो कंस जानासि भवामि एको बालो-मुख्यो देवकीपुत्रस्तदंग्रकाशः । तथा गृहीतः कंसो जगानंदकंदेन यथा हमिति दृष्टो निजनारीवृंदेन ॥ (G).

१४८ । चामरं प्रथमं पापगणो[णं] ध्रुवं शल्यं चरणं स्थापय तद्युगं । षोडशकलाः पदे पदे ज्ञात्वा पिंगलः प्रभणति पङ्कजावलीं ॥ चामरं गुरुः, पापगणः सर्व्वलघुः पञ्चकलः, ध्रुवो निश्चितः, शल्यं लघुः, चरण आदिगुरुश्चतुष्कलस्तद्युगं तद्द्वयं स्थापयेत्यर्थः । (C).

१४८ । अथ त्रयोदशाक्षरचरणस्य वृत्तस्यैकोनचत्वारिंशोत्तर-[सप्त]शततमं ७०३९ भेदं पंकावलीनामकं वृत्तं लक्षयति, चाम-रेति । पढमहि — प्रथमं चामर — चामरं गुरुं ततः धुव — [ध्रुवं]

१४८ । १ गणा (E & F). २ धुव (F). ३ ठाविअ (A), ठावर (C). ४ जुव (E & F). ५ सोलह (B), सोल (E). ६ पअ पअ (A), पअपअ (E & F). ७ भणइ (B), पभणिअ (E). ८ पंक (B). ९ Last half of the śloka dropt in (C). १० १४४ (A).

अह्वा, सो जण[1] जणमउ[2] सो[3] गुणमंतउ[4]
जे[5] कर पर उबआर[6] हसंतउ[7] ।
जे[5] पुण[8] पर उअआर[9] विरुझ्भउ[10]
ताक[11] जणणि कि ण थक्कउ[12] बंझउ[13] ॥ १४९[14] ॥
पंकावली ।

निश्चितमिति यावत् पापगणं—पंचकलस्याष्टमं भेदं [Vide p. 22].
सर्वलघ्वात्मकमिति यावत् ततः सल—शल्यं लघुमित्यर्थः ततः
चरण गण—चरणगणस्य आदिगुरोर्भगणस्येति यावत् जुब—युगं
ठावहि—स्थापय। इदं च क्रियापदं यथायथं योज्यं। पअ्अपअ—
पादे पादे प्रतिचरणमित्यर्थः यत्रेति शेषः सोलह—षोडश
कलअ—कलास्य जाणिअ—ज्ञायंते, तं—तां पंकअवालिअ—
पंकावलीं तत्पंकावलीनामकं वृत्तमित्यर्थः पिंगल—पिंगलः
पभणइ—प्रभणति ॥ अत्र मात्राकथनं पद्यपूरणार्थमिति मंतव्यं।
भगण-नगण-लघूत्तरजगणद्वय-रचितचरणा पंकावलीति निष्कृष्टो-
ऽर्थः। (E).

१४८। चामेति। चामरं प्रथमं पापगणं ध्रुवं शल्यं चरणगणस्य

१४९। १ जम (A, B & C). २ जणमउ (B), जणमेउ (E & F). ३ स (A, B & C). ४ गुणमणउ (A). ५ जो (B & C). ६ उबआर (A, B & C). ७ हसंतउ (A). ८ पुणु (A), पुण (B & C). ९ उबआर (E & F). १० विरुझउ (C), विरुझ्झह (E), विरुझह (F). ११ ताकि (A), ताह (E), ताह (F). १२ and १३ transposed in (E & F). १२ थाकउ (A), थक्कह (C, E & F). १३ बंझउ (B & C), बझ्झह (E & F). १४ १४६ (A).

स्थापय युगं। षोडशकलं पदे पदे जानीहि पिंगलः प्रभणति पंकावलीकं नाम छंदः॥ चामरो गुरुः, पापगणः पंचलघुः, शल्यं लघुः, चरणो भगणः। (G).

१४८। * * * [त]तः पापगणो ध्रुवं शल्यं चरणगणं प्रापय तं युगं। षोडशकलाः पदे प्रकाशिताः पिंगलः प्रभणति पंकवालीं॥ प्रथमं चामरो गुरुस्ततः पापगणः पंचलघुरूपगणः ध्रुवं निश्चयेन शल्यो लघुश्चरणगणं भगणं तं भगणं युगं प्रापय भगणद्वयं स्थापयेत्यर्थः। षोडशकलाः पदे भवन्ति। पंकवाली छंदसो नाम। (H).

१४९। उदाहरति। स जगति जायतां गुणवान् यः परोपकारं करोति सन्ततं। यः पुनः परोपकारे विरज्यते तस्य जननी किं न तिष्ठति बन्ध्या॥ तिष्ठति भवतीत्यर्थः। (C).

१४९। पंकावलीमुदाहरति, सो जणेति। सो—सः जण—जनः जणमेउ—जातः सजन्मेति यावत्, सः गुणमंतउ—गुणवान्, जे—यः हसंतउ—हसन् सन् पर उवआर—परोपकारं कर—करोति। जे—यः पुनः पर उवआर—परोपकारं विरज्झइ—विरुणद्धि तासू—तस्य जणणि—जननी बंझइ—बंध्येव किं न थक्कइ—तिष्ठति॥ व्यर्थमेव प्रसूयते इत्यर्थः। किंचित् खमित्रं प्रति कस्यचिदुपदेशवाक्यमेतत्। पंकावली निवृत्ता। (E).

१४९। यथा। स जन उत्पद्यतां. स गुणवानुदेतु यः करोति [परो]पकारं हसन्। यः पुनः परोपकारं विरुध्यते, तस्य जननी किं न बंध्येव तिष्ठति॥ (G).

१४९। उदाहरणमाह। सो जण इत्यादि। स जगति जन्म

कण्णो पइज्ज[1] पढमे[2] अअणो[3] अ बीए[4]
अंते तुरंग सगणो[5] जअ[6] जत्थ[7] पाए ।
उत्ता बसंततिलआ फणिणा[8] उकिट्ठा[9]
छेआ पठंति[10] सरसा[11] सुकइंद[12] दिट्ठा[13] ॥ १५०[14] ।

---

दृष्टान्तु यः पुण्यवान् सति सामर्थ्ये करोति परोपकारं । ये पुनः परोपकारविरतास्तेषां जनन्यः किमिति न स्थिता वंध्याः ॥ (H).

१५० । अथ चतुर्द्दशाक्षरा । तत्र वसन्ततिलकं । कण्णो । कर्णः स्थाप्यते प्रथमं जगणो द्वितीये तृतीये च द्वौ सगणौ जगणश्च पादे । उक्तं वसन्ततिलकं फणिना उत्कृष्टं छेकाः पठन्ति सरसाः सुकवीन्द्रदृष्टाः ॥ तुरङ्गे सगणा इति पाठे तुरङ्गोऽन्तगुरुस्तत्त्वकः । छेका विदग्धाः । (C).

१५० । अथ चतुर्द्दशाक्षरचरणस्य वृत्तस्य चतुरशीत्यधिकशत-त्रयोत्तरषोडशसहस्रं भेदा भवंति, तत्रैक[च त्वयः]त्रिंशोत्तर[व]-शताधिकद्विसहस्रतमं भेदं [२९३३] वसंततिलकानामकं वृत्तं लक्ष-यति, कण्णविति । पढमे — प्रथमे स्थाने कण्णो — कर्णः गुरुद्वयात्मको-गण इति यावत् अ — च पुनः बीए — द्वितीये स्थाने अअणो —

---

१५० । १ ठविज्ज (E). २ पढमो (A). ३ जगणो (A & C). ४ ठविज्जए (A). ५ सगणा (B & C). ६ सच (A), जम (B), पच (E). ७ जच्छ (A), जत्थ (B & C). ८ फणिराउ (A). ९ दिठ्ठा (A), उकिट्ठा (B & C). १० पठन्ति (A & C). ११ परसा (F). १२ सुकइंद (A). १३ दिट्ठा (B & C). १४ १४९ (A).

जगणो मध्यगुरुगणः, अंते — जगणांते तुरंग — तुरंगश्चतुर्मात्रकः सगण इति यावत्, ततश्च सगणो — पुनः सगण एवं गुर्वंत इति यावत् । क्वचित्तु दुअम्मि सगणो इति पाठस्तत्र दु[अ]म्मि सगणो — सगणद्वयमपि गुर्वंतगणद्वयमिति यावदित्यर्थः कर्त्तव्यः, अवहट्ट-भाषायां पूर्वापरव्यत्यासे दोषाभावात् अ — च पुनः पाअ गणो — लघ्वादिर्गण इत्यर्थः जत्थ — यत्र पाए — पादे ठविज्ज — स्थाप्यत-इति यथायथं योज्यताम् । फणिणा — पिंगलेन उत्ता — उक्तां उक्किट्ठा — उत्कृष्टां सु कइंद दिट्ठा — सुतरां कवींद्रदृष्टां सरसा — प्रेमाविष्टाः छेआ — विदग्धाः वसंततिलआ — वसंततिलकां पठंति ॥ तगण-भगण-गुरुद्वयोत्तरय[ज]गणद्वय-रचितचरणा वसंततिलकेति फलितार्थः । (E).

१५० । अथ चतुर्द्दशाक्षरा शर्करी । कणो इति । कर्णः पतितः प्रथमे जगणश्च द्वितीये अंते तुरगः सगणो यश्च यत्र पादे । उक्तां वसंततिलकां फणिनोत्कृष्टां छेकाः पठंति सरसाः सुकवींद्रदृष्टां ॥ कर्णो द्विगुरुः, तुरंगश्चतुर्मात्रकः सगणः, यः यगणः । (G).

१५० । चतुर्द्दशाक्षरप्रस्तारस्य कानिचिच्छंदांसि वदति । कणो इत्यादि । कर्णः प्राप्तः प्रथमः जगणो द्वितीयेऽन्ते तुरङ्गसगणौ यस्य तत्र पादे । उक्ता वसन्ततिलका फणिना उत्कृष्टा छेकाः पठन्ति सरसाः सुकवीन्द्रदृष्टा ॥ कर्णो गुरुयुग्मगणः प्राप्तः प्रथमो-जगणो द्वितीये अन्ते एतदन्ते तुरगसगणौ, यद्यपि गअ रह तुरंग पाइक्क एक्क णामेण जाण चउमत्ता [Vide श्लोक १०, p. 30.—Ed.] इत्यनेन तथाप्यत्र सगणसाहचर्य्यात्तुरंगः सगणः, सगणद्वयानंतरं

अथा, जे तीअ तिक्ख[1] चल चक्खु ति हाव दिठ्ठा[2]
ते काम चंद महु पंचम[3] मारणिज्जा[4] ।
जेसुं उणो णिवडिदा[5] सअला वि दिठ्ठी
चिट्ठंति[6] ते तिल जलंजलि[7] दाण जोग्गा ॥१५१[8]॥
वसंततिलका[9] ।

---

यगण आदिलघुः पञ्चकलगणः, छेका विदग्धाः । चरणान्तलघुनापि वसन्ततिलका भवति । तदुक्तं छंदःपारिजाते । उक्ता वसन्ततिलका तभजा जगौ गः सिंहोन्नतेयमुदिता मुनिकाश्यपेन । अन्तस्थितेन लघुनापि विनोदभूमिरेषा भवेल्ललितबंधनिबंधनेन ॥ अस्य छंदसो नानामुनिभिर्नानानामान्युक्तानि । तथा छंदःसिद्धांतभास्करे । उक्ता वसंततिलका तभजा जगौ गः सिंहोन्नतेय[मुदिता] मुनिकाश्यपेन । उद्धर्षिणीति मुनिसैतवमभ्यतेयं गार्गेण सैव गदिता मधुमाधवीति ॥ (H).

१५१ । ये तस्यास्तीक्ष्णचलचक्षुस्त्रिभागदृष्टास्ते कामचन्द्रमधुपञ्चममारणीयाः । येषु पुनर्निपतिता सकलापि दृष्टिर्वर्त्तन्ते ते तिलजलाञ्जलिदानयोग्याः । तिलेत्यादिना मृता एव प्रत्याय्यन्ते । (C).

---

१५१ । १ तिक्ख (B), तिक्ख (C). २ तिहाव दिट्ठा (A), ति भाव दिट्ठा (B), ति चाव दिट्ठा (C). ३ Dropt in (B). ४ मारणीज्जा (A). ५ णिणिडिदा (E), णिवडिदा (F). ६ चट्ठंति (A, B & C). ७ जलाञ्जलि (C), जलंजली (E). ८ १४० (A). ९ वसन्ततिलका (B & C).

संभणिअ[१] चरण गण पलिअ मुद्दो[२]
संठविअ पुणवि[३] दिअवर जुअलो।
जं[४] करअल गण[५] पअ[६] पअ मुणिओ
चक्कपअ पभण[७] फणिवइ[८] भणिओ ॥ १५२[९] ॥

१५१। वसंततिलकामुदाहरति। [जे—]ये लोकाः तीम—तस्याः तिक्ख चल चक्खु ति हाव दिट्ठा—तीक्ष्णचलचक्षुस्त्रिभागदृष्टाः, ते काम चंद मळ पचम मारणिज्जा कामचंद्रमधुपंचममारणीया जाता इति शेषः। जेसु—येषु उणो—पुनः तस्याः [स]अला वि दिट्ठी—सकलापि दृष्टिः णिवडिआ—निपतिता, ते तिल जलांजलि दाण जोग्गा—तिलजलांजलिदानयोग्याः चिट्ठंति—तिष्ठंति॥ कर्पूरमंजरीनाटकस्य कर्पूरमंजरीवर्णनपरं विदूषकं प्रति राज्ञो वाक्यमेतत्। वसंततिलका निवृत्ता। (E).

१५१। यथा। ये तया तीक्ष्णचलचक्षुस्त्रिभागदृष्टास्ते कामचंद्रमधुपंचममारणीयाः। येषु पुनर्निपतिता सकलापि दृष्टिस्तिष्ठंति ते तिलजलांजलिदानयोग्याः॥ (G).

१५२। उदाहरणमाह। जे तीअ इत्यादि। ये तस्यास्तीक्ष्णचलचक्षुस्त्रिभागदृष्टास्ते कामचंद्रमधुपञ्चममारणीयाः। येषु पुन-

१५१। १ संतभणिय (A), संतंभणिय (B). २ पचलिय सुद्दो (B). ३ पुणुवि (B & C). ४ जं (A, B & C). ५ करच गमच (A), करतल गण (E). ६ पर (B & C). ७ चक्क पभण (A), चक्कपअर भणु (B & C), चक्कपअच भणु (F). ८ फणिवइ वर (A). ९ १७८ (A).

र्निपतिता यकणापि दृष्टिर्वर्तन्ते ते तिलजलाञ्जलिदानयोग्याः ॥ कर्पूरमञ्जरीनाटके राज्ञो वचनम् । (H).

१५२ । सम्भालय चरणगणः पतितो मुखे संस्थाप्य पुनर्द्विजवर-युगलं । तं करतलगण पदे स्थापयित्वा ज्ञातः चक्रपदो भण्यतां फणिपतिभणितः ॥ चरण आदिगुरुश्चतुष्कलः, करतलगणोऽन्तगुरु-श्चतुष्कलः । (C).

१५२ । अथ चतुर्द्दशाक्षरचरणस्य वृत्तस्यैक[नवत्यन्तरैक]शताधि-काष्टसहस्रतम ८१९१ भेदं चक्रपदनामकं वृत्त लक्षयति, संभणिअ इति । मुहो — मुखे प्रथममिति यावत् पलिअ — पतितं चरणगणं गुर्वादिभगणमित्यर्थः सभणिअ — सभण्य, पुणवि — पुनरपि दिअ-वर जुअलो — द्विजवरयुगलं चतुर्लघ्वात्मकगणद्वयमिति यावत् संठ-विअ — सस्थाप्य । ज — यत्र पअ पअ — पादे पादे प्रतिचरण-मिति यावत् करअल गण — करतलगणः गुर्वंतः सगण इति यावत् मुणिओ — ज्ञातः, तत् फणिवइ भणिओ — फणिपतिभणितं चक्क-पअ — चक्रपद प्रभण ॥ (E).

१५२ । संभेति । संभण्य चरणगणं पतित मुखे संस्थाप्य पुनरपि द्विजवरयुगलं । यत्र करतलगणः पदे पदे च ज्ञातः चक्रपदं भण फणिपतिभणित ॥ चरणो गुर्वादिर्भगणः, द्विजवरश्चतुर्लघुः, करतलः सगणः । (H).

१५२ । संभणिअ इत्यादि । संभणितश्चरणगणः पतितो मुखे संस्थापय पुनरपि द्विजवरयुगलं । ततः करतलगणः पदतले ज्ञायते चक्रपदं शृणु फणिपतिभणितं ॥ चरणगणो भगणः, मुखे आदौ,

जहा, खंजण जुअल णअण बर उपमा
चारु कणअ लइ भुअजुअ सुसमा[१] ।
फुल्ल कमल मुहि गअ[२]बर गमणी
कस्स[३] सुकिअ[४] फल बिहि[५] गठु[६] तरुणी[७] ॥ १५३[८] ॥

चक्रपदम्[९] ।

पतितः संभणितः, पुनरपि द्विजवरयुगलं संस्थापय, द्विजवरश्चतु-र्लघुगणस्तयोर्युगलमष्ट लघव इत्यर्थः, ततः करतलगणः सगणः पद-तले चरणे ज्ञातः, तलशब्दः स्वरूपवाचकः, फणिपतिभणितं त्वं शृणु इत्यन्वयः । (B).

१५३ । उदाहरति । खञ्जनयुगल नयनवरस्य उपमा चारु कनकं नीता भुजयुगस्य सुषमा । फुल्लकमलमुखी गजवरगमनी कस्य सुकृतस्य फल धात्रा घटिता रमणी ॥ (C).

१५३ । चक्रपदमुदाहरति, खजणेति । अथावहट्टभाषायां पूर्व-निपातानियमात् उपमा शब्दस्य पूर्वनिपात कृत्वा योजनीयं, तथाच खंजनजु[यु]गलोपमनयनवरा खञ्जनयुगलस्य उपमा ययोः तादृशे अपि नयने ताभ्यां वरा रमणीयेत्यर्थः, चारु कणअ लइ भुअजुअ सु[सु]समा — चारुकनकलताभुजयुगसुषमा चार्व्वी कनकलताया-इव भुजयुगस्य सुषमा यस्यास्तादृशीत्यर्थः, फुल्ल कमल मुहि —

---

१५३ । १ सुसमा (E). dropt in (F). २ Dropt in (B). ३ तुम्ह (A), तुं (B). ४ सुकिअ (E). ५ विह (A). ६ गढ (F). ७ रमणी (A, B & C). ८ १४९ (A). ९ चक्रपाद (C).

कर पंच पसिद्ध[1] विलद्ध[2]वरं रश्रणं[3]
पभणंति[4] मणोहर छंदवरं रश्रणं ।
गुरु पंच दहा लहु एरिसिश्रं[5] रइश्रं[6]
भमरावलि छंद पसिद्ध किश्रं ठविश्रं[7] ॥ १५४[8] ॥

---

फुल्लकमलमुखी गश्रवर गमणी — गजवरगमना रमणी ललना कस्स सु[सु]किश्र फल — कस्य सुकृतफलेन विधिना गठु — सृष्टा ॥ एतादृशी कांता कान्तिभाविता कस्य पुण्येन ब्रह्मणेयं निर्मितेत्यर्थः । षट्कपदं निवृत्तं । (E).

१५३ । यथा । अवहट्टभाषायां पूर्वनिपातादिनियमाभावात् यथोचिता योजना कार्या सर्वत्रेति बोध्यं । खंजनयुगलनयनवरोपमा चारुकनकलताभुजयुगसुषमा । फुल्लकमलमुखी गजवरगमना कस्य सुकृतफलेन विधिना निर्मिता तरुणी ॥ (G).

१५३ । उदाहरणमाह, खंजण इत्यादि । खंजनयुगलनयनवरोपमा चारुकनकलताभुजयुगसुषमा । फुल्लकमलमुखी गजवरगमना कस्य सुकृतफलेन विधिना निर्मिता रमणी ॥ खंजनयुगलेन नयनवरयोरुपमा यस्याः सा, चारुकनकलतावद्भुजयुगस्य परमा शोभा यस्याः सा । चतुर्दशाक्षरप्रस्तारस्य चतुरधिकाशीतिशतत्रयं षोडशसहस्रं भेदास्तेषु भेदद्वयमुक्तं, शेषभेदाः स्वयं ज्ञेयाः । (H).

---

१५४ । १ सिद्ध (F). २ तिलद्ध (A & B), सुलद्ध (C). ३ रश्रणं (A). ४ पभणंत (A). ५ एरिसिह (A). ६ रइश्रं (A), रचिश्रं (B & C), dropt in (E). ७ ठइश्रं (E). ८ १५० (A).

१५४। अथ पञ्चदशाक्षरा यथा। करपञ्चकं प्रसिद्धं सुलक्ष्यवरं रत्नं प्रभणन्ति मनोहरच्छन्दोवरं रमणं। गुरवः पञ्च दश लघवः एतादृशं लब्धं भ्रम[रा]वलीच्छन्दः प्रसिद्धौक्षतं स्थापितं॥ करो-ऽन्तगुरुस्तत्पञ्चकः। (C).

१५४। अथ पंचदशाक्षरचरणस्याष्टषष्ठ्युत्तरसप्तशताधिकद्वात्रिंश-त्सहस्रं ३२७६८ भेदा भवंति, तत्र चय[चतु]श्चत्वारिंशोत्तरचतुर्दश-सहस्रतमं [१४०४४] भेदं भ्रमरावलीनामकं वृत्तं लक्षयति। पच पसिद्ध — प्रसिद्धैः पंच — पंचभिः कर — करैः गुर्वंतसगणैरिति यावत् विलद्ध वरं — विलद्ध[ब्ध]वरमतिरमणीयमिति यावत् रअणं — रचनं किअं — कृतं, गुरु पंच — पंच गुरवः दहा लहु — दश लघवः पसिद्ध — प्रसिद्धास्तत् मणोहर — मनोहरं छंदवर — छन्दः-श्रेष्ठं रअणं — रत्नं रत्नप्रायमिति यावत् रइअं — रचितं ठइअं — स्थापितं पिंगलेनेति भावः, एरिसिअं — एतादृशं भमरावलि छंद — भ्रमरावलीच्छन्दः पभणंति — प्रभणंति पण्डिता इति शेषः॥ अत्र छन्दोविशेषणं भिन्नतया लघुगुरुकथनं च पद्यपूरणार्थमिति मंतव्यं, सगणपंचक-रचितचरणा भ्रमरावलीति फलितार्थः। (E).

१५४। अथ पंचदशाक्षरातिशर्करी॥ करेति। करैः पंचभिः प्रसिद्धैरतिरमणीयरचनं प्रभणंति मनोहरं छंदोवरं रत्नं। गुरवः पंच दश लघवः ईदृश रचित भ्रमरावलिच्छंदः प्रसिद्धमतं स्थापित॥ करः सगणः। (G)

१५४। पंचदशाक्षरप्रस्तारस्य कानिचिच्छंदांसि वदति। कर पंचेत्यादि। कराः पञ्च प्रसिद्धाः, तिलार्द्धेन दर वचनं प्रभणन्ति

जहा, तुश्र देव[1] दुरित्त गणा हरणा चरणा[2]
जइ पावउ[3] चंदकलाभरणा सरणा ।
परिपूजउ[4] तेज्जिश्र[5] लोभमणा[6] भवणा[7]
सुख दे मह[8] सोक[9] विणास[10] मणा समणा ॥
१५५[11] ॥ भ्रमरावली ।

मणोहरं छंदोवरं रत्नं । गुरवः पंच द्रश लघव एतादृशं लपितं भ्रमरावलीच्छंदः प्रसिद्धं कृत्वा स्थापितं ॥ कराः सगणाः पंच प्रसिद्धास्तिलार्द्धेन अतिशीघ्रतया उत्कृष्टं वचनं यस्य छंदस उच्चारण-मित्यर्थः, भ्रमरावलीति छंदः प्रभणन्ति । (H).

१५५ । उदाहरति । तव देव दुरितगणहरणौ चरणौ यदि प्राप्येते हे चन्द्रकलाभरण शरण । तदा पूज्येते त्यक्ता लोभमनो-भ्रमणं सुखं प्रेर्य्यते लोकविनाशमनाः शमनः ॥ लोभयुक्तस्य मनसो-भ्रमणं लोभमनोभ्रमणं, प्रेर्य्यतेऽवकीर्य्यते । (C).

१५५ । भ्रमरावलीमुदाहरति, तुश्र देवेति । हे चन्द्रकला-भरण देव दुरित्त गणा हरणा — दुरितगणहरणौ तुश्र — तव चरणौ जइ — यदि सरणा — शरणे पावउ — प्राप्नोमि, तदो[दा]

१५५ । १ तुश्र देश (A), तुह देव (C), तुश्र देव (F) २ Dropt in (E). ३ पावउ (A). ४ परिपूजउं (A), परिपुज्जउ (C), परिपूज्जउ (F). ५ तेज्जिश्र (A), dropt in (B). ६ लोभमणा (B). ७ भमणा (A), dropt in (C & F). ८ सुख देउ (A), सुख देहि (B & C), सुख दे मह (E). ९ लोक (A & C), लो (B). १० Dropt in (B). ११ १५६ (A).

कला दिज्जा सत्ता अंते एक्का[1] हारा[2] माणीआ[3]
पक्खाराहा[4] हारा सारंगिक्का[5] छंदा जाणीआ।[6]
तीसा मत्ता पाए पत्ता[7] भोई राआ जंपंता
छंदा[8] किज्जे[9] कित्ती लिज्जे[10] सूणी मंथा[11] कंपंता॥
१५६[12]॥

[लो]भमणा — लोभे मनः भवणा — भवनं च तेज्जिअ — त्यक्त्वा परिपूजउ — परिपूजयामि, हे सोक विणास मणा — त्रिभुवनतल-वर्त्तियावज्जीवशोकनिवारणमना इत्यर्थः, हे समणा — हे शमन मह — मह्यं सुख — सुखं त्वच्चरणाराधनोद्भूतनित्यानंदमिति यावत् दे — देहि॥ कस्यचिद्भक्तस्य महादेवप्रार्थनावाक्यमेतत्। भ्रमरावली निवृत्ता। (E).

१५५। यथा। तव देव दुरितगणहरचरणौ यदि प्राप्नोमि चंद्रकलाभरण शरण। पूजयामि त्यक्त्वा लोभे मनो भवनं सुखं देहि मम शोकविनाशमनःशमन॥ (G).

१५५। उदाहरणमाह, तुम्ह देव इत्यादि। तव देव दुरित-गणहरणौ चरणौ यदि प्राप्नोमि चन्द्रकलाभरण शरणं। परि-पूजयामि त्यक्त्वा लोभे मनो भवनं सुखेन प्रेरयामि शोकविनाश-

१५६। १ एक्का (C). २ धरा (B) ३ पाई (A) जाणौ (B). ४ पक्खा-राणौ (F). ५ सारंगिक्का (C). ६ द्वितीयः पादः dropt in (B) ७ पाएं पाएं (A), पत्ता dropt in (B). ८ चो छंदा (A). चोपच्छाआ (B & C). ९ किज्जे (A). १० Non est (B & C). ११ मत्था (A), मत्ता (B & C). १२ १५९ (A).

ममसं गमनं ॥ हे देव तव चरणौ यदि शरणं प्राप्नोमि, तदा लोभे मनो भवनं त्यक्त्वा त्वां परिपूजयामि, सुखेन प्रेरयामि दूरे चिपामीत्यर्थः, गमनं यमं, चरणौ कीदृशौ चंद्रकलाभरणौ इत्यनेन नखाश्चन्द्रकलावद्वर्णिताः । (H).

१५६ । कर्णगणाः सप्त अन्ते एको हारः पादे पादे पञ्चदश वर्णाः सारङ्गिकाच्छन्दो गीयते । त्रिंशन्मात्राः पादे युक्ताः भोगिराजो जल्पति पादाः क्रियन्ते कीर्त्तिर्गृह्यते सर्व्वेषां मस्तकं कम्प्यते ॥ एतादृशं गीयत इति भोगिराजो जल्पति, चत्वारः पादाः, तेन कीर्त्तिर्गृह्यते, सुखातिशयात् सर्व्वेषां शिरःकम्पो भवति । (C).

१५६ । अथ पंचदशाक्षरचरणस्य वृत्तस्य प्रथमं भेदं सारंगिकानामकं वृत्तं लक्षयति, कलेति । सत्ता कला—सप्त कर्णाः गुरुद्वयात्मका गणा इति यावत् दिज्जा—दीयंते दत्ता दत्त्वा वेत्यर्थः, अंते—सप्तकर्णांते एक्का हारा—एको हारः गुरुरित्यर्थः माणीआ—मान्यते, एवंप्रकारेण यत्र पाए—पादे पंचाराहा—पंचदश हारा—गुरवः मत्ता—मात्रास्र तीसा—त्रिंशत् पत्ता—प्राप्ताः आणीआ—आयंते, यत्र सूणी—श्रुत्वा मंथा—मस्तकं कंपंता—कंपते श्लाघत इति भावः, तत् सारंगिक्का छंदा—सारंगिकाच्छन्दः इति भोई राआ—भोगिराजः पिंगलः जंपंता—जल्पति, किं च एतत् छंदा—छंदः किज्जे—क्रियते कित्ती—कीर्त्तिः लिज्जे—गृह्यते ॥ अत्र मात्राकथनं चतुर्थचरणस्य पद्यपूरणार्थमिति ध्येयं, पंचदशगुरुरचितचरणा सारंगिकेति निष्कृष्टोऽर्थः । (E).

जहा, मत्ता जोहा वठ्ठे[1] कोहा[2] अप्पा अप्पी[3] गव्वीआ
रोसारत्ता सव्वा गत्ता[4] सल्ला[5] भल्ला उठ्ठीआ[6] ।
हत्थी[7] जूहा[8] सज्जा हूआ पाए भूमी कंपंता
लेही देही[9] छड्डो[10] ओड्डो[11] सव्वा सूरा जंपंता ॥
१५७[12] ॥ सारंगिका ।

१५६ । कस्येति । कर्णा दीयंते सप्तांते एको हारो रमणीयः पंचदशापि हाराः सारंगिकाच्छंदो जायते । चिंशन्मात्राः पादे प्राप्ताः भोगिराजो जल्पति, छंदः क्रियते, कीर्त्तिर्गृह्यते, श्रुत्वा मस्तकं कंपते ॥ कर्णो द्विगुरुः । (G)

१५६ । कस्मा दिस्मा इत्यादि । कर्णाः सप्त दत्ता अन्ते एको-हारो ज्ञायते पंचदश हाराः सेर * * * । (H).

१५७ । उदाहरति । मत्ता योधा उत्थिताः क्रोधादात्मना गर्व्वायमाणा रोषारक्ताः सर्व्वं गत्वा शल्यं भल्लम् उत्थापयन्ति । हस्तियूथाः सज्जीभूताः पादेन भूमिं कम्पयन्ति गृहाण देहि त्यज उत्तिष्ठ सर्व्वे शूरा जल्पन्ति ॥ (C).

१५७ । सारंगिकामुदाहरति । मत्ता — उन्मत्ताः अप्पा अप्पी गव्वीआ — अहमहमिकया गर्विताः वठ्ठे कोहा — वर्द्धितक्रोधाः

१५७ । १ दिढ्ढे (A), उट्ठे (B), उट्ठे (C). २ कोवा (C). ३ अप्पे (A). ४ आणा (B). ५ सेला (A, B & C). ६ उच्चीआ (B & C). ७ हत्थो (A). ८ जूथा (B & C). ९ Drops in (C). १० छड्डो (B), च्छड्डो (C). ११ ओड्डो (B), उड्डो (C). १२ १५३ (A).

चामरस्स[1] बीस[2] मत्त तीणि[3] मत्त अग्गला
अट्ठ[4] हार सत्त सार ठाइ ठाइ णिम्मला ।
आइ अंत हार[5] सार[6] कामिणी मुणिज्जए[7]
अक्खरा दहाइ पंच पिंगले भणिज्जए ॥ १५८[8] ॥

रोषारत्ता सव्वा गत्ता—रोषारक्तसर्वगात्राः जोहा—योद्धारः जाताः, सल्ला—शल्यानि भल्लाश्च आयुधविशेषाः उट्ठीआ—उत्थिताः । हत्थी जूहा—हस्तियूथानि सज्जा—सज्जितानि जाताः—जातानि, तेषां पाए—पादैः भूमी—भूमिः कंपंता—कंपिता, लेही—गृहाण देही—दे[हि] कड्डो—त्यज ओड्डो—प्रतीच्छध्व-मिति सव्वा सूरा—सर्वे शूराः जंपंता—जल्पंति यत्र संग्रामे इति शेषः यथायथं योजनीयः ॥ सारंगिका निवृत्ता । (E).

१५७ । यथा । मत्ता योधा वृद्धकोपा अहमहमिकया गर्विताः रोषारक्तसर्वगात्राः शल्यानि भल्लाश्चोत्थिताः । हस्तियूथानि सज्जीभूतानि पादैर्भूमिः कंप्यते, गृहाण देहि त्यज प्रतीच्छध्वं सर्वे शूराः जल्पंति इति यत्रेति शेषः ॥ (G).

१५८ । चामरस्य विंशतिर्मात्राः त्रिमात्रायाः, अष्टौ हाराः सप्त शराः स्थाने स्थाने निर्मलाः । आदावन्ते हारः शरः कामिनि ज्ञायताम् अक्षराणि दश पंच पिङ्गलेन भण्यते ॥ त्रिमात्रायास्त्रिमात्राधिकाः, हारा गुरवः, शरा लघवः, आदावन्त इति यथासंख्यमिति । (C).

१५८ । १ चामरस्स (A). २ बीस (A). ३ तिणि (A). ४ चाइ (B & C). ५ हाव (B & C). ६ साव (B & C). ७ सुणिज्जए (A). ८ १५७ (A).

जहा, झत्ति ओह[१] सज्ज होइ गज्ज बज्ज तं खणा
　　रोस रत्त सब्ब गत्त हक्क दिज्ज[२] भीसणा ।
　　धाइ आइ खग्ग पाइ दाणबा चलंतआ[३]
　　बीर पाअ णाअराअ[४] कंप भूतलंतगा[५] ॥ १५९[६] ॥
चामरं ।

१५८ । अथ पंचदशाक्षरचरणस्य वृत्तस्यैक[स्य चयो]विंशत्युत्तर-नवशताधिकद्वशसहस्रतमं [१०९२३] भेदं चामरनामकं वृत्तं लक्षयति, चामरस्येति । हे कामिनि ठाइ ठाइ — स्थाने स्थाने अंतरेति यावत् णिम्मला — निर्मलाः अट्ठ हार — अष्टौ हारा गुरवः सत्त सा[र] — सप्त सारा लघवः, एवंप्रकारेण दहाइ पंच — दशपंच पंचदशेत्यर्थः अक्खरा — अक्षराणि तीणि मत्त अग्गला — त्रिमात्राधिकाः बीस मत्त — विंशतिर्मात्राश्च चामरस्स — चामरस्य चामराख्यवृत्तस्येति यावत् पादे पतंतीति शेषः, आइ अंत — आद्यंतयोः पादाद्यंतयो-रित्यर्थः हारो गुरुः सारः श्रेष्ठः मुणिज्जए — मन्यते, पादादौ अंते च गुरुर्देय इति भावः, इति पिंगले भणिज्जए — पिंगलेन भण्यते ॥ अयमाशयः — प्रथमं गुरुस्तदनंतरं लघुः पुनः गुरुः पुनस्तदनंतरं लघुरेवंप्रकारेण पंचदशा[क्षरा]णि कर्त्तव्यानि, तथाच रगण-जगण-रगण-जगण-रगण-रचितचरणं चामरमिति फलितार्थः । (E).

१५८ । चामरेति । चामरस्य विंशतिर्मात्राः त्रिमात्राधिकाः

१५९ । १ ओघ (C). २ दिज्जु (A). ३ चलंतओ (A, B & C). ४ राअ (B), राय (F). ५ भूतलं तओ (A, B & C). ६ १५५ (A).

हार[1] धरु[2] तिम्मि[3] सरु[4] ठिव्वि[5] परि तिग्गणा
पंच गुरु दुस लहु अंत कार[6] रग्गणा ।
एत्थ[7] सहि चंदमुहि बीस लहु[8] आणआ[9]
कव्वबर[10] सप्प भण छंद णिसिपालआ ॥१६०[11]॥

---

अष्टौ हाराः सप्त साराः स्थाने स्थाने निर्मलाः । आदावंते हार-सारं कामिनि ज्ञायंते अक्षराणि दशपंच पिंगलेन भण्यते ॥ चाम-रेति छंदः, कामिनीति संबुद्धिः, हारो गुरुः, सारो लघुः । (G).

१५९ । उदाहरति । झटिति योधाः सज्जीभवन्ति गजो-बध्यते तत्क्षणात्, रोषरक्तं सर्व्वगात्रं घोषणा दीयते भीषणा । धावित्वागत्य खड्गपाणयो दानवास्खलन्ति वीरपदैर्नागराजः कम्पते भूस्खलति ॥ ढक्कशब्द उच्चैर्घुष्टवाची देशी । (C).

१५९ । चामरमुदाहरति. झत्तीति । तं खणा — त[त्]क्षणे बज्ज — वाद्यानि डिंडिमप्रभृतीनि गज्ज — गर्ज्जंति, * * * ढक्क — ढक्का सिंहनादमिति यावत् दिज्ज — ददति, चलंतओ — चलंति च, वीर पाअ — वीरपादैः भूतलंतगा — भूतलांतर्गतः णाअराअ — नागराजः शेषः कंप — कंपतेऽतः हे जोह — हे योधाः झत्ति — झटिति सज्ज — सज्जिताः कृतसन्नाहा इत्यर्थः होह — भवत ॥

---

१६० । १ हार (A, B & C). २ धर (A), कध (B & C). ३ तिम (C). ४ घर (A). ५ ठप (A), रस (B & C). ६ कर (A, B & C). ७ एथ (A) ८ Dropt in (A). ९ मलणा (A), मावणा (B). १० कब्बसब (A & C), dropt up to छंद inclusive in (B). ११ १५६ (A).

दैत्यसेनाजयाय प्रस्थितस्य शक्रस्य देवान् प्रति वाक्यमेतत्। चामरं निवृत्तम्। (E).

१५९। यथा। झटिति योधाः सज्जीभवत गर्जंति वाद्यानि तूर्णं रोषरक्तसर्वगात्राः ढक्का दीयते भीषणा। धावित्वागत्य खड्गपातैर्दानवास्त्रुटंति वीरपादैर्नागराजः कंपते भूतलांतर्गतः॥ ढक्केति शब्दविशेषे देशी। (G).

१६०। हारः स्थाप्यतां त्रयः शराः एवंप्रकारेण त्रयो गणाः पंच गुरवः * * अन्ते क्रियतां रगणः। अत्र सखि चन्द्रमुखि विंशतिर्लघव आनीताः काव्यमनाः सर्पो भणति छन्दो निशिपालकं। पादे पञ्च गुरवः तद्द्विगुणा दश लघवः, पञ्चगुर्व्वादिकं कथं स्यादत्र उक्तं रगण इति। विंशतिर्लघव इत्यत्र लघुशब्दो-मात्रावाची, काव्ये मनो यस्य स काव्यमनाः, सर्पः पिङ्गलः। (C).

१६०। अथ पंचदशाचरचरणस्य [वृत्तस्य] पंचदशोत्तरनवशता-धिकैकादश [पंचदशोत्तरद्वादश] [१२०१५] सहस्रतमं भेदं निशि-पालनामकं वृत्तं लक्षयति, हार्विति। हारु—हारः गुरुरित्यर्थः तिखि सरु—त्रयः शरा लघव इत्यर्थः ठित्थि परि—अनया परि-पाट्या तिग्गणा—त्रिगणान् धरु—स्थापय त्रीन् गुर्वादीन् पंच-कलान् गणान् स्थापयेत्यर्थः, [अं]ते गणत्रयांते रग्गणा—रगणं मध्यलघुं गणमित्यर्थः करु—कुरु, एवंप्रकारेण यत्र पदे इति शेषः पंच गुरु—पंच गुरवः दश लहु—द्विगुणिता लघवः पंच द्विगु-णिता दश लघव इति भावः बीस लहु—विंशतिर्लघवः मात्रा इति यावत् आणआ—आनीताः आनीयंते वा, हे चंदमुहि सहि—

जहा, जुज्झ[1] भट[2] भूमि पड[3] उट्ठि पुणु[4] लग्गिआ
सग्ग मण खग्ग हण कोइ[5] णहि भग्गिआ।
बीस सर[6] तिक्ख कर[7] कस गुण अप्पिआ[8]
पत्थ तह जोलि[9] दह चाउ सह[10] कप्पिआ[11] ॥
१६१[12] ॥ निशिपालः[13]।

---

हे चन्द्रमुखि सखि एत्थ — एतत् णिसिपालआ — निशिपालकं छंदः इति कव्वबर — काव्यवरः काव्ये लोकोत्तरवर्णनानिपुणे कविकर्मणि वरः श्रेष्ठ इत्यर्थः सप्प — सर्पः पिंगलः भण — भणति ॥ अत्र पृथक्तया गुरुलघुकथनं मात्राकथनं च पद्यपूरणाय। भगण-जगण-सगण-नगण-रगण-रचितचरणं निशिपालनामकं वृत्तमिति फलितार्थं इति ध्येयं। (E).

१६०। हारिति। हारः स्तायस्त्रयो लघव एवंप्रकारेण त्रिगणाः पंचगुरवो द्विगुणा लघवः अंते कुरु रगणं। एवं सखि चंद्रमुखि विंशतिर्लघवः आनीयंते काव्यवरः सर्पो भणति निशिपालकम् ॥ हारो गुरुः, विंशतिर्लघव इति अत्र लघुशब्दो मात्रावाची। (G).

१६१। उदाहरति। युद्धे भटा भूमौ पतिताः पुनरुत्थाय लग्नाः स्वर्गमनसः खड्गेन हताः क्रोधः नहि भग्नः ; विंशतिशरास्तीक्ष्णीकृताः

---

१६१। १ जुज्झ (B & C). २ भड (A & C), भट (B). ३ पड (A, B & C). ४ पुणु उट्ठि (A), पुणि उट्ठि (B & C) ५ Dropt up to the end of the sloka in (B). कोवि (C). ६ सब (A). ७ कर (A), कर (C). ८ अप्पिआ (A & C). ९ जोलु (A), जोल (C). १० ठाप सब (A), चार सब (C), चाउ सबह (E). ११ कंपिआ (A & C). १२ १८० (A). १३ णिसिपाल (C).

जहि[1] आइ[2] हत्थ[3] णरेंद[4] बिसबि[5] दिज्जिआ[6]
गुरु एक काहल बेबि अंतह[7] किज्जिआ[8] ।
गुरु गाइ[9] गंध अ हार अंतहि[10] थप्पिआ
मणहंस छंद[11] पसिद्ध पिंगल जंपिआ[12] ॥ १६२[13] ॥

---

कर्णेन गुणे स्थापिताः, पार्थेन तथा योजयित्वा दश चापेन सह कर्त्तिताः॥ खड्गेन कियन्तो हताः, पार्थेन अर्जुनेन योजयित्वा धनुषि शरान् कर्णस्य चापेन सह विंशतिशराः कर्त्तिता इत्यर्थः। (C).

१६१। निशिपालमुदाहरति, जुझ्झेति। जुझ्झ — युद्धे भूमि — भूमौ पड — पतिताः पुणु — पुनः उट्ठि — उत्थाय लग्गिआ — लग्नाः युद्धायेति भावः, सग्ग मण — स्वर्गमनमः भट — भटाः खग्ग हण — खड्गेन हं[घ्न]ंति, तथापि कोइ णहि — कोऽपि नहि भग्गिआ — भग्नः। तिक्ख — तीक्ष्णः बीस — विंशतिः सर — शराः कण — कर्णेन गुण अप्पिआ — गुणार्पिताः प्रत्यचा[पतञ्चिका]युक्ता इति यावत् कर — कृताः तह — तथा पत्थ — पार्थेन दह — दश बाणान् इति शेषः जोलि — योजयित्वा चाउ सह — चापेन सह कप्पिआ — कर्त्तिताः, कर्णबाणा इति भावः॥ निशिपालो निवृत्तः। (E).

१६१। यथा। युद्धे भटा भूमौ पतिता उत्थाय पुनर्लग्नाः

---

१६१। १ जहिँ (A). dropt from the beginning up to ण of णरेंद in (B), जइ (C). २ आदि (F). ३ हत्थ (A) ४ परिंद (E). ५ बिसिबि (F). ६ दिज्जिए (E). दिज्जए (F). ७ नअइ (A, B & C), अंतहि (E). ८ किज्जिए (E & F). ९ ठाइ (A, B & C). १० अंतह (A). ११ च्छन्द (C). १२ जप्पिआ (B). १३ १५८ (A).

स्वर्गमनयः खड्गेन प्रति कोऽपि नहि भग्नः । विंशतिशरास्तीक्ष्णाः कृताः कर्णेन गुणार्पिताः, पार्थेन तथा योजयित्वा दश चापेन सह कर्त्तिताः ॥ (G).

१६२ । यत्रादौ हस्तो नरेन्द्रौ द्वावपि दत्तौ गुरुरेकः काहलौ द्वौ तदन्ते कृतौ । गुरुं स्थापयित्वा गन्धहारावन्ते स्थापितौ मनोहंसच्छन्दः प्रसिद्धं पिङ्गलेन कथितं ॥ हस्तोऽन्तगुरुश्चतुष्कलः, नरेन्द्रो मध्यगुरुश्चतुष्कलः, काहलो गन्धश्च लघुः, हारो गुरुः । तन्मनोहंसच्छन्दः । (C).

१६२ । अथ पंचदशाक्षरचरणस्य [अष्टा]विंशत्युत्तरषट्शताधिकैकादशसहस्रतमं [११६२८] भेदं मनोहंसनामकं वृत्तं लक्षयति, जहीति । जहि आइ हत्थ — यत्र आदौ हस्तः गुर्वंतः सगण इत्यर्थः णरिंद बिण्णबि — नरेन्द्रद्वयमपि मध्यगुरुजगणद्वयमपीत्यर्थः दिज्जिए — दीयते अंतहि — अंते जगणद्वयांते इति यावत् एक्क गुरु — एको गुरुः काहल बेबि — काहलद्वयमपि, काहलो लघुस्तद्द्वयमपीत्यर्थः, किज्जिए — क्रियते । अंतहि — अंते लघुद्वयांते इत्यर्थः गुरु गाइ — गुरुमुच्चार्य्य गंध अ हार — गंधः लघुश्च पुनः हारो गुरुः थप्पिआ — स्थापितः, तत् पिंगल जंपिआ — पिंगलजल्पितं पसिद्ध — प्रसिद्धं मणहंस छंद — मनोहंस[च्छन्दः] ॥ (E).

१६२ । जहीति । यत्रादौ हस्तो नरेंद्रद्वयमपि दीयते गुरुरेकः काहलौ द्वौ अंते क्रियेते । गुरुमुच्चार्य गंधश्च हारोऽंते स्थाप्यते मनोहंसच्छंदः प्रसिद्धं पिंगलजल्पितं ॥ हस्तः सगणो, नरेंद्रो जगणस्तद्द्वयं, काहलो लघुः, गंधश्च लघुः । (G).

जहा, जहि[1] फुल्ल केसु[2] असोअ चंपअ मंजुला[3]
सहआर[4] केसर गंध लुद्धउ[5] भम्मरा ।
बहु[6] दक्ख दक्खिण वाउ[7] माणह भंजणा
महुमास आविअ[8] लोअ लोअण[9] रंजणा ॥
१६३[10] ॥ मणोहंस[11] ।

---

१६२ । उदाहरति । यत्र फुल्लानि किंशुकाशोकचम्पकानि मञ्जुला[नि] सहकारकेशरगन्धलुब्धा भ्रमराः । वहति [दक्ष]दक्षिण-वातो मानभञ्जनः मधुमास आगतो लोकलोचनरञ्जनः ॥ मञ्जु-ला[नि] सुन्दरा[णि], बञ्जुला इति पाठे श्वेतरक्तभेदात् वञ्जुला-शोकयोरुपादानं । (C).

१६२ । मनोहंसमुदाहरति, जहीति । जहि — यत्र मंजुला — [मञ्जुला]नि केसु असोअ चंपअ — किंशुकाशोकचंपकानि फुल्ल — पुष्पितानि, भम्मरा — भ्रमराः सहकारकेशरगंधलुब्धा जाता इति शेषः । माणह भंजणा — मानस्य भंजनः अतएव दक्ख — दक्षः मानिनीमानभंजने इति भावः दक्खिण वाउ — दक्षिणवातः बहु — वहति, सः लोअ लोअण रंजणा — लोकलोचनरंजनो महुमा[स] — मधुमासः वसंतसंबंधी मास इत्यर्थः आविअ — आगतः ॥ मनो-हंसो निवृत्तः । (E).

---

१९२ । १ जहि (B & C). २ किंसु (E). ३ मंजुला (A, B & C). ४ सह-कार (F). ५ लुबुद्ध (B). ६ बह (A, B & C). ७ वाअ (B & C). ८ आइअ (A), आविआ (F). ९ लोचन (A). १० १५८ (A). ११ मनोहंस (A).

पढम रस सहित्तं[1] मालिणी णाम बुत्तं[2]
चमर[3] तिअ पसिद्धं[4] बीअ ठाणे[5] णिबद्धं[6] ।
सर गुरुजुअ गंधं[7] अंत कण्णा[8] सुबद्धं[9]
भणइ[10] सरस छंदं[11] चित्त मज्झे[12] णिहित्तं[13] ॥ १६४[14] ॥

१६३ । यथा । यत्र फुल्लाः किंशुकाशोकचंपकवंजुलाः सहकार-केसरगंधलुब्धा भ्रमराः । वहति दक्षो दक्षिणवायुर्मानस्य भंजनो-मधुमास आगतो लोकलोचनरंजनः ॥ (G).

१६४ । प्रथमं रससहितं मालिनीनाम वृत्तं चामरत्रयं प्रसिद्धं द्वितीयस्थाने निबद्धं। शरो गुरुयुगं गन्धः अन्ते कर्णेन विशुद्धं भणति सरसकाव्यं चित्तमध्ये निबद्धं ॥ रसो [?] लघुस्तत्‌षट्‌कयुक्त-मित्यर्थः, कर्णो द्विगुरुः । इयं नान्दीमुखीति भरतः । (C).

१६४ । अथ पंचदशाक्षरचरणस्य वृत्तस्य द्विसप्तत्युत्तरषट्‌शता-धिकचतुःसहस्रतमं [४६७२] भेदं मालिनीनाम वृत्तं लक्षयति, पढमेति । यत् पढम — प्रथमं रस सहित्तं — रससहितं रसाभ्यां सहितमित्यर्थः, "भाव रस तांडवअं णारी अह कुल भामिणिअं । तिलअ अणस्स कइअरो इअ णामं पिंगलो भणइ ॥" इति पूर्वं [Vide श्लोक १०, p. 28. — Ed.] रसपदस्य द्विलघुनामसूपात्तत्वाद्रस-

१६४ । १ सहितं (F). २ विक्तं (B & C), इत्तं (E). ३ चर (B), चरम (E). ४ and ६ transposed in (E & F). ५ ठये (B). ६ चित्तं (A). ७ गंधा (B & C). ८ घता (B). ९ सुसिद्धं (A), णिवद्धं (E), णिवद्धं (F). १० भणमि (B & C). ११ कब्बो (E & F). १२ संठे (A), dropt in (B), मझे (C), मज्झे (F). १३ णिवद्धं (A & C), dropt in (B). १४ १६० (A).

जहा, वहइ मलअ वाआ हंत कंपंत[1] काआ
हणइ[2] सवण[3] रंधा[4] कोइला लाव[5] बंधा।
सुणिअ[6] दह[7] दिहासुं[8] भिंग झंकार भारा
हणिअ[9] हणइ हंजे[10] चंड[11] चंडाल मारा॥
१६५[12]॥ मालिनी।

शब्दस्त्रिलघुकगणवाची, बीअ ठाणे—द्वितीयस्थाने चरमे[चमर] तिअ णिबद्धं—चमरत्रयनिबद्धं, चमरो गुरुस्तत्त्रयेण मगणेनेति यावत् निबद्धं यत्र चेति शेषः, अंत—अंते मगणांते इत्यर्थः सर—शरः लघुः गुरुजुअ—गुरुयुगं गंध—गंधो लघुः कण्ण—कर्णः द्विगुरुको गणः णिबद्धं—निबद्धः तत् चित्त मज्झे णिहित्तं—चित्तमध्ये निहितं पसिद्धं—प्रसिद्धं मालिणी णाम वुत्तं—मालिनी-नाम वृत्तं ज्ञातव्यमिति शेषः, इति सरस कव्वो—सरसकाव्यः सरसं काव्यं यस्य स तादृशः पिंगल इत्यर्थः भणइ—भणति॥ (E).

१६४। पढमेति। प्रथमं रससहितं मालिनीनाम वृत्तं चमर-त्रयनिबद्धं द्वितीयस्थाने प्रसिद्धं। शरो गुरुयुगं गंधोऽन्ते कर्णनिबद्धं भणति सरसकाव्यश्चित्तमध्ये निहितं॥ रसाभ्यां सहितं रसद्वययुक्त-मित्यर्थः, रसो नगणः, चमरं गुरुः, शरगंधौ लघू, कर्णो द्विगुरुः॥ (G).

१६५। १ कंपंति (A, B & C). २ लहइ (B). ३ सवस (A). ४ बंधा (A). ५ लाप (B & C). ६ सुणिअ (E). ७ दस (B & C). ८ दिसासं (A), दिसासं (B & C). ९ हणइ (A, B & C). १० हंत (A), हंज (B). ११ चंत (A) १२ १६१ (A).

भणिअ सुपिअ[1] गण सर लहु[2] सहिओ
तह[3] दिअवर जुअ करअल[4] लहिओ।
चउ चउकल गण पअ पअ[5] मुणिओ[6]
सरह[7] सुपिअ कह[8] फणिवइ भणिओ॥ १६६[9]॥

१६५। वहति मलयवातो हन्त कम्पते कायः घ्नन्ति श्रवणरन्ध्रं कोकिलालापबन्धाः। श्रूयते दशदिक्षु भृङ्गझङ्कारभारः हन्ति हन्ति हञ्जे चण्डचण्डालमारः॥ बन्धाः प्रबन्धाः, हञ्जे इति चेटीसम्बोधनं, मारः कामः। विरहिण्युक्तिरियम्। (C).

१६५। मालिनीमुदाहरति, वहईति। हे हंजे—चेटिके मलअ वाआ—मलयवातः वहइ—[वह]ति, हंत इति खेदे, काआ—कायः कंपंत—कंपते, कोइला लाव बंधा—कोकिलालापबंधः सवण रंधा—श्रवणरंध्रं हणइ [—हं]ति। भिंग झंकार भारा—भृंगझंकारसमूहाः दह दिशासुं—दशदिक्षु सुणिअ—श्रूयंते, चंड चंडाल मारा—चण्डः चण्डालमारः चण्डो महाक्रोधी चण्डाल इव चण्डालस्तद्वन्निष्ठुरः मारः कामः हणिअ—हतं मलअणं जनं हणइ—हंति॥ मलयवातादिभिर्हतां मां यदयं कामो हंति कोऽयमस्य पुरुषार्थः, मत्प्रियं हत्वा मद्वशं यदि नयति तदैनं परम-

१६६। १ सपिअ (A), सुपिअ (E). २ पअ गण (A), रस गण (B). ३ जह (E & F). ४ विअ करअल पअ पअ (A & B), दिअ करअल पअ पअ (C). ५ नअ (A). ६ सुणिओ (A). ७ सरह (B). ८ गण (A, B & C). ९ १९२ (A).

पुरुषार्थिनं मन्ये इति गूढाभिप्रायायाः कस्याश्चिद्वाक्यमेतत् । मालिनी निवृत्ता । (E).

१६५ । यथा । वहति मलयवातो हंत कंपते कायः हंति श्रवणरंध्राणि कोकिलालापबंधः । श्रूयंते दशदिक्षु भृंगझंकारभाराः हला हंति हंजे चंडः चंडालो मारः ॥ पुनः पुनर्हंतीत्यर्थः, हंजे चेटिके इति संबुद्धिः । (G).

१६६ । भणितः सुप्रियगणः सर्व्वल[घु]मचितः तत्रापि च करतलं पादे पादे सर्व्वं । चतुश्चतुष्कलो गणः पदतले ज्ञातः शरभः सुप्रिय ज्ञायतां फणिपतिभणितः ॥ सुप्रियो द्विलघुः, ततः पञ्च लघवः तत्रापि पञ्च लघवः, करतलमन्तलघु[गुरु]श्चतुष्कलः, सुप्रियेति सम्बोधनं । (C).

१६६ । अथ पंचदशाक्षरचरणस्य वृत्तस्य चतुरशीत्युत्तरद्वि[त्रि]-शताधिकषोडशसहस्रतमं [१६३८४] भेदं शरभनामकं वृत्तं लक्ष-यति, भणिअ इति । यत्रादौ सर लहु सहिओ — सरलघुसहितं सर — सरः एकलघ्वात्मको गणः अथच लघुस्ताभ्यां युक्तमित्यर्थः सु[सु]पिअ गण सुप्रियगणं सुप्रियो द्विलघ्वात्मको गणस्तमित्यर्थः भणिअ — भणित्वा, दिअवर जुअ [करअ]ल — द्विजवरयुग-करतलौ द्विजवरश्चतुर्लघ्वात्मको गणस्तद्युगं करतलो गुर्वंतसगणस्तावित्यर्थः लहिओ — लब्धौ, एवंप्रकारेणेति शेषः अह — यत्र चउ चउकल गण — चत्वारश्चतुःकला गणाः पअ पअ — पादे पादे प्रतिपाद-मिति यावत् मुणिओ — ज्ञाताः हे सुपिअ — सुप्रिय शिष्य तत् फणिवइ भणिओ — फणिपतिभणितं सरभ — शरभं कह — कथय

जहा, तरल कमलदल सरि जुअ णअणा
सरअ समअ ससि सुसरिस[1] बअणा[2]।
मअ गल[3] करिवर सअलस गमणी
कमण सुकिअ[4] फल विहि[5] गठ[6] रमणी॥
१९७[7]॥ सरभ[8]।

---

शरभनामकं तद्वृत्तमित्यर्थः॥ अत्र पुनश्चतुष्कलचतुष्टयकथनं पद्यपूरणार्थमेव, नगणचतुष्टयोत्तरसगणरचितचरणं शरभनामकं वृत्तमिति फलितार्थ इति ध्येयम्। (E).

१९६। भणीति। भणित्वा सुप्रियगणं शरलघुसहितं यत्र द्विजवरयुगं करतलसहितं। चत्वारश्चतुष्कला गणाः पदे पदे ज्ञातव्याः शरभं सुप्रिये कथय फणिपतिभणितं॥ शरो लघुः ताभ्यां सहितं, सुप्रियो द्विलघुः, द्विजवरश्चतुर्लघुः, करतलः सगणः। (G).

१९७। उदाहरति। तरलकमलदलसदृशनयनयुगा शरत्समयशशिसुसदृशवदना। मदकलकरिवरसालसगमना केन सुकृतफलेन विधात्रा घटिता रमणी॥ (C).

१९७। शरभमुदाहरति, तरलेति। तरल कमलदल सरि जुअ णअणा — तरलकमलदलसदृशनयनयुगा, सरअ समअ ससि सु[सु]सरिसबअणा — शरत्समयशशिसुसदृशवदना। मअ गल करिबर

---

१९७। १ सुसरिस (E). २ बिअणा (B). ३ गअ (A). गअ (B), कल (F). ४ सुकिअ (E). ५ विऊ (A & B). ६ गढु (A, B & C). ७ १९२ (A). ८ सरभ (C).

णरेंद[1] जत्थ[2] सव्वलो सुपण्ण चक्क दीसए
पइक्क[3] ठाम पंचमे पआ चऊ सवीसए[4] ।
पलंत[5] हार[6] चारु सारु[7] अंत जस्स वट्टए[8]
पसिद्ध ए णराउ[9] जंप गंध बंधु[10] अट्ठए[11] ॥ १६८[12] ॥

---

सअलस गमणी — मदकलकरिवरसालसगमना एतादृशी रमणी कमण सु[सु]किअ फल — केन सुकृतफलेन विहि — विधिना स्रष्टेति यावत् गठ — निर्मिता ॥ सरभो निवृत्तः । (E).

१६७ । यथा । तरलकमलदलसदृशयुगनयना शरत्समयशशि-सुसदृशवदना । मदकलकरिवरसालसगमना केन सुकृतफलेन विधिना निर्मिता रमणी ॥ (G).

१६८ । अथ षोडशाक्षरा । नरेन्द्रो यत्र सबलः सुपर्णश्चक्रं दृश्यते पदातिकः स्थाने पञ्चमे पदे चतुर्विंशतिः । पतनहारस्चारुः सारः अन्ते यस्य वर्त्तते * * नाराचो जल्प्यतां गन्धा बध्यन्तेऽष्टौ ॥ प्राथमिकत्वात् सबलो नरेन्द्रो जगणः, सुपर्णो रगणः, चक्रमित्यनेनाप्येतद्गणद्वयं लभ्यते, पदातिको जगणः, पादे चतुर्विंशतिर्मात्राः भवन्ति, यस्यान्ते पतनहारो दृश्यते तत्र गन्धा लघवोऽष्टौ निब-

---

१६८ । १ नरिंद (E & F). २ जथ्थ (A). ३ ठइक्क (B). ४ चक्क वीसए (C), चउ सवीसए (E & F). ५ पलंति (A). ६ हाव (A & C). ७ सार (E & F). ८ वढए (A), वड्डए (C). ९ नराच (B), नराचु (C), नराज (E). १० बद्द (B), बद्ध (C), बंध (E). ११ अट्ठए (B). १२ १६७ (A).

च्छन्दोऽर्थाङ्कुरतोऽष्टौ । यद्य[ष्य]ष्टाक्षरप्रकरणे पमाणि हूण किज्जए इत्युक्तं [Vide श्लोक १८, p 380] तथापि प्रकरणानुरोधात् तदनुवादः कृत इति मन्तव्यम् । (C).

१६८ । अथ षोडशाक्षरचरणस्य वृत्तस्य षट्त्रिंशदुत्तरपंचशता-धिकपंचषष्टिसहस्रं [६५५३६] भेदा भवंति, तत्र षट्चत्वारिंशोत्त-रा[ष्टशता]धिकैकविंशतिसहस्रतमं [२१८४६] भेदं नाराचनामकं वृत्तं लक्षयति, णरिंदेति । जत्थ — यत्र सब्बलो — सबलः णरिंद — नरेंद्रः मध्यगुरुर्जगण इति यावत् सुपण्ण चक्क — सुपर्णचक्रम् अंत — अंते पादान्ते चारुः सुंदरः सारः पादपूरकत्वात् श्रेष्ठ इति हार — हारः गुरुः वहृए — वर्त्तते, यत्र च पआ — पादे चउबीसए — चतुर्विंशतिः मात्रा इति शेषः, * * * मध्यलघुरगणश्चेति यावत् दीसए — दृश्यते पंचमे ठाम — पंचमे स्थाने पइक्क — पदातिः मध्यगुरुर्जगण इति यावत् दृश्यते इति पूर्वेणान्वयः, जस्स — यस्य अट्ठए — अष्टौ गंध — गंधा लघव इति यावत् वंक — वक्रा गुरवश्चेत्यर्थः पलंत — पतंति, पसिद्ध — प्रसिद्धः ए — एषः णराउ — नाराचः जंप — जल्पत ॥ इहाप्यत्र तत्त्वं — पंचमस्थाने पदातिर्दृश्यत इत्युक्त्या तृतीयचतुर्थस्थाने पुनरपि जगणरगणावेव देयाविति लभ्यते, अन्यथा प्रथमद्वितीय-स्थाने जगणरगणयोः पंचमस्थाने पदातेरेवंदानस्योक्तत्वात् तृतीय-चतुर्थस्थाने को गणो देय इत्याकांक्षाया अनिवृत्त्यापत्तिः, तथाच जगण-रगण-जगण-रगण-जगण-गुरुरचितचरणः नाराच इति फलि-तार्थः । यद्यपि अष्टोत्तर[ष्टाक्षर]प्रस्तारे पमाणि इत्यनेन प्रागेवै-तल्लक्षितं, तथापि प्रकरणानुरोधात्तस्यैव पुनरनुवादः कृत इत्यस्म-

जहा, चलंत[1] जोह मत्त[2] कोह[3] रम्म[4] कम्म अग्गरा
किवाण बाण सल्ल[5] भल्ल[6] चाव[7] चक्क मुग्गरा[8] ।
पहार वार[9] धीर[10] बीर[11] बग्ग[12] मज्झ[13] पंडिआ
पअट्ठ[14] ओट्ठ[15] कंत दंत[16] तेण सेण मंडिआ[17] ॥
१९९[18] ॥ णराच[19] ।

ज्ञातचरणोपदेशसरणिः । अत्र मात्राकथनं पृथक्[या] गुरुलघुकथनं च पद्यपूरणार्थमिति ध्येयम् । (E).

१९८ । अथ षोडशाक्षराष्टौ ॥ णरिंदेति । नरेंद्रो यत्र सदलः सुपर्णचक्रं दृश्यते, पदातिः स्थाने पंचमे, पादे चतुर्विंशतिर्मात्रा-इत्यर्थः । प्रकटो हारसारः सारोऽंते यस्य वर्त्तते प्रसिद्धं तन्नाराचं जल्पति गंधा वक्रा अष्टौ ॥ नरेंद्रो जगणः, सुपर्णो रगणः, पदातिर्जगणः । पंचमे स्थाने इत्युक्त्या तृतीयचतुर्थस्थाने जगणरगणावेव पुनर्देयौ इति सूच्यते । गंधा लघवो वक्रा गुरवः । (G).

१९९ । उदाहरति । चलन्ति योधाः शत्रून् क्षोभयन्तः वर्म्मकर्म्मपटुयाः, कृपाणबाणचापशल्यभल्लमुद्गरैः । प्रहारवारिवधा रणे

१९९ । १ चलंति (B). २ मत्त (A, B & C). ३ कोह (A, B & C). ४ रम्म (A, B & C). ५ सेल्ल (A, B & C). ६ भंज (B & C). ७ चाप (A). ८ मुग्गरा (B). ९ धार (A), धारि (B & C). १० वार (A), मार (B), धार (C). ११ मार (A), धारि (B), धीरि (C). १२ रग्ग (A). १३ मज्झ (A, B & C), मज्झ (F). १४ पउठठ (A), पओट्ठ (B), पअट्ठ (C), पइठठ (F). १५ उठठ (A). १६ दन्त दन्त (A), दन्त कन्त (B). १७ मुण्डिआ (B), खण्डिआ (C). १८ १९४ (A). १९ नाराच (A)

अवलोआअं[१] भणि[२] सुच्छंदं मण मज्झे सुक्खं[३] संवुत्तं
सुपिअं अंते ठवि[४] हत्था[५] दिज्जसु[६] कुंतीपुत्तं[७] संजुत्तं ।
गण अग्गा[८] दिज्जसु[६] एअं[९] किज्जसु[१०] अंते[११] सत्ता हारा जं
दुअ बत्तीसा णिअ[१२] मत्ता पाअह[१३] छंदो संभू णामाअं[१४] ॥
१९४[१५] ॥

हृदयं घूर्णते, अहमेकाकिनी वधूर्गेहे नास्ति प्रियः, शृणु पथिक मन इच्छया कथय ॥ (G).

१९३ । उदाहरणमाह, तरुण तरणि इत्यादि । तरुणस्तरणिस्तपति धरणीं, पवनो वहति खरः, निकटे नास्ति जलं, महत् मरुस्थलं जनजीवनहरं । माघ्यं वदमि हृदयं कम्पते अहमेकाकिनी वधूर्गेहे नास्ति प्रियः शृणु पथिक मनःस्थितं कथय ॥ नग इ[ति] निकटवाचको मिथिलादेशीयः । स्वयं दूतीवचनं । (H).

१९४ । अवलोकय भण सुच्छन्दः मनोमध्ये सुखं सुवृत्तं, सुप्रियमन्ते स्थापयित्वा हस्ते दीयतां कुन्तीपुत्रः संयुक्तः । गणोऽग्रे दीयताम् एवं क्रियतामन्ते सप्त हाराः इति द्वात्रिंशन्निजमात्राः पादे छन्दः शम्भुनामेदं ॥ सुखम् एतदवलोकनात्, सुप्रियं लघु-

१९४ । १ अवलोआअं (A), dropt in (B), अवलोआसुं (C). २ भण (A, B & C). ३ Dropt after सु up to पुत्तं in the third quadrant in (F). ४ थरि (A). ५ हत्थो (A). ६ दिज्जउ (A). ७ कुंतीपुत्ते (E). ८ अग्गा (B), अग्गे (E). ९ एवं (B), dropt in (C). १० किज्जउ (A), dropt in (C). ११ अंत (E). १२ णअ (A). १३ पाअहि (A), पाअउ (B), पाअ (C). १४ णामोअं (A, B & C). १५ १९७ (A).

इयमन्ते, तथादौ किं तत्राह हस्तः सगणः कुन्तीपुत्रः कर्णो द्विगुरु: तथाच सगणकर्णगणानन्तरं द्विकलगणः। अग्रेऽप्येवं गणौ दीयतां हस्तकर्णा[न]न्तरं सुप्रियो दीयतामित्यर्थः, किन्त्वत्र पूर्व्वलिखित-सुप्रियगणेन सह हस्तगणः कर्त्तव्य इतरथा वर्णाधिक्यप्रसङ्गात्, तदन्ते सप्त गुरवः। अथवा आदौ हस्तगणः ततः कर्णगणः ततः पुनरपि हस्तकर्णौ इति संयुक्तमित्यस्यार्थः, ततः सुप्रियः द्विलघुः। (C).

१८४। अथैकोनविंशति[त्यचर]चरणस्य वृत्तस्य द्विसप्तत्यधिकैक-शताधिकचिसहस्रतमं भेदं शंभुनामकं वृत्तं लक्षयति, अवलो-आअमिति। सुच्छंदं — सुच्छंदः एतदिति शेषः [भणि —] भणिता [मण]मझ्झे — मनोमध्ये सूक्खं — सुखं संबुत्तं — संवृत्तं लम् अवलो-आअं — अवलोकय कुंतीपुत्ते संजुत्तं — कुंतीपुत्रेण संयुक्तम् अग्र-स्थितगुरुद्वयात्मकगणयुक्तमिति यावत् हत्था — हस्तं गुर्वंतसगण-मिति यावत् दिज्जसु — दद्स्व अग्गे — अग्रे कर्णाग्रे इति यावत् एवं[अं] गण दिज्जसु — एवंप्रकारेण गणं दद्स्व, पुनरपि सगण-कर्णौ देहीत्यर्थः, अंते — सगणकर्णांते सुपिअं — सुप्रियं लघुद्वयात्मकं गणं ठवि — स्थापयित्वा अंते — पादांते सत्ता हारा — सप्त हारान् गुरून् किज्जसु — कुरुष्व इअ — इति प्रकारेणेति भावः बत्तीसा णिअ मत्ता — द्वात्रिंशन्निजमात्राः जं — यत्र पाअह — पादेषु पतंतीति शेषः संभू णामाअं — शंभुनामा छंदो — छंदः जानीहीति शेषः ॥ (E).

१८४। अवेति। अवलोकयेदं भणिता सुच्छंदो मनोमध्ये सौख्यं

जहा, सिअ विट्ठी[1] किज्जइ[2] जीआ[3] लिज्जइ[4]

बाला[5] बुड्ढा कंपंता

बह पच्छा बाअइ[6] लग्गे काअइ

सब्बा दीसा झंपंता[7] ।

जइ[8] जड्डा[9] रूसइ[10] चित्ता[11] हासइ[12]

पेटे[13] अग्गी[14] थप्पीआ[15]

कर पाआ संभरि[16] किज्जे[17] भित्तरि

अप्पा अप्पी लुक्कीआ ॥ १९५[18] ॥

संभु ।

सुवृत्तं सुप्रियमंते स्थापय, हस्तो दीयते कुंतीपुत्रसंयुक्तः । गण-मध्ये देहि, एवं कुरुष्वांते सप्त हारा यत्र, इति द्वात्रिंशन्मात्राः पादे छंदः शंभुनामेदं ॥ आदौ हस्तः सगणः, सगणकर्णयोर्द्वयमित्यर्थ-स्तदंते सुप्रियं लघुद्वयं, कर्णौ गुरु[द्वयं], हारो गुरुः । (G).

१९४ । अब लोआ इत्यादि । इदानीं लोकानां भण सुच्छंदः मनोमध्ये सुखं संवृत्तं सुप्रियमन्ते संस्थाप्य कुन्तीपुत्रसंयुक्तं । गणा-

१९५ । १ रिठ्ठा (A). २ किज्जइ (B & C). ३ जीआ (A), आ (C). ४ लिज्जइ (B&C). ५ बाल (E). ६ बाअ (A). ७ रक्तौ रक्तौ झंपन्ता (A). ८ जब (A). जहि (B). ९ जहा (B), जहुँ (E). १० रोसइ (A, B & C). ११ चिंता (A, B & C). १२ हो मइ (A & B), हो मरि (C) १३ पड़े (A), मज्झे (B & C), पेट्टे (F). १३ and १४ transposed in (A, B & C). १५ थक्कीआ (A, B & C). १६ संभि (A). संभुरि (B). संभरि (C). १७ किज्जर (A). १८ १९८ (A).

नये देहि एवं कुरु अन्ते सप्त हारा यत्र, एवं द्वात्रिंशन्मात्राः पादे शम्भुनामैतत् ॥ सुच्छंदो भण एतच्छन्दो भण, तेन इदानीं लोकानां मनोमध्ये सुखं संवृत्तं। आदौ हस्तं सगणं दद्यात्, कीदृशं हस्तं कुन्तीपुत्रसंयुक्तं सगणानन्तरं गुरुद्वयं देयं, ततोऽग्रे एवं गणं देहि सगणं गुरुद्वयं पुनर्देहि, अन्ते एतदन्ते सुप्रियं लघुद्वयं संस्थाप्य तदन्ते सप्त हारा गुरवः, एवं समुदायेन द्वात्रिंशन्मात्राः पादे, इदं छन्दः शम्भुनाम। अत्र सप्तसु वर्णेषु यतिः, पुनः पंचसु वर्णेषु यतिः, पुनः सप्तसु वर्णेषु यतिः। * * * (H).

१९५। उदाहरति। शीतवृष्टिः क्रियते, जीवो गृह्यते, बालाः वृद्धाः कम्पन्ते, वहति पश्चाद्वायुः लग्नः काये सर्वं देशं व्याप्नोति। यदि शीतं दृश्यति चिन्ता भवति सखि अग्नौ प्रविश्य क्षीयते, करपादं संचिप्य क्रियते मध्ये आत्मात्मनि गोप्यते ॥ क्रियते देवेन, दृश्यति अधिकं भवति। जाआ इति पाठे जाया दृश्यति कुप्यति पृथक् स्वपिति तदा चिन्तावृद्धिर्भवति। आ[त्म]शरीरं गोप्यत इत्यर्थः। (C).

१९५। शंभुमुदाहरति, सिम्र बिट्ठीति। सिम्र बिट्ठी — शीतवृष्टिः किज्जइ — क्रियते जीआ लिज्जइ — जीवो गृह्यते देवेनेति शेषः, बाला बुड्डा — बाला वृद्धाः कंपंता — कंपते पच्छा बाअइ — पश्चिमवाताः बह — वांति,, काअह — काये लग्गे — लगंति, सब्बा दीसा — सर्वा दिशः झंपंता — आच्छन्ना भवंतीत्यर्थः। जइ जड्डा रोसइ — यदि शीतं दृश्यति, तदा चित्ता हासइ — चित्तं ह्रसति, पेटे — उदरे अग्गी — अग्निः थप्पीआ — स्थाप्यते, कर पाआ सं[भरि]

जहि[1] आइ हत्थ[2] णरेंद बिणवि[3] पाअ पंचम[4] जोहलो
जहि[5] ठाइ छट्ठहि[6] हत्थ[1] दीसइ[7] सद्द[8] अंतहि[9] णेउरो।
सुइ[10] छंद गीअउ मुद्धि[11] णीअउ[12] सव्व लोअहि जाणिओ
कइ सिट्ठि[13] सिट्ठउ[14] दिट्ठ[15] दिट्ठउ[16] पिंगलेण बखा-
णिओ[17] ॥ १९६[18] ॥

—करपादौ संकोच्य भित्तरि—मध्ये किज्जे—क्रियते अप्पा अप्पौ—आत्मा आत्मनि लुक्कीआ—गोप्यते॥ कस्यचिद्दरिद्रस्यैतद्वाक्यं। शंभुर्विवृत्तः। (E).

१९५। यथा। शीतवृष्टिः क्रियते, जीवो गृह्यते, बाला वृद्धाः कंपंते, वहंति पश्चिमवाता लगंति काये, सर्वा दिशो घूर्णंति। यदि आत्मं दृश्यति, चित्तं कृषति, उदरेऽग्निः स्थाप्यते, करपादौ संकोच्य क्रियते मध्ये आत्मा आत्मनि गोप्यते॥ दरिद्रस्येय-मुक्तिः। (G).

१९५। उदाहरणमाह, सिअ विट्ठा इत्यादि। शीतवृष्टिः क्रियते, जीवो गृह्यते, बाला वृद्धाः कंपंते, वहति पाश्चात्यवातः लगति काये, सर्वा दिश आच्छादयन्। यदा आत्मं दृश्यति तदा

१९६। १ जइ (A, B & C). २ हत्थ (A). ३ वेणवि (B). ४ पंचम (A), पञ्चवि (B). ५ जहिं (A), जइ (B & C). ६ छट्ठहिं (A), छाहइ (B & C). ७ दिस्सइ (A). ८ सद्द (E & F). ९ अंतइ (A). १० सोइ (B, C, E & F). ११ मुद्ध (A), dropt in (B). १२ णीअउ (A), dropt in (B), णउ (F). १३ सिट्ठ (A). १४ सिट्ठिउ (C). १५ Dropt in (B), दिट्ठि (C & F). १६ दिट्ठ (C) १७ बाखाणिओ (B). १८ १९९ (A)

चिन्ते भवति अग्निपृष्ठे स्थातव्यं करपादं संहृत्य संकुचितं कृत्वेत्यर्थः क्रियते मध्ये आत्मना आत्मनि लीयते ॥ एकोनविंशत्यक्षरप्रस्तारस्य पञ्च लक्षाणि चतुर्विंशतिसहस्राण्यष्टाशीत्यधिकं शतद्वयं भेदास्तेषु कियन्तो भेदा उक्ताः, शेषभेदाः स्वयमवगन्तव्याः । (H).

१९६ । अथ विंशत्यक्षरा ॥ यस्यादौ हस्तः नरेन्द्रौ द्वावपि पादः पञ्चमो जोहलः, यदि स्थाने षष्ठे हस्तो दृश्यते शब्दोऽन्ते नूपुरः । तच्छन्दो गीता शुद्धा नीयते * * कविसृष्ट्या सृष्टं दिष्ट्या दृष्टं पिङ्गलेन व्याख्यातं ॥ गीतेति छन्दोनाम, यदा कविसृष्टिः तदैव इदं सृष्टं, दिष्ट्या भाग्येन दृष्टं गुरुभिः, सो इत्यत्र ओकारो-लघुः । (C).

१९६ । अथ विंशत्यक्षरचरणस्य वृत्तस्य षट्सप्तत्युत्तरपंचशता-धिकाष्टचत्वारिंशत्सहस्रोत्तरं दश लक्षं भेदा भवंति, तत्राष्टोत्तर-शताधिकं [षट्सप्तत्यधिकं] द्विसप्ततिसहस्रोत्तरत्रिलक्षतमं [३७२०७६] भेदं गीतानामकं वृत्तं लक्षयति, जहीति । हे मुद्धि—मुग्धे जहि—यत्र आइ—आदौ हत्थ—हस्तः गुर्वंतः सगण इति यावत् णरेंद बिसबि—नरेंद्रद्वयमपि मध्यगुरुजगणद्वयमपीति यावत्, ततः पाअ—पादः आदिगुरुर्भगण इत्यर्थः, पञ्चम—पञ्चमः जोहलो—मध्यलघुरग[ण] इति यावत्, जहि—यत्र छट्ठहि—षष्ठे ठाइ—स्थ[स्था]ने हत्था—हस्तः गुर्वंतः सगणः अंतहि—अंते सगणांते पादांते वा सह—शब्दं लघुः णेउरो—नूपुरं गुरुः दीसइ—दृश्यते । इदं च क्रियापदं सर्वैः प्रथमांतैर्गणवाचकैः पदैः सह योजनीयं । सोइ—तत्तत् णीअउ—समीचीनं सब्ब लोअहि

आणिग्रो — सर्व्वलोकैर्ज्ञातं त्रैलोक्यप्रसिद्धमिति यावत्, कवि सिट्ठि सिट्ठउ — कविसृष्ट्या सृष्टं दिट्ठ दिट्ठउ — दृष्ट्या दृष्टं पिंगलेण बखाणिग्रो — पिंगलेन विख्यापितं गीग्र छंद — तद्गीतानामकं वृत्तमित्यर्थः ॥ वृत्तविशेषणानि पद्यपूरणायेति मंतव्यं। (E).

१९६। अथ विंशत्यक्षरा कृतिः॥ जहीति। यत्रादौ हस्तो-नरेंद्रद्वयमपि पादः पंचमो जोहलो यत्र स्थायी षष्ठे हस्तो-दृश्यते शब्दमंते नूपुरं। तत् छंदो गीता मुग्धे समीचीनं सर्व-लोकैर्ज्ञातं कविसृष्टिसृष्टं दृष्टिदृष्टं पिंगलेन व्याख्यातं॥ हस्तः सगणः, नरेंद्रो जगणः, पादो भगणः, जोहलो रगणः, शब्दं लघुः, नूपुरं गुरुः। गीतानामकं छंदः। (G).

१९६। विंशत्यक्षरप्रस्तारे कानिचिच्छंदांसि वदति, जह आइ इत्यादि। यत्र आदौ हस्तो नरेन्द्रौ द्वावपि पादः पञ्चमो योधो-यत्र स्थाने षष्ठे हस्तो दृश्यते शब्दः अन्ते नूपुरः। तच्छंदः गीता मुग्धानां नीता सर्वलोकैर्ज्ञाता कविश्रेष्ठसृष्टा दिष्ट्या दृष्टा पिंग-लेन व्याख्याता॥ यत्र आदौ हस्तः सगणः, द्वौ नरेंद्रौ जगणौ, पादो भगणः, योधो रगणः पंचमः, षष्ठस्थाने हस्तः सगणस्ततः शब्दो लघुरन्ते नूपुरो गुरुश्छन्दमो नाम गीता, कीदृशी मुग्धानां मनोहराणां मध्ये नीता गणिता सर्वलोकैर्ज्ञाता, कीदृशी गीता कविश्रेष्ठेन सृष्टा दृ[दि]ष्ट्या भाग्येन दृष्टा पिंगलेन व्याख्याता। पशुपतिनैवं व्याख्यातं। कविसृष्टिसृष्टा कविसृष्टौ सृष्टा यदा कवयः सृष्टास्तदा एषापि सृष्टेत्यर्थः, दृष्टिश्छंदःशास्त्रं तेन[तया] दृष्टा। सगण-जगणद्वय-भगण-रगण-सगण-लघुगुरुभिर्वर्णैर्गीता।

जहा,

जइ[1] फुल्ल[2] केअइ चारु चंपअ[3] चूअ[4] मंजरि[5] बंजुला[6]
सब दीस दीसइ केसु काणण पाण बाउल भम्मरा[7] ।
बह पोम्म[8]गंध बिबंधु[9] बंधुर मंद[10] मंद समीरणा
णिअ[11]केलि कोतुक[12]लास लंगिम[13] लग्गिआ तरुणी[14]
जणा[15] ॥ १९७[16] ॥ गीता ।

---

तद्गणक्रमराहित्येन मात्रावृत्ते हरिगीतेयं [Vide श्लोकः १९१, p. 306.] । उक्तं छंदःपारिजाते । सगणं पुरो विनिधाय जद्वयमुज्ज्वलं भगणान्ततो—रगणं ततः सगणं निधेहि विधेहि लं गुरुमन्ततः । फणिराजनिर्मितवृत्तमत्ररगीतकं * * * * * हरिगीतकेति पुरा कलाकृतवृत्तकेऽनियमस्थितं ॥ (H).

१९७ । यथा । उदाहरति । यदि फुल्लानि केतकी-चारुचम्पक-यूथिमञ्जरी-वञ्जुलानि सर्व्वस्यां दिशि दृश्यते किंशुककाननं पान-व्याकुलभ्रमराः । वहन्ति पद्मगन्धविबन्धुबन्धुरा मन्दमन्दसमीरणाः निजकेलिकौतुकलासलङ्गिमलग्नास्तरुणीजनाः ॥ विशेषेण बन्धुर्विबन्धुः, बन्धुरा विलक्षणाः । (C).

---

१९७ । १ जचि (A), जइ (B & C). २ फुल्ल (E & F). ३ चम्पइ (B & C). ४ जूथ (C). ५ मरि (E). ६ वञ्जला (B), वञ्जुला (E & F). ७ Dropt in (B), भरा (C). ८ Dropt in (A), पोम (B & C), पद्म (E). ९ बंधु विबंध (A), विबन्ध (B). १० Dropt in (B). ११ णिच (A). १२ कौतुक (A, E & F). १३ लाङ्गम (B). १४ तरुणि (E). १५ जणा (A). १६ २०० (A)

१९७। गीतामुदाहरति, जहेति। जह—यत्र केअइ धाइ चंपअ चूअ मञ्जरि वंजुला—केतकिधात्रचंपकचूतमञ्जरीवञ्जुलानि [केतकी] धातकिः चंपकानि चंपकपुष्पाणि चूतस्य मञ्जर्यः नवपल्लवानि वञ्जुलानि चैतानीत्यर्थः फुल्ल—पुष्पितानि विकसितानीति यावत्, केसु काणण—किंशुककाननं सब दीस दीसइ—सर्वस्यां दिशि दृश्यते, भमरा—भ्रमराः पाण बाउल[ल]—पानव्याकुला मकरंदाद्यनुपानप्रमत्ता इत्यर्थः जाता इति शेषः। पद्म गंध बिबंधु—पद्मगंधविबंधुः क[म]लसौरभस्य विशिष्टो बंधुरित्यर्थः, बंधुरः विचक्षणो मानिनीमानभंजने इति भावः [मंद मंद—मन्दमन्दः] समीरणा—समीरणः वातः वह—वाति, तरुणीजनाः णिअ केलि कौ[को]तुक लास लंगिम लग्गिआ—निजकेलिकौतुकलास्यलंगमलग्नाः। (E).

१९७। यथा। यत्र फुल्लकेतकीधात्रचंपकचूतमंजरीवंजुलाः सर्वा दिशो दृश्यंते किंशु[क]काननपानव्याकुला भ्रमराः। वहति पद्मगंधं बंधुबंधुरो मंदं मंदः समीरणो निजकेलिकौतुकलास्यलंगिमलग्नस्तरुणीजनः॥ (G).

१९७। उदाहरणमाह, जहि फुल्ल इत्यादि। यत्र फुल्लाः केतकीधात्रचम्पकचूतमञ्जरीवञ्जुलाः सर्व्वासु दिक्षु दृश्यन्ते किंशुककानने पानोन्मत्ता भ्रमराः। वहति पद्मगंधविशिष्टबंधुबंधुरो मंदमंदं समीरणो निजकेलिकौतुकलासभङ्गीलग्नास्तरुणीजनाः॥ सुवर्णकेतकीविकाशो वसन्ते, वंजुला अशोकाः, वंजुलः पुंसि तिनिशे वेतसाशोकयोरपि। (H).

रगणा पलंतश्रा[1] पुणो णरेंद कंतश्रा सुछक्कएण[2]
हार[3] एक्क मंतही सुसद्द पाश्र श्रंतही सुसक्कएण ।
गंडश्रा गणेहु ए सुबस[4] संख बीसए[5] फणिंद गाउ[6]
तीस मत्त पाश्र[7]पत्त हार तीश्र भाश्रएण[8] सद्द श्राउ[9] ॥
१९८[10] ॥*

१९८। रगणाः पतन्ति पुन[र्न]रेन्द्रः कान्तः सुषट्केन हारमेकं मन्त्रयस्व जानीहि शोभनः शब्दो लघुः सुषत्कतेन षट्केनेत्यर्थः, शोभनप्रकारेणेति वार्थः। * * * विंशतस्तृतीयभागो दश संख्या-केन हारा दश, शब्दा लघवो दशेत्यर्थः। (C).

१९८। अथ विंशत्यक्षरचरणस्य वृत्तस्यैकपंचाशदधिक[नव]-नवतिसहस्रोत्तरपंच[षट्]लक्षतमं [६९९०५१] भेदं गण्ड[क]नामकं वृत्तं लक्षयति, रगणेति। रगणा — रगणः मध्यलघुर्गण इति यावत् पलंतश्रा — पतति पुनः कंतश्रा — कांतः णरेंद — नरेंद्रो मध्यगुरुर्जगण इति यावत् पततीति पूर्वेणान्वयः, एवं सुसक्कएण — स्वशक्त्या निजकविलसामर्थ्येन सुछक्कएण — सुषट्केन भण गणषट्केनेत्यर्थः सह एक्क — एकं हारु — हारं गुरुं मंतही — श्रामंत्रयस्व स्थापयस्वेत्यर्थः, पाश्र श्रंतही — पादांते सुसह —

१९८। १ पलश्रंतश्रा (A), पुलन्तश्रा (B). २ सुच्छन्दएण (C). ३ हाव (E & F). ४ सुवष (A). ५ कंकणे (A), ठक्कणे (B), ठक्कणे (C). ६ दस भाउ (A). ७ पाउ (E & F). ८ भाश एड (A), भाश्र एड (B & C). ९ भाउ (A). १० २०१ (A). * This metre has been designated वृत्तं in Pingala's Sanskrit treatise. Vide Ghosha's Compendium, p. 97.—Ed.

सुशब्दः शोभनो लघुर्द्वैध इति शेषः। यत्र संख — संख्याया बीसए — विंशतिः सुवख — सुवर्णाः तीस मत्त — त्रिंशन्मात्राः पाअ पत्त — पादे प्राप्ताः तीअ भाअएण — तृतीयभागेन त्रिंशत्तृतीयभागो-दश [त]त्संख्ययेति यावत् हारः गुरुः स दश लघुः आउ — आयाति पततीति यावत्, ए — एवं गण्डआ — गण्डकं गणेऊ — गणयस्व बुध्यस्वेत्यर्थः, इति फणिंद — फणीन्द्रः गाउ — गायति॥ प्रथमं गुरुस्तदनंतरं लघुः पुनः गुरुस्तदनंतरं लघुरेवंक्रमेण यत्र विंशत्य-क्षराणि चरणे पतंति तद्गण्डकनामकं वृत्तमिति फलितार्थः। (E).

१९८। रग्गेति। रगणः पतति पुनर्नरेंद्रः कांत एतयोः सुषट्केन, हार एकोऽंते सुशब्दः पादांते स्वशक्तिकया। गंडकं गणयस्व वर्णसंख्या विंशतिः फणींद्रो गायति, त्रिंशन्मात्राः पादे प्राप्ताः हारास्तृतीयभागेन शब्द आयातः॥ नरेंद्रो जगणः, रजयोः षट्कं कर्त्तव्यं, हारो गुरुः, सुशब्दो लघुः। (G).

१९८। रगण इत्यादि। रगणः पतति पुरो नरेन्द्रः कांतः सुषट्केन, हारम् एवमामंत्रय[स्व] सुशब्दः पादान्ते सुसत्तेन। गण्डकां गणय अस्य छंदसो वर्णसंख्यां विधेहि फणीन्द्रो गायति, त्रिंशन्मात्राः पादे, प्राप्तस्तृतीयभागो हारः सुशब्दस्तावान्॥ आदौ रगणः पतति यत्र पुनर्नरेन्द्रः कान्तः सुषट्केन रगणस्ततो जगणः एवंक्रमेण षड्गणाः कर्त्तव्या हारं गुरुमेकमामंत्रय[स्व] कुरु, सुशब्दं लघुं पादान्ते आमंत्रय[स्व] कुरु, सुसंस्कृतेन सुप्रकारेण गण्डकां छंदसो नाम गणय, अस्य छन्दसो वर्णसंख्यां टंकले कुरु त्रिंश-न्मात्राः पादे, त्रिंशन्मात्रायास्तृतीयभागः प्राप्तः तृतीयभागो दश

जहा,

ताव बुद्धि[१],ताव सुद्धि[२] ताव दाण ताव माण[३] ताव[४] गब्ब
जाव जाव[५] हत्य[६] णच्च[७] बिज्जु रेह[८]रंग णाइ[९] एक्क दब्ब।
एत्थ[१०] अंत[११] अप्प दोस देव[१२] रोस होइ[१३] णट्ठ सोइ सब्ब[१४]
कोइ बुद्धि[१५] कोइ सुद्धि[१६] कोइ दाण कोइ माण कोइ गब्ब ॥
१९९[१७] ॥ गंडका ।

---

तेन दश गुरवस्तावंतो लघवस्तेन दश लघवः, समुदायेन विंशत्यक्षराणि पादे। टंकशब्दो गौडदेशीयः संख्याकरणवाचकः। (H).

१९९। उदाहरति। तावद्बुद्धिस्तावत् शुद्धिस्तावद्दानं तावन्मानः तावद्गर्व्वः, यावत् हस्ते हस्ते नृत्य[ति] सर्व्वं विद्युदिव रङ्गमेकं द्रव्यं। स्वत्र्थेनात्मनो दोषेण दैवरोषेण भवति नष्टं तदेव सर्व्वं, कुत्र बुद्धिः कुत्र शुद्धिः कुत्र दानं कुत्र मानः कुत्र गर्व्वः॥ एकं द्रव्यं सर्व्वं सर्व्वात्मकं द्रव्यं, विद्युद्वद्द चञ्चलत्वात्, स्त्रीनिमित्तेन यदा तदा इत्यध्याहार्य्यं। (C).

१९९। गण्डकमुदाहरति, तावेति। जाव — यावत् हत्थ — हस्ते

---

१९९। १ and २ transposed in (E & F). ३ Transposed in (E). ४ Dropt in (B). ५ ताव सब्ब (A), जाव once only in (E & F). ६ हत्थ (A). ७ सब्ब between णच्च and बिज्जु (A & C). ८ and ९ dropt in (A & C). ९ Dropt in (B). १० एत्थ (A), dropt in (B & C). ११ चान्त (B), dropt in (C). १२ Dropt in (B & C), देव (E). १३ Dropt in (A, B & C). १४ दब्ब (E). १५ and १६ transposed in (E). १६ Dropt in (C). १७ २०२ (A).

बे कला गंध हारा[1] बलअ दिअगणा हत्थ[2] हारा पलंता[3]
एक्कला[4] सल्ल कला[5] धअपअ[6] सहिआ कंकणा[7] अंत कंता[8] ।
बीसा एक्क[9]ग्गला जं पलइ लहु गुरू बारहा होइ[10] दीहा[11]
पिंडा[12] बत्तीस अग्गा सउ[13] फणि भणिआ[14] सद्धरा होइ[15]
मुद्धा[16] ॥ २००[17] ॥

---

बिज्जु रेह रंग णाइ — विद्युद्रेखारंगवत् अतिचंचलमिति भावः एक्क — एकं दव्व — द्रव्यं णच्च — नृत्यति, ताव बुद्धि — तावद्बुद्धिः तावत् शुद्धिः तावत् मानः तावत् दानं तावत् गर्वः । [एत्थ अंत — एतदन्ते] सोइ — तत् द्रव्यं अप्प दोस — आत्मदोषेण देव रोस — दैवरोषेण यद्दीति शेषः णट्ठ — नष्टं होइ — भवति तदेति शेषः, कोइ बुद्धि — [कुत्र बुद्धिः] कुत्र शुद्धिः कुत्र मानः कुत्र दानं कुत्र गर्वः ॥ (E).

१९९ । यथा । तावत् शुद्धिस्तावद्बुद्धिस्तावन्मानस्तावद्दानं तावद्गर्वो यावद्धस्ते नृत्यति विद्युल्लेखारंगणवद् एकं द्रव्यं । एतन्मध्ये आत्मदोषेण दैवरोषेण भवति नष्टं तत्सर्वं, का बुद्धिः का शुद्धिः किं दानं को मानः को गर्वः ॥ (G).

१९९ । उदाहरणमाह, ताव बुद्धि इत्यादि । तावद्बुद्धिस्तावत् शुद्धिस्तावद्दानं तावन्मानस्तावद्गर्वः, यावद् यावद्धस्ते हस्ते नृत्यति

२०० । १ हार (A). २ हत्थ (A). ३ बलंता (A). ४ एकला (A, B & C), dropt in (F). ५ कल (F). ६ धअ बल (A), धअ वठ (B & C). ७ संकला (A). ८ कला (A). ९ एक (A & C). १० पाअ (A), सोहि (E). ११ दिहा (E). १२ पंडा (A). १३ अग्गा सअ (A), अग्गा स (E). १४ फणिणा (B). १५ हो (C). १६ सुद्धा (A). १७ २०२ (A).

सर्वं विद्युद्रङ्गमेकं द्रव्यं। एतद्गते आत्मदोषेण दैवरोषो भवति नष्टं तदेव द्रव्यं, तदा का बुद्धिः का शुद्धिः किं दानं को मानः को गर्व्वः ॥ विज्जु रङ्ग इति विद्युद्वत् चंचलं, द्रव्यनाशे आत्मदोषेण दैवरोषः कारणं। विंशत्यक्षरप्रस्तारस्य दशलक्षाष्टचत्वारिंशत्सहस्राणि षट्शतन्यधिकानि पंचशतभेदास्तेषु भेदद्वयमुक्तं शेषभेदाः स्वयमवगन्तव्याः। (H).

२००। अथ एकविंशत्यक्षरा ॥ द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ वलन्तौ एकं शल्यं कर्णो ध्वजपटः कङ्कणमन्ते कांतं। विंशतिरेकाधिका यत्र पतति लघुगुरुभिदादिश भवन्ति दीर्घाः, पिण्डिता द्वाविंशदयं शतं फणिभणिता स्रग्धरा भवति मुग्धा ॥ पिण्डिताः पादचतुष्क एकीकृता द्वाचिंशदधिकशतमित्यर्थः। (C).

२००। अथैकविंशत्यक्षरचरणस्य वृत्तस्य चि[द्वि]पंचाशदुत्तरैकशताधिकसप्तनवतिसहस्रोत्तरं विंशतिलक्षं भेदा [भ]वंति, तत्र पञ्चोत्तरशतत्रयाधिकनवाधिकनवतिसहस्रोत्तरैकलक्षतमं [त्रिनवत्युत्तरनवशताधिकद्विसहस्रोत्तरत्रिलक्षतमं ३०२९९३] भेदं स्रग्धरानामकं वृत्तं लक्षयति, बे कलेति। यत्र प्रथमं बे कणा — द्वौ कर्णौ गुरुद्वयात्मकगणावित्यर्थः, ततो गंध हारा — गंधहारौ लघुगुरू इति यावत्, ततश्च वलम दिअगणा — वलयद्विजगणौ गुरुलघुचतुष्टयात्मकगणाविति यावत्, ततः हत्थ हारा — हस्तहारौ सगणगुरुकावित्यर्थः यत्र पलंता — पततः, ततश्च एक्कला — एकलं शल्यं लघुः कणा — कर्णो गुरुद्वयात्मको गण इत्यर्थः अंत — अंते कर्णगणाग्रे इत्यर्थः धअपअ सहिआ — ध्वजपटसहितः रुप्यादि-

त्रिकलगणसहित इत्यर्थः कंता—कांतः कंकणा—कंकणं गुरुरित्यर्थः यत्र पततीति शेषः । जं—यत्र एक्कग्गला—एकाधिका वीसा—विंशतिः एकविंशतिरिति यावत् लहु गुरू—लघुगुरवः पलइ—पतंति बारहा—द्वादश दीहा—दीर्घाः होंहि—भवंति, पिण्डा—पिंडिताः बत्तीस अग्गा सउ—द्वात्रिंशदधिकशतं मात्रा इति शेषः यत्र भवंतीति पूर्वेणान्वयः, सा फणि भणिआ—फणिभणिता मुद्धा—मुग्धा मनोज्ञेति यावत् सद्धरा—स्रग्धरा होइ—भवति ॥ स्रग्धरानामकं तद्वृत्तं भवतीत्यर्थः । (E).

२०० । अथैकविंशत्यक्षरा प्रकृतिः ॥ बे कण्णेति । द्वौ कर्णौ गंधहारौ वलयद्विजगणौ हस्तहारौ पततः एकं शल्यं कर्ण-ध्वजपटसहितः कंकणमंते कांतं । विंशतिरेकाधिका यत्र पतंति लघुगुरवो द्वादश भवंति दीर्घाः, पिंडीभूता द्वात्रिंशदधिकं शतं फणिभणिता स्रग्धरा भवति मुग्धा ॥ कर्णो द्विगुरुः, गंधो लघुः, हारो गुरुः, वलयं गुरुः, द्विजश्चतुर्लघुः, हस्तः सगणः, शल्यं लघुः, ध्वजो लघुगुरू, कंकणं गुरुः । (G).

२०० । एकविंशत्यक्षरप्रस्तारस्य कानिचित् छंदांस्याह, बे कणा इत्यादि । द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ पततः, एकः शल्यः कर्णो ध्वजपटसहितः कंकणमन्ते कान्तं । विंशति-रेकाधिका यत्र पतति लघुगुरुभ्यां द्वादश भवन्ति दीर्घाः, पिण्डः द्वात्रिंशदधिकं शतं फणिभणिता स्रग्धरा भवति शुद्धा ॥ यत्र प्रथमं द्वौ कर्णौ, कर्णो गुरुद्वयगणः कर्णद्वयगणेन गुरुचतुष्टयं, गंधो लघुर्हारो गुरुर्वलयो गुरुस्ततो द्विजगणश्चतुर्लघ्वात्मकस्ततः

जहा, ईसा रोस प्पसाद[१]प्पणदिसु[२] बहुसो
सग्ग गंगा जलेहिं
आमूलं पूरिदाए तुहिण कर कला[३]
रुप्प सिप्पीअ[४] रुद्दो[५]।
जोण्हा[६] मुत्ताह[७] लिल्लं णद[८] मउलि[९] णिहि-
त्तग्ग[१०] हत्थेहिँ[११] दोहिं
अग्घं[१२] सिग्घं[१३] व देन्तो[१४] जअइ गिरिसुआ[१५]
पाअ पंकेरुहाणं॥
२०१[१६]॥ स्रग्धरा।

इह्तः सगणो हारो गुरुः पतति, एकः शल्यो लघुः कर्णो गुरुद्वयं, कर्णः कीदृशः ध्वजपटसहितः ध्वजपटो लघुगुरुरूपो गणस्तत्सहितोऽन्ते कंकणं गुरुः कान्तं। एकाधिका विंशतिर्व्वर्णा लघुगुरुभ्यां, द्वादश भवंति दीर्घा गुरवः, पारिशेष्यान्नव लघवः, पिण्डः शरीरं द्वात्रिंशदधिकशतमात्रात्मकं छंदः समुदायेन भवति, इयं शुद्धा स्रग्धरा फणिभणिता॥ अत्र सप्तसु वर्णेषु यतिः, पुनः सप्तसु

२०१। १ प्पसइ (C). २ प्पसतिसु (B). ३ कला (A), गणा (B). ४ Dropt in (B), सिप्पीष (C), सीप्पीष (E). ५ रुद्दो (B), रुदो (E). ६ जोणा (A & B), जोण्हा (E). ७ मोत्ताह (B, C & E), मुत्तह (F). ८ णअ (B), णच (C), पणइ (F). ९ मोउलि (E), मुलि (F). १० णिहित्ताग्ग (C). ११ हत्थेहिँ (A), त्यं (E). १२ अग्गं (B), अच्चं (F). १३ दिग्घं (B), सिग्घे (E), सिग्घं (F). १४ देन्तो (B), देन्तो (C), वे देंतो (E), वदेंतो (F). १५ गौरिसुआ (E). १६ २०४ (A).

वर्णेषु यतिः, पुनः सप्तसु वर्णेषु यतिः । उक्तं छन्दःपारिजाते । आदौ मो रस्ततो भस्तदनु च नगणः स्याद्यकारस्ततो यौ, सप्ताश्वाश्वैर्विरामः फणिपतिगदिता स्रग्धरेयं प्रसिद्धा । एषा सत्काव्यमुद्रावचनपरिणता मानसानामुदञ्चत्स्रोतोमूर्छत्तरङ्गो भवति कविवयःश्रीः प्रमोदं स्रवन्ती ॥ (H).

२०१ । उदाहरति । ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलैरामूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलयुक्तं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्याम् अर्घ्यं ग्रीष्ममिव दद‌त् जयति गिरिसुतापादपङ्केरुहाणां ॥ ईर्ष्याजन्यो रोषस्तन्निमित्तये प्रसादस्तदर्थं प्रणतिषु, चन्द्रकलेव शुक्तिपात्रं । अर्थान्तरानुकर्षमाह, ज्योत्स्नेति मत्वर्थे नप्रत्ययः, इवार्थे बप्रत्ययः । (C).

२०१ । स्रग्धरामुदाहरति, ईसेति । ईसा रोस पसाद पणदिसु—ईर्ष्यारोष[प्र]सादप्रणतिषु ईर्षया यो रोषस्तन्निवृत्तये यः प्रसादस्तन्निमित्तं याः प्रणतयस्तास्वित्यर्थः बहुसो सग्ग गंगा जलेहिं—बहुशः स्वर्गंगंगाजलौघैः आमूलं पूरिदाए—आमूलं पूरितया तुहिण कर कला रुप्प सिप्पीअ—तुहिनकरकलारौप्यशुक्त्या गो[गिरि]सुआ पाअ पंकेरुहाणं—गिरिसुता[पाद]पंकेरुहयोः दोहिं—द्वाभ्यां णद मौ[मउ]लि णिहित्ताग्ग हत्थेहिं दोहिं—नतमौलिनिहिताग्रहस्ताभ्यां, द्वाभ्यां जोण्हो[ण्हा] मोत्ताह लिल्लं—ज्योत्स्नायुक्तं [मुक्ता]फलयुक्तम् अग्घं गोग्घं देन्तो व—[अर्घ्यं ग्रीष्मं] ददद्‌िव रुद्दो—रुद्रः जअइ—जयति ॥ स्रग्धरा निवृत्ता । (E).

आइहि जत्थ[1] पाअगण[2] पअलिअ ओहल[3] अंत धरीजे[4]
काहल सद्द गंध इअ मुणि गण[5] कंकण अंत[6] करीजे ।
सद्दइ एक्क[7] भेरि[8] चलु[9] णरवइ फुक्कइ[10] संख[11] सुभव्वा[12]
चामर जुग्ग अंत अहि[13] पअलिअ
एहु[14] णरेंदउ[15] कव्वा[16] ॥ २०२[17] ॥

२०१ । यथा । ईर्षारोषप्रसादप्रणतिषु बहुशः स्वर्गगंगाजलैरामूलं पूरितया तुहिनकरकलारौप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलितं प्रणतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्यामर्घं प्रीप्रमिव ददज्जयति गिरिसुतापादपंकेरुहयोः ॥ (G).

२०१ । उदाहरणमाह, ईसा रोस इत्यादि । ईश्वरीरोषप्रसाद-प्रणतिषु बहुशः स्वर्गगंगाजलैरामूलं पूरितया तुहिनकरकला-रूप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलाढ्यं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्याम् अर्घं प्रीप्रं ददत् जयति गिरिसुतापादपङ्केरुहयोः ॥ कर्पूरमञ्जरीनाटकस्थं । (H).

२०२ । आदौ यत्र पादगणः प्रकटितः जोहलोऽन्ते ध्रियते, काहलशब्दगन्धशब्दवाच्या लघवस्तेषां मुनिगणः सप्त लघवः कंकणं

२०२ । १ जत्थ (A). २ भगण गण (A). ३ जोहलु (B), जोहणु (C). ४ धरीजे (A, B & C). ५ एम दिअगण (A), इ मुणिगण (B), मुइ मुणिगण (C). ६ ताह (A & B), तार्इ (C). ७ एक (C). ८ भेरी (E). ९ चल (E & F). १० फुक्कउ (A), फुक्कव (B & C). ११ सद्द (A), सद्दूव (C). १२ सुहव्वा (B & C). १३ जह (E & F). १४ एह (A), जेह (B). १५ णरिंदउ (A & E), णरेंदह (B), णरेन्द (C). १६ कंदा (E & F). १७ २०४ (A).

क्रियते चारः। शब्द्यते भेरी चलितो नरपतिः फुत्क्रियते शङ्खः सुभव्यश्चामरयुगं यत्रान्ते प्रकटितं तन्नरेन्द्रकाव्यं ॥ शब्द्यते कथ्यते, फुत्क्रियते उच्यते, काव्यं छन्दः। तथाच यदा नरेन्द्रो गच्छति, तदा पदातियोधाः काहलशब्दसुगन्धिकङ्कणान्यनुसरन्ति, भेरी शब्द्यते, अन्यो नरपतिरनुगच्छति, शङ्खः फुत्क्रियते, चामरयुगं प्रकटीक्रियते। (C).

२०२। अथैकविंशत्यक्षरचरणस्य वृत्तस्य विंशत्युत्तरशतद्वयाधिकचत्वारिंश[एकोनविंशत्युत्तरपंचशताधिकपंचाश]त्सहस्रोत्तरचतुर्थंचतमं [४५०५१९] भेदं नरेन्द्रनामकं वृत्तं लक्षयति, आइहीति। अत्र — यत्र आइहि — आदौ पाअगण — पादगणो गुर्वादिर्भगण इति यावत् पअलिअ — प्रकटितः, अंत — अंते भगणावसाने इति यावत् ओहल — ओहलो मध्यलघुरगण इत्यर्थः धरीजे — ध्रियते स्थाप्यत इति यावत्, ततः काहल सह गंध — काहलशब्दगंधाः एकलघव इत्यर्थः इअ — एते मुणि गण — मुनिगणाः सप्त गणा इति यावत् देया इति शेषः, तथाच रगणानंतरं सप्त लघवः स्थाप्या इति भावः, ताव — ततः सप्तलघ्वनंतरमिति यावत् कंकण — कंकणं गुरुरित्यर्थः करीजे — क्रियते। ततश्च एक्क भेरी[रि] — एका भेरी लघुरित्यर्थः सद्द — शब्दायते स्थाप्यत इत्यर्थः, णरवइ — नरपतिर्मध्यगुरुर्जगणः चल — चलति तिष्ठतीत्यर्थः, सुभव्वा — सुभव्यः संख — लघ्वात्मको-गणः फुक्कर — फुत्क्रियते उच्यते इत्यर्थः जह — यत्र अंत — अंते पादांते चामर जुग्ग — चामरयुगं गुरुद्वयमित्यर्थः पअलिअ — प्रकटितम् एऊ — एतत् णरिंदउ छंदा — नरेंद्रच्छंदः ॥ (E).

२०२ । आईति । आदौ यत्र पादगणः प्रकटितो जोहलोऽंते भ्रियते, काहलशब्दगंधा इति मुनिगणाः कंकणमंते क्रियते । शब्दायते एका भेरी चलति नरपतिरुच्यते शंखः सुभव्यं चामर-युगमंते यत्र प्रकटितमेतन्नरेंद्रच्छंदः ॥ पादो भगणः, जोहलो रगणः, मुनिः सप्त, एवंच सप्त लघवः कार्या इत्यर्थः, कं[कणं] गुरुः, भेरी लघुः क्रियते नरपतिर्जगणः, शंखो लघुः, चामरं गुरुः । (G).

२०२ । आइहि जत्थ इत्यादि । आदौ यत्र पादगणः प्रकथ्यते योधोऽन्ते स्थाप्यते, काहलः शब्दः गंधः एवं मुनिगणः कंकणस्तत्र क्रियते । शब्दायते एका भेरी चलितो नरपतिः फुत्काय्य शंखं सुभव्यं, चामरयुगमंते यत्र प्रकटितमेतत् नरेन्द्रकाव्यं ॥ यत्र आदौ पादगणो भगणः प्रकथ्यते, अन्ते भगणान्ते जोहलो रगणः स्थाप्यते, काहलो लघुः शब्दो लघुर्गन्धो लघुरेवंक्रमेण लघुत्रयं ततो मुनिगणश्चतुर्लघुगणस्तेन सप्त लघव इत्यर्थस्तत्र कंकणं गुरुः क्रियते । एका भेरी शब्दायते लघुः भवतीत्यर्थस्ततो नरपतिर्जगण-श्चलति भवति शंखं फूत्काय्य लघुं स्थापय; शंखं कीदृशं सुभव्यं, चामरयुगमन्ते प्रकथ्य गुरुद्वयं स्थाप्यं, एतन्नरेन्द्राख्यं काव्यं ॥ अथच यदा नरपतिश्चलति तदादौ पादगणः पदातिगणः प्रकटितो-भवति, योधगणोऽन्ते स्थाप्यते, ततः काहलशब्दः, कर्पूरागुरु-सारादेर्गन्धः, मुनिगणा द्विजा आशीर्वादपुरस्सरमग्रे चलन्ति, कंकणाद्याभरणं क्रियते, भेरी शब्दायते, शंखफूत्कारो जायते, नरेन्द्रस्य पार्श्वे चामरद्वयं स्थाप्यते ॥ अत्र द्वादशसु वर्णेषु यतिः, पुनर्नवसु वर्णेषु यतिरथवा चयोदशसु वर्णेषु यतिरष्टसु वर्णेषु

जहा, फुल्लिअ[1] केसु चंद[2] तह पअलिअ[3]
मंजरि तेज्जइ[4] चूआ
दक्खिण वाउ[5] सीअ[6] भइ पवहइ[7]
कंप बिओइणि[8] हीआ ।
केअइ[9] धूलि सब्ब दिस[10] पसरइ[11]
पीअर[12] सब्बउ भासे
आउ[13] बसंत काइ[14] सहि[15] करिअइ[16]
कंत ण थक्कइ[17] पासे ॥
२०३[18] ॥ नरेन्द्रः ।

यतिः । उक्तं छंदःपारिजाते । भं रचयाथ रेफनयुगलकमथो अयुगं च यकारं, पिंगलनाग[राज]निगदितमिह वर्णनरेन्द्रमुदारं । भानुविराममेतदथ तदपरवर्णविरामविकल्पं, ग्रहनवाष्टकान्यतरदिति कुरु वेह विभाति सुकल्पं ॥ (H).

२०३ । [उदाहरति] फुल्लं किंशुकं, चन्द्रस्तथा प्रकटितः, मञ्जरिं त्यजति चूतः, दक्षिणो वातः शीतो भूत्वा प्रभवति, कम्पते वियोगिनीहृदयं । केतकीधूलिः सर्व्वदिक्षु प्रसारिता सर्व्वं पीतं भासते,

२०३ । १ फुल्लिअ (E & F). २ चंपअ केसु (A). ३ विअसिअ (A), पअलिअ (C). ४ तज्जइ (C). ५ वाअ (B & C). ६ सिअल (A). ७ पवअइ (B), परवइ (C). ८ बिओइणि (F). ९ केअहि (B), केअइ (F). १० दिवे दिवे (A). ११ पसरिअ (B & C). १२ Dropt in (B), पीअर (F). १३ आइ (A & B). १४ काहि (B), काहि (C). १५ सखि (F). १६ करिअउ (A), करिअइ (B & C). १७ लाग (F). १८ २०९ (A).

विज्जूमाला आई[१] पाए तिअ दिअगण[२] तह बहु[३]गुण जुत्ता
अंते कण्णा सुद्धा वण्णा[४] भण फणिवइ कइवर[५] गुण[६]जुत्ता ।[७]
जं बत्तीसा मत्ता थक्के पअ पअ पअलिअ लहु[८] गुरु[९] सोहा
एसो[१०] हंसी णामा[११] छंदो[१२]
सअल विबुहअण किअ मण[१३]मोहा[१४] ॥ २०४[१५] ॥

---

आगतो वसन्तः सखि किं करवाणि कान्तो न तिष्ठति पार्श्वे ॥ सुवर्णकेतकी वसन्ते स्फुटतीति । (C).

२०३ । नरेंद्रमुदाहरति, फुल्लिअ इति । केसु — किंशुकं फुल्लिअ — पुष्पितं तह — तथा चंद — चंद्रः पअलिअ — प्रकटितः*** (E).

[Here four leaves are wanting in the MS. (E).—Ed.]

२०३ । यथा । पुष्पितं किंशुकं, चंद्रस्तथा प्रकटितः, मंजरीं त्यजंति चूताः, दक्षिणवायुः शीतो भूत्वा प्रवहति, कंपते वियोगिनीहृदयं । केतकीधूलिः सर्वदिक्षु प्रसरति, पीतं सर्वमपि भासते, आगतो वसंतः किं सखि क्रियते, कांतो न तिष्ठति पार्श्वे ॥ (G).

२०३ । उदाहरणमाह, फुल्लिअ इत्यादि । फुल्लितं किंशुकं, चंपकं प्रकटितं, मंजरी गृहीता चूतैर्दक्षिणो वातः शीतो भूत्वा वहति, कम्पते वियोगिनीहृदयं । केतकीधूलिः सर्वासु दिक्षु

---

२०४ । १ पाए (A). २ दिअअण (C). ३ विउ (B & C). ४ दिज्जे धण्णा (F). ५ करिवर (A). ६ म (A). ७ Second quadrant dropt in (C). ८ and ९ transposed in (B & C). १० एसा (A). ११ णामा (A). १२ चन्दो (C). १३ बुहो पअ मअह पअ (A), बुहअ पअ महुअअ (B), बुधअ भअह अअह (C). १४ सोहा (B & C). १५ २०७ (A).

प्रसरति, पीतं सर्वं भासते, आगतो वसंतः किं सखि कर्त्तव्यं कांतो-
न तिष्ठति पार्श्वे ॥ सुवर्णकेतकीविकाशो वसन्ते । एकविंशत्यक्षर-
प्रस्तारस्य विंशतिर्लक्षाणि सप्तनवतिसहस्रं द्विपञ्चाशदधिकमेकशतं
भेदास्तेषु भेदद्वयमुक्तं, शेषभेदाः स्वयं ज्ञातव्याः । (H).

२०४ । अथ [द्वा]विंशत्यक्षरा ॥ विद्युन्माला[या] आगते[दि] पादे
त्रयो द्विजगणाः तथा बहुगुणयुक्ताः, अन्ते कर्णौ दीयते धन्यो-
भणति फणिपतिः कविर्बहुगुणयुक्तः । यत्र द्वाविंशन्मात्रास्तिष्ठन्ति
पदपदप्रकटितलघुगुरुशोभाः, एतत् हंसीनामच्छन्दः सकलसुकवि-
जनमनोहरशोभं ॥ (C).

२०४ । अथ द्वाविंशत्यक्षरा आकृतिः ॥ विद्युन्माला आदिपादे
त्रयो द्विजगणास्तथा बहुगुणयुक्ताः, अंते कर्णौ दीयते धन्यो भणति
फणिपतिः कविवरो गुणयुक्तः । यत्र द्वाविंशन्मात्रास्तिष्ठंति प्रकटित-
लघुगुरुशोभाः, एतद्धंसीनामच्छंदः सकलविबुधजनकृतमनोमोहं ॥
द्विजश्चतुर्लघुः, कर्णौ द्विगुरुः । मो मो गो गो विद्युन्माला । (G).

२०४ । द्वाविंशत्यक्षरप्रस्तारस्य भेदमेकं दर्शयति, विद्युन्माला
इत्यादि । विद्युन्मालाया आदौ पादस्त्रयो द्विजगणास्तत्र बहुगुण-
युक्ताः, अन्ते कर्णः शुद्धवर्णः भणति फणिपतिः कविवरगुणयुक्तः ।
यत्र द्वाविंशन्मात्रास्तिष्ठन्ति पदपदप्रकटितगुरुलघुशोभाः, एतद्धंसी
नाम च्छंदः सकलबुधजनमनोहरशोभा ॥ यत्रादौ विद्युन्माला-
च्छन्दसः पादस्मरणं तेनाष्टगुरवस्ततस्त्रयो द्विजगणाश्चतुर्लघ्वात्मकाः
दादश लघवइत्यर्थः, कीदृशा बहुगुणयुक्ताः, अन्ते कर्णौ गुरुयुगरूपः
कीदृशः शुद्धवर्णः, फणिपतिः कीदृशः कविवरगुणयुक्तः, द्वाविंश-

जहा, ऐत्ताणंदा उग्गे[1] चंदा
धवल चमर[2] सम सिअ कर[3] बिंदा
उग्गे[4] तारा तेआ हारा[5]
बिअसु[6] कुमुअ बण[7] परिमल कंदा।
भासे कासा सव्वा आसा[8]
महुर[9] पवण लहु लहिअ[10] करंता[11]
हंसा सद्दे[12] फुल्ला बंधू[13]
सरअ[14] समअ सहि हिअअ हरंता[15] ॥
२०५[16] ॥ हंसी।

स्त्रामा: कीदृश्य: पदपदप्रकटितगुरुलघुशोभा:, हंसी कीदृशी सकलबुधध[ज]नमनोहरत्वेन मोहरूपा ॥ अत्राष्टसु वर्णेषु यतिस्ततश्चतुर्दशसु वर्णेषु यति:। (H).

२०५। उदाहरति। नेत्रानन्द उदितश्चन्द्र: धवलचामरसमसितकरवृन्द:, उदयंति तारा * * विकसित: कुमुदगण: परिमलकन्द:। भासयंति काशा: सर्व्वाशा:, मधुरपवनो लघुर्लघुलं करोति, हंसा: शब्दायन्ते, फुल्लबन्धुक: शरत्समय: सखि हृदयं हरति ॥ (C).

२०५। १ उग्गो (B). २ चामर (A). ३ कर (B). ४ हारा (F). ५ विअस (A). ६ बन (A), गण (C). ७ हारा (F). ८ वउव (B). ९ लच लहिअ (A), लड़ लहिअ (B), लच लहर (F). १० विलासा (F). ११ सहा (A), सहं (F). १२ कुन्द विन्न (B). १३ सरअ (F). १४ सच हरन्ता (B), हिअ रन्ता (C). १५ १०८ (A).

जहि[1] आइहि हत्था[2] करअल[3] तत्था[4]

पाअ लहु[5] जुअ कणगणा

ठवि चामरआ[6] काहलजुअ बंका[7]

सल्ल पहिल्लइ[8] बेवि गणा।

पअ अंतहि सक्को[9] गण पभणिज्जे[10]

तेइस बस पमाण किआ[11]

दुअ[12] मत्तहि[13] पोमावइ[14] पभणिज्जे[15]

बलहि सुंदरिआ भणिआ॥ २०६[16]॥

---

२०५। यथा। नेत्रानंद उदेति चंद्रो धवलचमरसमसितकर-वृंदः, उदयंति तारा: तेजःधारा:, विकसति कुमुदवनं परिमल-कंदं। भास[यं]ते काशा: सर्वा आशा:, मधुर: पवनो लघु लभते विलासान्, हंसा: शब्दायंते, फुल्लंति बंधूकानि, शरत्समय: सखि हृदयं हरति॥ (G).

२०५। उदाहरणमाह, णेत्ताणंदा इत्यादि। नेत्रानन्द उदेति चन्द्र: धवलचामरसमश्वेतकरवृंद:, उदितास्तारास्तेजसामाधारा:, विकसितं कुमुदवनं परिमलकन्दं। भासन्ते काशा: सर्व्वाशासु

---

२०६। १ जइ (B & C). २ हत्था (A). ३ करच (A). ४ तच्छा (A). ५ लड (F). ६ चामरचं (A), चामर (C)., ७ बद्धा (B). ८ पचहिच (A), वेहिचिच (B), बहिहिच (C). ९ सद्धा (F). १० पभणिज्जइ (F). ११ पमा-णिपा (F). १२ एड (B, C & F). Here ए should be read as short, Vide श्लोक ४, p, 7. १३ मत्तह (A). १४ पउमावइ (A), पाचावइ (B & C). १५ च भणिज्जे (F). १६ १०८ (A).

मधुरः पवनो लहलहितो वहति, हंसाः शब्दायंते, फुल्लं बंधूक पुष्पं, शरत्समयः सखि हृदयं हरति ॥ कीदृशश्चन्द्रः धवलचामर सदृशश्वेतमयूखसमूहः, लहलहिम इत्यनुकरणं मन्दं मन्दमित्यर्थः।

[Here the commentator has described a metre, called तुरगाकुल or मदिरा, with examples of his own making both in प्राकृत and संस्कृत This has been mentioned in Ghosha's Compendium, p. 99]

द्वाविंशत्यक्षरप्रस्तारस्य एकचत्वारिंशल्लक्षाणि चतुर्नवतिसहस्र चतुरधिकं शतत्रयं भेदास्तेषु भेद एकः प्रदर्शितः, शेषभेदाः स्वयं बोद्धव्याः। (H).

२०६। यत्रादौ हस्तः करतलं तथा पादः लघुयुगं कर्णगणः धृत्वा चामरं काहलयुगं वक्रः शल्यं वहिर्दत्त्वा गणद्वयं लघुद्वय मित्यर्थः। पदान्ते शक्रगणः त्रयोविंशतिवर्णाः प्रमाणीकृताः, द्वा मात्राभिः पद्मावती प्रभणिता वर्णैः सुन्दरी भणिता ॥ शक्रगण आद्यन्तगुरुः षट्कलः, मात्राभिरिति द्वात्रिंशन्मात्रा पद्मावती [Vide श्लोक १४४, p. 242.—Ed] आदौ सगणौ द्वौ, गणास्त्रयः सगणा अन्ते, भगणः सगणः कर्णगणो मध्ये त्रयः पतन्ति। (C).

२०६। अथ त्रयोविंशत्यक्षरा विकृतिः ॥ यत्रादौ हस्तः करतलं तथा पादौ लघुयुगं कर्णगणं—स्थापय चामरकाहलयुगं, वक्रः शल्यं पुरस्क्रियेते द्वावपि। गणः पादांते शक्रगणः प्रभण्यते त्रयोविंशति वर्णाः प्रमाणकृताः, एतन्मात्रा हि पद्मावती च भण्यते वर्णैः सुंदरी भणिता ॥ हस्तः करतलं च सगणः, पादो भगणः, कर्णो द्विगुरु चामरं गुरुः, काहलं लघुः, वक्रो गुरुः, शल्यो लघुः, शक्रो गुरु लघुद्वय-गुरुरूपः। पद्मावतीवत् द्वात्रिंशत् संख्याः। (G).

आइहि सगणा बेवि गण तिज्जे सगणा अंत।
भगणा सगणा कण्णगण मज्झे तिण्णि पलंत॥ २०६ (क)॥*

दोहा।

---

२०६। चयोविंशत्यक्षरप्रस्तारस्य भेदमेकं, प्रदर्शयति, जहि आइ इत्यादि। यचादौ हस्तः करतलस्ततः पादो लघुयुगं कर्णगणः संस्थाप्य चामरकं काहलयुगं वक्रः शल्यौ प्रथमतः द्वौ ** शक्रगणः प्रभण्यते चयोविंशतिर्व्वर्णाः प्रमाणीकृता एतन्माचायां पद्मावती प्रभण्यते वर्णैः सुंदरिका वर्णिता॥ यचादौ हस्तः सगणस्ततः करतलः सगणस्ततः पादगणो भगणस्ततो लघुयुगं ततः कर्णगणः गुरुयुग्मगणः संस्थाप्य चामरकं गुरुं ततः काहलयुगं लघुयुगं ततो वक्रो-गुरुस्ततः पहिलिम्र—प्रथमतः शल्यद्वयं पहिलिम्र—प्राप्तं शल्यद्वयं वा लघुद्वयं प्राप्तं। पादान्ते शक्रगणः षट्कलप्रस्तारस्य चतुर्थो भेदः [Vide Gloss (G), p. 24.—Ed.] स चाद्यन्तगुरुर्मध्यलघुद्वयघटितः, चयोविंशतिर्व्वर्णाः प्रमाणीकृताः पदे इत्यर्थः, एतत् छंदो माचावृत्ते पद्मावती प्रभण्यते, वर्णवृत्ते सुंदरी वर्णिता। इत्युक्तगणैर्वर्णवृत्ते भवति सुंदरी। माचावृत्ते नेयं लीलावती जगणाभावात्। (H).

* [This śloka is found in MS. (F), and its Gloss (G), but not in any of the other MSS.—Ed.]

२०६ (क)। अथास्यैव प्रकारांतरं दोहावृत्तेनाह, आईति। आदौ सगणौ द्वावपि गणास्त्रयः सगणा अंते। भगण-सगण-कर्णगणा मध्ये चयः पतंति॥ (G).

जहा, जिण[1] वेअ[2] धरिज्जे महिअल लिज्जे[3]
पिट्ठिहि दंतहि ठाउ धरा
रिउ[4]वच्छ[5] विआरे[6] छलतणु[7] धारे[8]
बंधिअ[9] सत्तु सुरज्जहरा[10] ।
कुल[11]खत्तिअ तप्पे दहमुह[12] कप्पे[13]
कंसअ केसि विणासकरा
करुणा पअले मेछह[14] विअले[15] सो[16]
देउ णाराअण[17] तुम्ह[18] वरा ॥
२०७[19] ॥ सुंदरी ।

---

२०७ । उदाहरति । येन वेदा ध्रियन्ते, महीतलं गृह्यते पृष्ठे, दन्ते स्थाप्यते धरा, रिपुवक्षो विदार्य्यते * * * बध्यते शत्रुः सुरराज्यहरः । क्षत्रियकुलं ताप्यते, दशमुखः कर्त्यते, कंसकेशिविनाशः क्रियते, करुणा प्रकाश्यते, म्लेच्छा विघात्यन्ते, स ददातु नारायणस्तुभ्यं वरान् ॥ सुरराज्य इत्यत्र रेफयोः लघुपठनादैक्यं बोध्यम् । [Vide श्लोक ८, p. 11.—Ed.] (C).

---

२०७ । १ जवि (A), जविव (B), जिवि (C). २ विच (B), वेद (F). ३ लिज्जे (B & C). ४ Dropt in (B), ठिउ (C). ५ Dropt in (B). ६ विआरि (A). ७ छलतव (A), च्छलतनु (C). ८ धारी (B). ९ बंधिच (B & C). १० सुरज्जधरा (A), स रज्जहरा (B), रज्जहरा (C). ११ कुच (A). १२ दहमुख (B). १३ कंपे (A). १४ मेच्छउ (B), मच्छह (C). १५ विदले (A). १६ से (B & C). १७ नराइन (F). १८ तुम्ह (A). १९ २१० (A).

दुमिलाइ पञ्चासउ[1] वस्स विसेसहु[2]
दीस[3] फणिंदह चारुगणा
भणु[4] मत्त बतीसह[5] जाणह[6] सेसह
अट्ठह[7] ठाम[8] ठई[9] सगणा ।
गण[10] अस्स ण दिज्जइ[11] कित्ति लहिज्जइ[12]
लग्गइ दोस अणेअ[13] परा[14]
कइ तिण्णि[15] बिरामह[16] पाअह[17] पाअह[17]
ता दह[18] अट्ठ[19] चउद्दहही[20] ॥ २०८[21] ॥

२०७। यथा। येन वेदा भ्रियंते, महीतलं गृह्यते पृष्ठे, दंते स्थाप्यते धरा, रिपुवक्षो विदार्यंते, छलतनुधारिणा बध्यते प्रभुः सुराज्यहरः। कुलं क्षत्रियाणां तापितं, दशमुखः कर्त्तितः, कंसकेशिविनाशः कृतः, करुणा प्रकटिता, म्लेच्छा विदारिताः, स ददातु नारायणो युष्माकं वरान् ॥ (G).

२०७। उदाहरणमाह, जहि वेअ धरिज्जे इत्यादि। येन

२०८। १ पञ्चासचि (A), पञ्चासइ (F). २ विसेसहि (A), विसेसह (F). ३ दीस (A), दक्ख (F). ४ भण (F). ५ बत्तीसह (A). ६ जाणिअ (A), जणिअ (F). ७ अट्ठह (B & C), अट्ठाण (F). ८ ठाइ (A), ठि (F). ९ जं (F). १० मणु (F). ११ किज्जइ (B & C). १२ ण लब्भइ (B), ण किज्जइ (C), सुणिज्जइ (F). १३ अणेअ (B & C). १४ करो (A), परि (F). १५ तीणि (A). १६ विरामहि (A), बिरामइ (B & C). १७ पाअहि (A). १८ कर (C). १९ अह (B & C). २० चउद्दहरो (A), चउद्दसरो (B), चउद्दहरो (C). २१ १११ (A).

वेदो धृतः, महीतलं गृहीतं पृष्ठे, दंताभ्यां स्थापिता धरा, रिपुवचो-विदारितं, छलतनुं धृत्वा बद्धा शत्रु सुराज्यं हृतं। कुलं चत्रियाणां तापितं, दशमुखानि कर्त्तितानि, कंसकेशिविनाशकरः, करुणा येन प्राप्ता, म्लेच्छाः येन विदलिताः, स ददातु नारायणस्तुभ्यं वरं॥ रिपुवचो हिरण्यकशिपुवचः, छलतनुं वामनरूपं, शत्रुं बलिं, दशमुखानि कर्त्तितानि रावणस्येति शेषः। [The commentator here describes a metre named पूर्वा said to be mentioned elsewhere.—Ed.] त्रयोविंशत्यक्षरप्रस्तारस्य त्र्यशीतिलक्षाण्यष्टाशीति-सहस्राण्यष्टोत्तराणि षट्शतं भेदास्तेषु भेद एको दर्शितः, शेषभेदाः स्वयं ज्ञातव्याः। (H).

२०८। अथ चतुर्विंशत्यक्षरा॥ दुर्मिला प्रकाश्यते वर्णविशेषे दृश्यते फणीन्द्रेण चारुगणा भणिताः द्वात्रिंशन्मात्रा स्थाप्ताम् अशेषाः अष्टस्थानेषु स्थाप्यन्तां सगणाः। गणोऽन्यो न दीयते कीर्त्तिर्गीयते लगन्ति दोषा अनेकप्रकाराः, कथ्यन्ते त्रयो विरामाः पादे पादे ते क्रियन्ते अष्ट-षट्-दशसु॥ कीर्त्तिरित्यनन्तरं भवतीति पूरणीयं, यथा वर्णान्त[?] इति, कुत्र विराम इत्यत आह त इति ते विरामाः। (C).

२०८। अथ चतुर्विंशत्यक्षरा संस्कृतिः॥ दुर्मीति। दुर्मिला प्रकाशते वर्णविशेषे दृष्टेण फणीन्द्रेण चारुगणा भणिता मात्रा-द्वात्रिंशदर्पिताः शेषेणाष्टाष्टस्थाने यत्र सगणाः। गणोऽन्यो न दीयते कीर्त्तिर्गीयते लगंति दोषा अनेकप्रकारेण, कथय, त्रयो विरामाः पादे पादे, ते दशाष्ट-चतुर्दशसु मात्रास्विति शेषः॥ (G).

जहा, पहु दिज्जिअ[1] वज्जअ[2] सिज्जिअ[3] टोप्पर[4]
कंकण बाहु किरीट सिरे
पइ[5] कण्णहि[6] कुंडल णं रइ[7]मंडल[8]
ठाविअ[9] हार फुरंत[10] उरे[11] ।
पइ[12] अंगुलि मुद्दरि[13] हीरहि सुंदरि[14]
कंचण[15] रज्जु[16] सुमज्झ[17] तणू
तसु[18] तूणउ[19] सुंदर[20] किज्जिअ[21] मंदर[22]
ठावइ[23] बाणइ[24] सेस धणू ॥
२०९[25] । दुम्मिला ।

---

२०८ । चतुर्विंशत्यक्षरप्रस्तारे भेदद्वयमाह ॥ दुम्मिलाइत्यादि । दुर्मिलां प्रकाशयति वर्णं विशेषयति बीयते फणीन्द्रस्तावगणा-भणिता मात्रा द्वात्रिंशत् ज्ञात्वाऽशेषमष्टसु स्थानेषु भवन्ति सगणाः । गणोऽन्यो न क्रियते कीर्त्तिर्ज्ञायते जगति दोषोऽनन्तः, कृत्वा चैत् विरामान् पादे पादे तावत् दशसु अष्टसु चतुर्दशसु ॥

---

२०९ । १ दिज्जिय (B & C), दिज्जि (F). २ रज्जिय (A), बज्जिवि (F). ३ and ४ टोप्पर मत्थय (A & B). ३ सिहिय (C). ४ सुंदर (F). ५ पवि (A), तय (B), उर (F). ६ कणय (F). ७ संचर (A), नूरर (C), चचरवि (F). ८ मंडल (A). ९ ठाविय (A). १० तुरंत (A). ११ धरो (F). १२ पय (A & B). १३ सुंदरि (A & B), सुहवि (C). १४ सुवरि (B). १५ कङ्कण (B). १६ वन्द (B). १७ सुसज्ज (A), सुसज्ज (B), स (C). १८ तसू (B). १९ तूणय (B & C). २० सुंदरि (A). २१ Dropt in (B), किज्जिय (C). २२ Dropt in (B). २३ ठावय (B & C). २१, २२, २३ and २४ ठावय पावरिं तं वसु सुंदरि (A). २५ २११ (A).

अष्टौ सगणाः पदे पदे क्रियन्ते, अष्टसगणकरणेन कीर्त्तिर्ज्ञायते प्राप्यते सगणातिरिक्तो गणो न क्रियते, यदि सगणं विनान्यो गणः क्रियते तदामंतदोषो लगति, विरामो दशसु मात्रासु पुनरष्टसु मात्रासु पुनश्चतुर्दशसु मात्रासु। वर्णदुर्मिलायां सगणातिरिक्तगण-योगेन मात्रादुर्मिला भवति। [Vide श्लोक १९९, p. 315.—Ed.] (H).

२०९। उदाहरति। प्रभोर्ज्ञायते वक्षः स्पष्टं शिरस्त्राणं कङ्कणं बाहौ किरीटं शिरसि प्रतिकर्णं कुण्डलं नूनं रविमण्डलं स्थाप्यते हारः स्फुरन्नुरसि। प्रत्यङ्गुलि मुद्रा हीरकैः सुन्दरी काञ्चनरज्जुः सुमध्ये तनोः तस्य तूणः सुन्दरः क्रियते मन्दरः स्थाप्यते बाणः शेषधनुषि॥ प्रभोर्महेशस्य, टोपरशब्दः शिरस्त्राणं देशी, वक्षेरिति वज्रमयशिरस्त्राणमित्यर्थः, नूनं निश्चयेन, शेषयुक्ते धनुषि शेषो हि शङ्करधनुषो गुणः। (C).

२०९। यथा। प्रभुणा दत्तं वक्षः स्पष्टं सुंदरं कंकणं बाहोः किरीटं शिरसि स्थापितं कर्णे कुंडलं नवरविमंडलवत् स्थापितो-हारः स्फुरदुरसि। प्रत्यंगुलि मुद्रिका हीरैः सुंदरकांचनरज्जुः सुमध्यतनौ तस्य तूणः सुंदरस्ततो मंदरः बाणः शेषे धनुषि॥ (G).

२०९। उदाहरणमाह, पञ्च दिश्चिश्च इत्यादि। प्रभुणा दत्तं वक्षः स्पष्टं टोप्परं कंकणं बाहौ किरीटः शिरसि प्रतिकर्णं कुंडलकं यथा रविमण्डलं, लुप्तोपमा अथवा रूपकालंकारः, स्थापितो हारः स्फुरदुरसि। प्रत्यङ्गुलि मुद्रिका हीरकाणां सुंदरकाञ्चनरज्ज्वा सुबद्धा तनुस्तस्य तूणो मन्दरः सुन्दरः स्थापितो बाणः नारायणः शेषधनुषि॥ टोप्पर इति शिरस्त्राणवाचको देशीयः। त्रिपुर-दाहोद्यतशिवस्य वर्णनम्। (H).

ठावहु आइहि सक्कगणा तह
सल्ल विसज्जहु वेवि तहा पर
गोउर सहजुअं[1] तह[2] गोउर
एपरि गारह[3] भव्व गणा कर ।
काहल जुग्गल अंत[4] करिज्जसु[5]
एपरि चोविह[6] वस पआसहु[7]
बत्तिस[8] मत्त[9] पअप्पअ[10] लेक्खहु[11]
अट्ठ[12] भआर[13] किरीट बिसेसहु ॥ २१०[14] ॥

२१० । स्थापयित्वा आदौ शक्रगणं तथा शल्यं विसर्ज्जय द्वयमपि भणितं परतो नूपुरशब्द * * भव्यगणान् कुरु । काहलयुगलमन्ते कुरुध्वम् एवं प्रकारेण चतुर्विंशतिवर्णान् प्रकाश्य द्वात्रिंशन्मात्राः पदे पदे लिख अष्टौ भकारान् किरीटे विशेषय ॥ विसर्ज्जय देहि, विशेषय आनीहि । (C).

२१० । ठावेति । स्थाप्यतामादौ शक्रगणस्तथा शल्यौ सर्ज्जय द्वावपि तथा परौ नूपुरं शब्दयुगं पुनर्नूपुरम् एवं परिपाट्या गुरुलघुरूपान् भव्यगणान् कुरु । काहलयुगलमंते कुरुष्व, एवं परिपाट्या चतुर्विंशतिवर्णान् प्रकाशय, द्वात्रिंशन्मात्राः पदे पदे लिखाष्टौ

२१० । १ सहजुआ (F). २ पुण (F). ३ बारह (A), गरड (F). ४ तथ्य (A). ५ ठविज्जसु (B & C). ६ चौविह (A), चौविष (F). ७ पआसउ (B & C). ८ बत्तिष (B). ९ म (A). १० पआपअ (A). ११ लिक्खउ (A), लेक्खह (F). १२ चड (B & C). १३ भआव (C). १४ २११ (A).

जहा, बप्पअ[1] उक्कि[2] सिरे[3] जिणि[4] लिज्जिअ[5]
तेज्जिअ[6] रज्ज[7] बणंत चले बिणु[8]
सोअर सुंदरि संगहि लग्गिअ
मारु[9] बिराध कबंध[10] तहा हणु[11]।
मारुइ मिल्लिअ[12] बालि बिहंडिअ[13]
रज्ज[14] सुगीवह[15] दिज्ज[16] अकंटअ[17]
बंधु[18] समुद्द बिणासिअ[19] रावण[20]
सो तुअ[21] राहव दिज्जउ णिब्भअ[22]॥
२११[23]॥ किरीट[24]।

भगणान् किरीटं विशेषय॥ शङ्कः गुरु-लघुद्वय-गुरुरूपो गणः, शब्दो लघुः, नूपुरं गुरुः, शब्दो लघुः, काहलो लघुः। भगणाष्टकेन किरीटं छन्दो भवतीत्यर्थः। (G).

२१०। ठावऊ आइहि इत्यादि। आपधादौ शङ्खगणं, तथा शब्दं विसर्ज्जय द्वयं, तथा परे नूपुरं शब्दयुगलं तथा नूपुरम्, अनेन

२११। १ पप्पअ (A). २ उक्कि (A & B), चम्म (F). ३ करे (A). ४ जा (B), जिणऊ (C), जिणिर (F). ५ पिज्जिअ (B & C). ६ तज्जिअ (A), dropt in (F). ७ रज्जु (A). ८ पुण (F). ९ एक्कहि between लग्गिअ and मारु (A), मारि (F). १० कमन्ध (B). ११ चसंगअ (A), तथा हणु (B). १२ मिलअ (A). १३ वाण विहंडिअ (A), बालि बहिहिअ (B & C). १४ रज्जु (A & C). १५ सुमोवहि (F). १६ दिज्जि (A). १७ अकंटअ (A & B). १६ and १७ बलहि दिज्जुअ (C). १८ बन्ध (C), बंधि (F). १९ बिणासअहि (A), बिणासिअ (B). २० रावण (B). २१ मच (F). २२ णिब्भअ (B & C). २३ २१४ (A). २४ अहू किरीट (A).

प्रकारेण एकादश भव्यगणान् कुरु । काहलयुगमन्ते स्थापय, एवं-प्रकारेण चतुर्विंशतिवर्णान् प्रकाशय, द्वात्रिंशन्मात्राः पदे पदे लेखय, अष्टौ भकाराः, किरीटं विशेषय ॥ स्थापयादौ शक्रगणं गुरु-लघुद्वय-गुरुरूपं, तथा तस्य परे शब्दद्वयं लघुद्वयं विसर्जय, तस्य परे नूपुरं शब्दयुगं, तथा नूपुरं गुरुं, तथापदेन शब्दद्वयं लघुद्वयम्, अनेन प्रकारेण एकादश गणान् कुरु । अस्यार्थः शक्र-गणानंतरं लघुद्वयं कार्यं, तत एकगुरुरेकगणः लघुद्वयमपरो गणः एतयोरेकादश गणाः क्रमेण कार्याः, ततः सर्वान्ते काहलयुगलं लघुयुगं स्थापय, अनेन प्रकारेण चतुर्विंशतिर्वर्णाः चरणे, मात्राः द्वात्रिंशत्, एतदेव संक्षिप्याह समुदायेनाष्ट भकाराः पादे । (H).

२११ । उदाहरति । पितुरुक्तं शिरसि येन गृहीला त्यक्तं राज्यं वनान्ते चरि[लि]तं, द्वे सोदरसुन्दर्यौ सङ्गे लग्ने, मारितो विराधः, कबन्धस्तथा हतः । मारुतिर्मिलितः, बाली विघटितः, राज्यं सुग्रीवहस्ते दत्तं, बद्धः समुद्रः, विनाशितो रावणः, स तव राघवो-ऽभयं ददातु ॥ (C).

२११ । यथा । पितुराज्ञा शिरसि येन गृहीता, त्यक्त्वा राज्यं वनांते चलितं पुनः, सोदरसुंदर्यौ संगे लग्ने, मारितो विराधः, कबंधस्तथा हतः । मारुतिर्मिलितो बालिर्विखंडितो राज्यं सुग्रीवाय दत्तमकंटकं, बद्धः समुद्रो विनाशितो रावणः, स मम राघवो-ददातु निर्भयं ॥ (G).

२११ । उदाहरणमाह, चप्पद इत्यादि । पितृभक्तिः शिरसि

येन गृहीता, त्यक्त्वा राज्यं इष्टवसितो वनं, सोदरसुंदर्यौ संगे कृत्वा, हतो विराधः, कबन्धः तत्र हतः। मारुतिर्मिलितः, वाली व्यापादितः, राज्यं सुग्रीवाय दत्तमकण्टकं, बद्धा समुद्रं विघातितो रावणः, स तुभ्यं राघवो ददातु निर्भयं ॥ सत्यम इति वर्णिकवृत्ती कामधेनू। वप्पशब्दः पितृवाचको देश्यीयः, सोदरो लक्ष्मणः, सुंदरी सीता। चतुर्विंशत्यक्षरप्रस्तारस्य एका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशाधिकं शतद्वयं भेदास्तेषु दिङ्मात्रमुदाहृतं, शेषभेदाः स्वयमवगन्तव्याः। यद्यपि षड्विंशत्यक्षरपर्यन्तानि वृत्तानि भवंति, तथाप्यस्मिन् ग्रंथे ग्रंथकारेण चतुर्विंशत्यक्षरपर्यन्तानि वृत्तानि प्रोक्तानि, पञ्चविंशत्यक्षरसंख्यापि विषमेति न समाप्तिः कृता, षड्विंशत्यक्षरच्छंदसि सत्यवचसा पिंगलनागेन भुजंगविजृम्भितमिति [Vide Ghosha's Compendium, p. 101.—Ed.] छंदसो नामच्छलेन गरुडाग्रे भुजंगेन पिंगलेन विजृम्भितं गतमित्युक्त्वा समुद्रे प्रविष्टं, ग्रन्थकारस्योपास्यपिंगलनागस्य गमनममंगलमिति षड्विंशत्यक्षरच्छन्दो [नो]क्तं। तथाच छंदःपारिजाते। आषड्विंशमिमानि स्युश्छंदांसि क्रमशोऽक्षरैः। एकैकवर्द्धितैरूर्द्ध्वं दण्डकाः प्रचितानि च ॥ दण्डकाः स्युर्नरेफाभ्यां प्रचितान्यपरैर्गणैः। च[ण्ड]तरा मिलितास्तत्प्रभृतयो भवन्यास्तथा ॥ तेषामन्योऽन्ययोगाच्च स-माभ्यां चापि कोटिशः। प्रचितानि विवर्तन्ते शेषस्तवेद केवलं ॥ विहाय यगणं शुद्धं गणैरन्यैरशेषतः। षड्विंशादधिकैर्वर्णैर्वृश्यन्ते प्रचितानि च ॥ (H).

कणेअ पढम दिअ सरस सुपअ[1] भुअ
पअहि[2] पलइ[3] तह ठइअ[4] वरं
साणूर[5] सुभणि[6] मणहरणि रअणिपहु-
वअणि कमल[7]दलणअणि वरं[8] ।
बत्तीसह[9] कल[10] पअ[11][ह] ठवह[12] पअलिउ[13]
तह मह[14] करअल[15] दिअ बिलअं[16]
मत्ता[17] बण[18] सुललिअ[19] छउ[20] चउकल किअ[21]
कइ दिणअर[22] भण[23] भुअअ पए[24] ॥
२१२[25] ॥*

---

२१२। अथ जनभिंगद्धरा ॥ कर्णमेकं प्रथमं देहि वरसपदं भुवं पदे पतति स्थापय प्रकटितं * * * तन्मध्ये करतलं तथ

---

२१२। १ पअअ (A, B & C), सुपअ (E). २ पअह (A), पअइ (B & C), पहि (E). ३ पलिअ (A). ४ ठविअ (A, B & C). ५ सणूर (A). ६ भण (F). ७ Dropt in (B & F). ८ परं (C). ९ बत्तीस (B & C). १० मत्त (A). ११ पअ (A & C), dropt in (B). १२ ठवड (A & B), ठव (C). १३ पअलिअ (A), पअलिउ (B), पअलिअउ (C). १४ म (A & B). १५ करअलु (B & C). १६ मअणं (A). १७ मत्त (E). १८ पअ (A), बअ (E). १९ सललिअ (E). २० छअउ (E), छअ (F). २१ किअ (B). २२ कइवर दिणअर (A), कइ दिणअर (E). २३ Non est (A), भण (B). २४ भुअअ पअं (A), भुअ पअअं (B), भुअअ पए (C). २५ २१४ (A).
* साणूर is placed before द्वितीयविभक्ती in MS. (A), but after it, in all the others.—Ed.

विलय: अवसानमित्यर्थः, मात्रावर्णाभ्यां सुललितानि षट्चतुष्कला: कृताः, कविर्दिनकरो भणति भुजगपतिः ॥ (C).

२१२ । अथ शालू[र]नामकं वृत्तं ल[च]यति, कणेक्केति । यत्र पढम — प्रथ[मं] दिअ — दत्तः स्थापित इति यावत् पअहि — पादेषु कणे[क्क] — कर्ण एकः पलइ — पतति, विलअं — विलये पादांते इति यावत् करअल — करतलं गुर्वंतः सगण इति यावत् दिअ — दत्तः, तह मह — तन्मध्ये गुरुद्वयात्मकगण-सगणयोर्मध्ये इति यावत् मत्ता बस सुल[लि]अ — मात्रावर्णसुललिताः छह चउकल — षट्चतुःकलाः किअ — कृताः, एवं च पअ — पदे पअ-लिअ[उ] — प्रकटिताः बत्ती[स]इ कल — द्वात्रिंशन्मात्राः ठवह — स्थापय, हे मणहरणि — मनोहरणि रअणिपहुवअणि — [र]जनी-प्रभुवदने कमलदलनयने सरस सुपअ — सरससुपदं रसैः लघुभिः सहितानि शोभनानि पदानि यस्य तत्तथा तह — तथा वरं सम्यक् यथा स्यात्तथा ठइअ — स्थापितं तत् धुअ — ध्रुवं निश्चितं वरं — वृत्तश्रेष्ठं शालूर — शालूरनामकं वृत्तं भण — कथय इति कइ दिणअर — कविर्दिनकरः भुअअ पइ — भुजगपतिः भणि — भणति ॥ कर्णानन्त[रष]ट्चतुःकलोत्तरसगणरचितचरणः शालूर इति फलितार्थः । (E).

२१२ । अथैकोनत्रिंशदर्णं शालूरमाह, कण्ण इति । कर्ण एकः प्रथमं दत्तः सरससुपदं ध्रुवं पदे पतति, तथा स्थापितं वरं, शालूरं सुभग मनोहरे रजनिप्रभुवदने कमलदलनयने वरं । द्वात्रिंशत् कलाः पदे स्थापय प्रकटितास्तन्मध्ये करतलं देहि

जहा, जं फुल्लु कमलवण बहइ लहु पवण
भमइ[1] भमरकुल[2] दिसि विदिसं[3]
झंकार पलइ[4] वण रवइ[5] कुहिल[6]गण
विरहिअ हिअ[7] हुअ दर[8] विरसं ।
आणंदिअ जुअजण उलसु[9] उठिअ[10] मण
सरस णलिणि दल किअ सअणा[11]
पअलु[12] सिसिर रिउ[13] दिअस[14] दिहर[15] भउ
कुसुम समअ अवतरिअ वणा[16] ॥
२१३[17] ॥ सालूर ।

---

विलये, मात्रावर्णसुललितं षट्चतुःकलं कृतं, कविदिनकरो भणति भुजगपतिः ॥ कर्णो द्विगुरुः, सुभण कथय, तन्मध्ये कर्णसगणयोर्मध्ये, करतलं सगणः, विलयः पादांतः । (G).

२१२ । प्रचितकमप्यन्यदाह, कर्णेक इत्यादि । कर्ण एकः प्रथमं द्विजाः सरसपदाः ध्रुवं पदे पतन्ति, तत्र संस्थाप्य वरं शालूरं सुभणितं मनोहरे गजवरगमने कमलदलनयने वरं । द्वात्रिंशत्कलाः

---

२१३ । १ भमउ (A), Non est (E & F). २ भमरकुल (E), भमरकुलल घव (F). ३ विदिस दिसं (A), दिस विदिसं (B). ४ पलइ (E). ५ चरइ (A). ६ कोकिल (A), कोइल (E & F). ७ विरहि हिअ (A, B & C). ८ तवचव (A), चभव चव (B), भव चव (C). ९ उलस (B), उलसि (E & F). १० रहह (A), सुवळ (B), रभस (C). ११ पिचमणा (B). १२ पलहि (A & C). १३ चाउ (A), उ (E). १४ दिवस (B & C). १५ दिघर (E). १६ अवचरि वणा (A), अवचरिअ वणा (B & C). १७ २१६ (A).

कला: प्रकल्प स्थापय पदे पदे करतलकृतवलयं मात्रासुललितं षट्-चतुःकला: कृता:, कविर्दिनकरो भणति सर्वभुवनपरं ॥ प्रथममेक: कर्ण: ततो द्विजा:, कियन्तो द्विजा इत्याह छउ चउक्कल इति षट्चतुःकलास्तत: करतलमंते देयं । अस्यार्थ: आदौ गुरुद्वयं देयं तत: षट्चतुर्संख्यात्मकगणास्तत: सगण:, एवंप्रकारेण शालूरं नाम छन्दो भवति । अथाष्टसु वर्णेषु यति: पुनरष्टसु यति: पुनस्तयो-दशसु वर्णेषु यति: । उक्तं छंद:पारिजाते । आदिस्थितनगणकमथ वसुनगणकमवसितियुतल[घु]गुरुकलितं, पूर्वं गजकृतयति तदनु वसु-विरति तदनु [च] दशनदशकविरतं । शालूरमभिलपति सकल-भुजगपति-रभिलपति[-रभिनव]रसपरिचयललितं, धत्ते विभव-मधिकमपि सुभविकमपि यश इह वितरति [कवि]भणितं ॥ (H).

२१२ । [उदाहरति] यत् फुल्लं कमलवनं वहति लघुपवन: भ्रमति भ्रमरकुलं दिशि दिशि झङ्कार: पतति वने कोकिलो-रौति, विरहिहृदयं भयेन विरसकरमभूत् । आनन्दितयुवजन-उल्लसितरभसमना: सरसनलिनीदलकृतशयन:, पर्य्यन्त: शिशिरऋतु-र्दिवसो दीर्घोऽभवत् कुसुमसमयोऽवतीर्णो वने ॥ (C).

२१२ । शालूरमुदाहरति जमिति । जं—यत् यस्मात् फुल्ल—[पुष्पितं] कमलवनं वहइ लहु पवण—वाति मन्दपवन: सव दिसि विदिसं—सर्वत्र दिशु विदिशु भमरकुल—भ्रमरकुलस्य झंकार पलइ—झंकार: पतति वण रवइ कोइलगण—वने रौति कोकिलगण: विरहिअ हिअ—विरहिहृदयं दरविरसं—भय-विगतरसं हुअ—जातं । उल्लसि उठिअ मण—उल्लासोत्थितमना:

सब पअहि[1] पढम[2] भण दहअ[3]सुपिअगण भगणा[4]
तह अंता[5] गुरुजुग्गा[6] हत्थ[7] पलंता[8],
पुण[9]विअ गुरुजुअ लहुजुअ वलअ[10]जुअल कर[11]
जंपइ णाआ कइराआ[12] सुंदरकाआ ।
पअ पअ तलहि[13] करहि गअगमणि[14] ससिवअणि
चालिस मत्ता गुरु[15]जुत्ता एहु णिरुत्ता,
गुणिगण[16] भण[17] सब पअ[18] वसु रस[19] जुअ[20] सअ[21]
पअला[22] तिअभंगी[23] सुहसंगी[24] सज्जणसंगी ॥
२१४[25] ॥*

---

सरस णलिणिदल किअ सअणा—सरसनलिनीदलकृतशयनः युवजनः आणंदिअ—आनन्दितः, पलट्ट—प्रत्यावृत्तः निवृत्त इति यावत् सिसिर रिउ—शिशिरऋतुः, दिअस दिहर भउ—दिवसा दीर्घाः जाताः, अतो हेतोः कुसुम समअ अवतरि[अ] वणा—कुसुमसमयः वसंतकाल इति यावत् अवतीर्णो वने ॥ प्राकृतो निवृत्तः । (E).

---

२१४ । १ & २ transposed in (F). २ पढ (B). ३ दहअ (A & F). ४ भगण (B). ५ अन्त (C). ६ गुरुकणा (B & C). ७ हत्था (A). ८ पलाता (A), पलन्ता (B), पलन्ता (C). ९ पुणु (A). १० Dropt in (A), जुअल (C). ११ कर (B & C). १२ कविराआ (C), कविराआ (F). १३ तलहि (A). १४ गजगमनि (B). १५ करहर (A). १६ गुणिगण (A), गुणिभण (B), गुणि ण (C). १७ Dropt in (A & C). १८ पअअ (F). १९ रस (A). २० जुग (A), जुत (F). २१ सअ सअ (B), सअ (C). २२ पअ पअलिअ (A). २३ तिभंगी (A). २४ सुहभंगी (B), सअ भंगी (C). २५ २१७ (A). * Included in the missing pages of (E).

२१३। यथा। यत्फुल्लं कमलवनं, वहति लघुपवनः, भ्रमर-कुलस्य सर्वदिक्षु विदिक्षु झंकारः पतति, वने रौति कोकिलगणो-विरहिहृदयं भवति दरविरसं। आनन्दितयुवजनः प्रोल्लासिस्थिर-मनाः सरसनलिनीदलकिसलय[कृत]शयनः, प्रत्यावृत्तः शिशिर-ऋतुः, दिवसा दीर्घा भूताः, कुसुमसमयोऽवहतो[तीर्णो] वने ॥ (G).

२१३। उदाहरणमाह, जं फुल्ल इत्यादि। यत्र फुल्लं कमलवनं, वहति मधुपवनः, भ्रमति भ्रमरकुलं दिक्षु विदिक्षु झंकारः पतति, वने रौति कोकिलगणः, हृदयं जातं सखि अतिविरसं। आनं-दितो युवजनः, तप्तो विरहिजनः सरसनलिनीदलकृतशयनः, परा-वृत्तः शिशिरऋतुर्द्दिवसा दीर्घा भवंति, कुसुमसमयोऽवतीर्णो वने ॥ कुसुमसमयो वसन्तकालः ॥ (H).

२१४। अथ गण्डकाः। सर्व्वप्रथमं पादे भण दश सुप्रियगणाः, भगणास्तथा अन्ते द्वावपि गुरुकान्तौ हस्तौ बलते, पुनरपि गुरु-युग्मं लघुयुग्मं बलययुग्मं कुरु, जल्पति नागः कविराजः सुन्दर-कायः। पदपदतले कुरु गजगमने शशिवदने चत्वारिंशन्मात्राः गुरुयुक्ता एता निरुक्ताः, गुणिभिर्गणयित्वा सर्व्वपदे वसुरसयुक्ताः शतं, प्रकटिता त्रिभङ्गी सुखाङ्गी * * * शतं मात्राः। पञ्चविंशत्यक्षरे वक्तव्ये कथं चतुस्त्रिंशदक्षराण्युक्तानीत्याह, पञ्च विंश इत्र—पञ्च विंशतिरेखान् वर्णान् शम्भुप्रथमनवकं देहि इति त्रिभङ्गीच्छन्दो-ऽवरपदेऽपि मात्रा इयं, शम्भुच्छन्दसः प्रथमनवाक्षराणि चान्तिम-नवाक्षरदूरीकरणे इयं मात्रा भवतीत्यर्थः। चतुस्त्रिंशदक्षरस्तु दण्डकभेद इति बोध्यम्। (C).

